रः । उत्तुंगवाचएवतरंगायस्यासौतथोक्तः तस्मै मध्वएवदुग्धाब्धिः क्षीरसमुद्रः तस्मै ॥ ५ ॥ सूक्तीति ॥ शोभनाउक्तयएवरत्नानिसूक्तिरत्नानितेषामा-
कर: उत्पत्तिस्थानं तस्मिन् विहरंतःविनोदंकुर्वंतः महीयांसः पूज्यगुरवः त्रिविक्रमाचार्यनामकाः ॥ ६ ॥ वाल्मीकेर्गौःरामायणग्रंथरूपावाक् पुनीयात् शु-
द्धीकुर्यात् । नःअस्मान्महीधरस्य सर्वजगद्धारकस्यहरेःपदंस्वरूपंआश्रयोयस्याःसामहीधरपदाश्रया श्लेषार्थेतुमहीधरइतिपर्वतःतस्यपदंकटकादिस्थानं
आश्रयोयस्याइतिसातथोक्ता यद्दुग्धंयदीयवचनसाररूपंक्षीरमुपजीवंतिआश्रित्यजीवंति रामचरितंकवित्वादिनायद्बलात्कुर्वंतीत्यर्थः । तर्णकाइववत्सा-

स्वांतस्थानंतशय्याय पूर्णज्ञानरसार्णसे ॥ उत्तुंगवाक्तरंगाय मध्वदुग्धाब्धयेनमः ॥ ५ ॥ सूक्ति
रत्नाकरेरम्ये मूलरामायणार्णवे ॥ विहरंतोमहीयांसः प्रीयतांगुरवोमम ॥ ६ ॥ वाल्मीकेर्गौःपुनी
यान्नो महीधरपदाश्रया ॥ यद्दुग्धमुपजीवंति कवयस्तर्णकाइव ॥ ७ ॥ एकोनारायणोग्रेभू त्पू-
र्णोगण्यगुणार्णवः ॥ आत्मारामोपिरमया रममाणोभिरामया ॥ ८ ॥ निद्रामुद्राविलसितं भु-
क्त्वाविश्वमधीश्वरं ॥ तमवंदतवेदांता नरेंद्रमिवबंदिनः ॥ ९ ॥ कृतकृत्योपिभक्तानां भूतयेभग
वानयं ॥ सिसृक्षतिस्मसकलं सुरासुरनरादिकं ॥ १० ॥ वासुदेवोभवद्देवो माययाप्रियययायुतः ॥
सर्वमुर्वारुकमिव मोचयेद्योनिबंधनात् ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥



इव ॥ ७ ॥ एवंस्वेष्टदेवतानमनादिकं विधायकथांवक्तुमारभते ॥ एकइत्यादिना ॥ अग्रेआदिकालेअभूत् स्थितइतिशेषः । आत्मारामःस्वस्वरूपसुखः
अपितथापि तदनुग्रहार्थंरमयालक्ष्म्याअभिरामयामनोहरया ॥ ८ ॥ निद्रामुद्रेति ॥ निद्रैवमुद्राचिन्हमात्रंतयाविलसितमितिविश्वंभुक्त्वासंहृत्यबंदिनःस्तु
तिपाठकाः ॥ ९ ॥ कृतकृत्यइति ॥ भूतयेस्वभावाविर्भावार्थंयथोक्तं सोयंविहारइहमेतनुभृत्स्वभावसंभूतयेभवतीति । सिसृक्षतिस्रष्टुमैच्छत् ॥ १० ॥
माययामायाख्यया सर्वसज्जनमितिशेषः । निबंधनात् नितरांबंधनभूतात्संसारात् ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

संहारी ॥ संहारस्कर्ता जयाख्याजायाभार्यायस्यासातथोक्तः । यत्रसंकर्षणे आज्यकणायितं आज्यबिंदुवद्वर्तमानं ॥ १२ ॥ कृतिप्रकृतिः कृतिनामिकाप्रकृतिर्भार्या यस्यासौतथोक्तः अवैकृतःविकारसंबंधरहितःअप्राकृतःप्रकृतिकार्यरहितः ॥ १३ ॥ शांतिकांतःशांतिनाम्नीकांताभार्यायस्यासौतथोक्तः । शांतिर्भर्त्तेति-वा । स्थितयेपालनाय पंचत्वंमरणंनातिशंक्यतांसर्वथापिनशंक्यतां ॥ १४ ॥ शतंनारायणादिशतरूपःदशशतंविश्वादिसहस्ररूपः । तद्योगैश्वर्यविजृंभि तमित्येकंपदं ॥ १५ ॥ अत्रैगुण्यस्यत्रिगुणसमुदायकार्यरहितस्य गात्रीभवंति । वासुदेवाद्यवताररूपवंतोभवंति ॥ १६ ॥ वैवश्यंपरवशत्वं अपरःजननमर

संकर्षणाख्यःसंहारी जयाजानिरजन्यसौ ॥ यस्योरुज्वलनज्वाल जगदाज्यकणायितं ॥ १२ ॥ कृ-
तिप्रकृतिरप्यासी त्प्रद्युम्नःसर्वसृष्टये ॥ अवैकृतोप्राकृतोपि चित्रंचरितमीशितुः ॥ १३ ॥ शांतिकांतो
निरुद्धोथ जगतःस्थितयेभवत् ॥ एवंपंचात्मनोप्यस्य पंचत्वंनातिशंक्यतां ॥ १४ ॥ दशात्माद्वादशा
त्मासी त्छतंदशशतंचसः ॥ एकोप्यनंतश्चित्रंत द्योगैश्वर्यविजृंभितं ॥ १५ ॥ ज्ञानानंदस्वतंत्रत्व वि-
श्वैश्वर्यादयोगुणाः ॥ अत्रैगुण्यस्यचागण्याः सर्वेगात्रीभवंतिहि ॥ १६ ॥ क्लेशोनाशश्चवैवश्यं ज
न्मादिरपरोपिवा ॥ नादीनवोप्यदीनस्य तस्यक्कापिकथंचन ॥ १७ ॥ वेदवेदांतसहिताः सपुरा
णेतिहासकाः ॥ पंचरात्रसुतर्काद्या एतेष्वर्थेषुसाक्षिणः ॥ १८ ॥ अव्यक्तोव्यक्तमसृज द्गुणान्वि-
षमतांनयन् ॥ महांतमप्यहंकारं त्र्याख्यंभूतेंद्रियामरान् ॥ १९ ॥ ॥ ॥ ॥

णादिदुःखादिः आदीनवोदोषः । दोषआदीनवोमतइत्यभिधानं ॥ १७ ॥ इतिहासोभारतं सुतर्कोब्रह्मतर्कःएतेपूर्वोक्तेषुक्लेशराहित्यादिषु ॥ १८ ॥ अ-व्यक्तोहरिःअव्यक्तंजडप्रकृतिंअसृजत् । सृष्ट्यभिमुखीमकरोदित्यर्थः । गुणान्सत्वादीन् विषमतांविषमावस्थास्थितत्वंनयन्प्रापयन् गुणानांसाम्यावस्था खलुप्रलयः महांतंमहत्तत्वं अहंकारंअहंकारतत्वं त्र्याख्यंवैकारि तैजसतामसाख्यं भूतेंद्रियामरान् पंचभूतानितामसाहंकारान् दशेंद्रियाणितैजसाहंकारात् । इंद्रियाभिमानिनोदेवान् वैकारिकाहंकारादितिविभागोद्रष्टव्यः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सदैवतानिअभिमानिदेवतासहितानि यत्नतःप्रयत्नंकृत्वा अंडसृष्टौअंडसृष्टिविषये इतिविषयसप्तमीयंअपांडित्यादसामर्थ्यात् ॥ २० ॥ आयतनंस्थानंई-
दृशंब्रह्मांडात्मकंअत्रजगन्निर्माणे ॥ २१ ॥ सहस्रांगःअनंतावयवःसहस्राक्षइतिवापाठः । सोपिचतुर्मुखोपिसुरासुरनरादिकान् सृष्टवानितियोजना ॥ २२ ॥
अतिविरागिणः अतिविरक्तान् सृष्टौसृष्टिविषये ॥ २३ ॥ ध्यायतःपरमात्मानंचिंतयतःस्रष्टुमनुद्यमंध्यायतइतिवा । अभिमानमयःअहंकाराभिमानी अ-

सदैवतांनितत्वानि तानिसर्वाणियत्नतः ॥ अंडसृष्टावपांडित्या छांर्डिणंशरणंययुः ॥ २० ॥ आत्माविष्टै
र्व्यधात्तत्वैः सआयतनमीदृशं ॥ परिपूर्णस्यनाथस्य करुणैवात्रकारणं ॥ २१ ॥ पुरुषःससहस्रांग श्च-
तुरंचतुराननं ॥ स्रष्टारंसृष्टवान्सोपि देवासुरनरान्व्यधात् ॥ २२ ॥ सनकादीन्मुनीन्सृष्ट्वा योगिनो
तिविरागिणः ॥ सृष्टावनुद्यमान्दृष्ट्वा चुक्रोधोरुक्रमप्रियः ॥ २३ ॥ क्रुध्यतोध्यायतस्तस्य ललाटादुत्थि
तःसुतः ॥ योभिमानमयोरुद्रः सर्गमार्गमबृंहयत् ॥ २४ ॥ मरीचिमुख्यामुनयः प्राणेभ्यःप्राणिनांगुरोः ॥
अजायंतप्रजावृध्यै बीजानीववनस्पतेः ॥ २५ ॥ मरीचेःकश्यपोजज्ञे बीजंसर्वजगत्तरोः ॥ विवस्वांस्तुत-
तोदित्या मरण्यामिवपावकः ॥ २६ ॥ श्राद्धदेवाह्वयोदेवो मनुःसूनुर्विवस्वतः ॥ इक्ष्वाकुमुख्यायत्तंतो न
रेंद्रमणयोबभुः ॥ २७ ॥ हाराणामिवशुभ्राणां भूपानांभूरितेजसां ॥ संतत्यांनायकछायो राजादशरथोभव
त् ॥ २८ ॥ अयोध्यानामनगरी मध्युवाससपार्थिवः ॥ अत्रायतैकछत्रोयः सप्तद्वीपवतींभुवं ॥ २९ ॥

बृंहयत् पूर्णमकरोत् ॥ २४ ॥ प्राणेभ्यःइंद्रियेभ्यःप्राणिनांगुरोः चतुर्मुखस्यवनस्पतेःवृक्षात् ॥ २५ ॥ बीजंबीजभूतःसर्वजगत्तरोःसर्वजगदाख्यवृक्षस्य वि-
वस्वान् सूर्यः ततःकश्यपात् पावकःअग्निः ॥ २६ ॥ यत्तंतौयस्यश्राद्धदेवमनोः तंतौसंततौ नरेंद्रमणयःराजश्रेष्ठाःबभुःअशोभंत ॥ २७ ॥ नायकछायः
नायकरत्नोपमः ॥ २८ ॥ अत्रायत अपालयत त्रैङ्पालनइतिधातुः । एकछत्रःसर्वराजाधिपः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

पालयतिपालनंकुर्वतिसाति अर्थकामविषाणवान् अर्थकामाख्य शृंगवान् चतुष्पात् तपःशौचदयासत्याख्यपादचतुष्टयवान् । मोक्षधुरंधरइत्येकंपदं । मोक्ष-
विषयव्यापाराख्य भारंवहन्नित्यर्थः ॥ ३० ॥ वदान्येनदानशूरेण लक्षितःदृष्टः विमुखः पराङ्मुखः विग्रहार्थीकलहार्थी उन्मुखःअभिमुखः ॥ ३१ ॥ अ-
वैक्षिअदर्शी लोकानभिनंदयतीतिलोकाभिनंदीतस्य ॥ ३२ ॥ त्रय्यांवेदादिसच्छास्त्रेमीमांसकःवेदाद्यर्थविचारकर्ता ॥ ३३ ॥ सर्वत्रराज्यादौ ॥ ३४ ॥
सुताप्तयेपुत्राप्तये प्रसन्नेप्रसादंकृतवतिसाति ॥ ३५ ॥ सुमंत्रतंत्रेषु शोभनमंत्रतंत्रयुक्तेषुमखेषुयज्ञेषु कोविदान्कुशलान् हेसुमंत्रेतिसंबुद्धिः । समेधयेत् सम्यग

तस्मिन्पालयतिक्षोणी मर्थकामविषाणवान् ॥ धर्मश्चतुष्पाद्ववृधे साक्षान्मोक्षधुरंधरः ॥ ३० ॥ वदान्येन
प्रवीरेण तेनकश्चिन्नलक्षितः ॥ प्रतिग्रहार्थीविमुखो विग्रहार्थीतथोन्मुखः ॥ ३१ ॥ अपुत्रत्वंविनाराज्ञः किं
चिन्नावैक्षिदूषणं ॥ लोकाभिनंदिनोयद्व छशांकस्यशशंविना ॥ ३२ ॥ सोप्राप्यतंतुंभार्यासु तिसृष्वप्यन्व
चिंतयत् ॥ तत्वनिर्णयमप्राप्य त्रय्यांमीमांसकोयथा ॥ ३३ ॥ मंत्रिणःससुमंत्रादी नाहूयेत्थममंत्रयत् ॥
अपुत्रत्वज्वरात्तप्तः सर्वत्रारुचिमान्नृपः ॥ ३४ ॥ अश्वमेधेनयक्ष्यामि विश्वनाथंसुताप्तये ॥ ईश्वरेनःप्रसन्ने
किं दुर्लभंभक्तवत्सले ॥ ३५ ॥ सुमंत्रतंत्रेषुमखेषुकोविदान् सुमंत्रहंतानयशीघ्रमृत्विजः ॥ गुरुंवसिष्ठंचस
मेधयेध्रुवं क्षत्रंखलुब्रम्हयथानिलोनलं ॥ ३६ ॥ इतिनिजकनियोगान्मंत्रिणानीतमात्रा न्नरपतिरवलोक्य
ब्राम्हणान्ब्रम्हनिष्ठान् ॥ अनमदनभिमानोभक्तिभारेणभूयो त्द्दिजगदभिरामंवासुदेवंदधानः ॥ ३७ ॥
इति श्रीसंग्रहरामायणे बालकांडे रामांके प्रथमःसर्गः ॥ १ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

भिवर्धयेत् क्षत्रंक्षत्रियकुलमितिद्वितीया । ब्रम्हब्राह्मणकुलमितिप्रथमा ॥ ३६ ॥ इतिनिजकनियोगात्स्वकीयाज्ञायाः आनीतमात्रान् तदैवानीतान् ब्रह्मनि
ष्ठान् वेदनिष्ठान् । परब्रह्मस्थितानितिवा । अनभिमानःराजत्वाद्यभिमानरहितः । जगदभिरामं जगन्मनोहरं दधानःस्मरन्नित्यर्थः ॥ ३७ ॥ सर्गांतसर्वत्र
रामनामांकितपद्यकरणात् कविरात्मनोऽनवरतंश्रीरामचरणस्मरणकरणंप्रकटयति ॥ लिकुचकविवरार्योमूलरामायणार्थानुदहन्दधविद्याभूपणार्योस्यटी
कां ॥ व्यतनुतबुधहृद्यांभावरत्नप्रदीप्तिमिममगमदिहवर्यो बालकांडाद्यसर्गः ॥ १ ॥ ॥ इति बालकांडटीकायां प्रथमःसर्गः ॥ श्रीकृष्णार्पणमस्तु ॥

श्री ॥ तत्रराजसभायां ॥ १ ॥ वाजिमेधस्यअश्वमेधस्य ॥ २ ॥ कांतवदनंप्रसंनमुखं । पुत्रलालसंपुत्रेछावंतं ॥ ३ ॥ यांकथांमुनिसंसदिमुनिसभायां ॥
॥ ४ ॥ विभांडकःविभांडकनामा ॥ ५ ॥ ब्रम्हवर्चससंपन्नंशुभवर्तनवेदाध्ययनादिसंपन्नं । स्याद्ब्रह्मवर्चसंवृत्ताध्ययनर्धिरथांजलिरित्यमरः । लोमपादः

॥ श्रीगुरुभ्योनमः ॥ सुयज्ञोवामदेवश्च जाबालिरुतकश्यपः ॥ वसिष्ठश्चाग्नयइव पंचैतेतत्ररेजिरे ॥ १ ॥
तेषांसपरिवाराणां प्राज्ञानामभ्यनुज्ञया ॥ संबभाराथसंभारान् वाजिमेधस्यभूपतिः ॥ २ ॥ एकांते
कांतवदनं राजानंपुत्रलालसं ॥ सुमंत्रोमंत्रतत्वज्ञः प्रणिपत्येदमब्रवीत् ॥ ३ ॥ अवधारयराजेंद्र
कथ्यमानांकथांमया ॥ सनत्कुमारोभगवान् यामाहमुनिसंसदि ॥ ४ ॥ विभांडकश्चंडतपाः क-
श्यपस्यास्तिनंदनः ॥ भविष्यदृश्यशृंगोस्मां छ्रीमानग्निरिवारणेः ॥ ५ ॥ ब्रह्मवर्चससंपन्नं ब्रह्मच-
र्यरतंमुनिं ॥ लोमपादोंगराजस्तं स्वराज्यंप्रतिनेष्यति ॥ ६ ॥ सारंगशृंगमानेष्य त्वंगनामु
निवेषतः ॥ संवंचयंत्योत्रयदा तदावृष्टिर्भविष्यति ॥ ७ ॥ अनावृष्टिभयोद्विग्नो वृष्टिंलब्ध्वात
तोनृपः ॥ दास्यत्ययंमौल्यामिव शांतानाम्नींनिजात्मजां ॥ ८ ॥ मुनिमेनमुपानीय राजादशरथा
भिधः ॥ यक्ष्यत्यधोक्षजस्तस्य पुत्रोरामोभविष्यति ॥ ९ ॥ रमणीयतरस्तस्य राघवस्ययशोवि
धुः ॥ निराशिष्यत्युरुतमो लोकानानंदयिष्यति ॥ १० ॥ ॥ ॥ ॥ ॥

लोमपादनामा । अंगराजःअंगदेशाधिपः । तंऋश्यशृंगं ॥ ६ ॥ सारंगशृंगं अत्रअंगदेशे ॥ ७ ॥ मौल्यामिववेतनमिव । अयंलोमपादः ॥ ८ ॥ एनंऋ
श्यशृंगं ॥ ९ ॥ यशोविधुःकीर्तिचंद्रः । विधुःसुधांशुःशुभ्रांशुरित्यमरः । तमःअंधकारं ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥

देवगुह्यंदेवरहस्यं तंऋष्यशृंगं ॥ ११ ॥ कोसलेंद्रःदशरथः ॥ १२ ॥ प्रदक्षिणीकृत्यप्रदक्षिणंकारयित्वासरय्वाःसरयूनद्याः यास्मातीरयोध्यायांदृष्टा समदी
क्षतयज्ञदीक्षामकरोत् ॥ १३ ॥ राजराजविभूतिना कुबेरसमविभवेन ॥ १४ ॥ यज्ञवाटंयज्ञशालांप्रजापतेःराज्ञःमहोत्सवोत्सुकदृशः महोत्सवदर्शनेच्छास-
हिताः अस्यदशरथस्य ॥ १५ ॥ परिधीयतांपरिधानंक्रियतांनोनास्ति ॥ १६ ॥ कर्मकांडेषुकर्मविधानेषु वैभांडकविधातृजौऋष्यशृंगवसिष्ठौप्रचक्रतुःप्राग-

इदंसनत्कुमारोक्तं देवगुह्यंश्रुतंमया ॥ तस्मात्वंलोमपादस्य गेहादानयतंमुनिं ॥ ११ ॥ आ-
कर्ण्यवर्णितंतेन वसिष्ठस्याभ्यनुज्ञया ॥ कोसलेंद्रःस्वयंगत्वा तंमुनींद्रमुपानयत् ॥ १२ ॥ क्षो-
णींप्रदक्षिणीकृत्य समानीतेतुरंगमे ॥ सरय्वाउत्तरेतीरे सराजासमदीक्षत ॥ १३ ॥ आहूतारा
जराजेन राजराजविभूतिना ॥ उपायनान्युपानीय भूपावैश्यवदाययुः ॥ १४ ॥ आजग्मुर्यज्ञवा
टंतं प्रजाःसर्वाःप्रजापतेः ॥ महोत्सवोत्सुकदृशः प्रशंसंत्योस्यविक्रमान् ॥ १५ ॥ आस्यतांभु-
ज्यतांभूयः पीयतांपरिधीयतां ॥ इत्यत्रसंततःशब्दा जातुनोदीयतामिति ॥ १६ ॥ पंडितौ-
कर्मकांडेषु वैभांडकविधातृजौ ॥ ऋत्विग्भिर्गुणसंपन्नैः क्रतुराजंप्रचक्रतुः ॥ १७ ॥ मंत्रतंत्रोप
करण कर्तृवन्हिषुकेशवं ॥ देशेकालेचमन्वाना श्चक्रुस्तेकर्मनिर्मलं ॥ १८ ॥ इष्टिभेदैःप्रवर्ग्यैश्च-
सोमानांसवनैस्त्रिभिः ॥ देवाअमाद्यन्वाय्वाद्याः पशुभिर्विविधैरपि ॥ १९ ॥ यजमानोदशरथो
याजकोब्रह्मनंदनः ॥ रामोदयःफलंयस्य कोनुतंवर्णयेत्क्रतुं ॥ २० ॥ ॥ ॥ ॥

ब्धवंतौ ॥ १७ ॥ मन्वानाःस्मरंतः ॥ १८ ॥ प्रवर्ग्यैःप्रवर्ग्यनामकाहुतिविशेषैः । सोमानांसोमरसानांत्रिभिःसवनैःप्रातर्मध्यंदिनसायंतननामकैः अमाद्यन्
हर्षंप्रापुःमदिहर्षइतिधातुः ॥ १९ ॥ यस्याश्वमेधस्य ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मत्यर्पिताः ऋत्विग्भिरितिशेषः। रुग्मार्बुदंसुवर्णार्बुदं॥२१॥ दुर्वर्णौघंरजतसमूहं। दुर्वर्णंरजतंरौप्यमितिरत्नकोशः उर्व्याःभूम्याः॥२२॥ राघवमेघेनदशरथा रूपमेघेन। कोटिहाटकवर्षिणाबहुकोटिसुवर्णवर्षंकुर्वता॥२३॥ अंगदंबाहुभूषणंउन्मुच्यत्यक्तातंराजानंब्राम्हण्यंब्राम्हणप्रियंजनताजनसमूहःअर्चयत्अपूज यत्॥२४॥ पाप्मापापंतेऋत्विगाद्याःसदारस्यसभार्यस्य॥२५॥ अथर्वशिरसैःअथर्ववेदोपनिषदिविद्यमानैः। कर्मविमुक्तयेकर्मपरिसमाप्तये। पुत्रियांपु-

दिशःप्रत्यर्पितादृष्ट्वा दत्ताअप्यमुनाखिलाः॥ रुग्मार्बुदंसऋत्विग्भ्यो गवांलक्षाणिचादिशत्॥२१॥
वर्णनाथःसुवर्णेभ्यो दुर्वर्णौघंचतुर्गुणं॥ प्रदायप्रणनामोर्व्या विष्णुर्नःप्रीयतामिति॥ २२॥ त
दाराघवमेघेन कोटिहाटकवर्षिणा॥ तर्पितःसकलोलोकः पूर्णार्णवइवाबभौ॥ २३॥ याचमाना
यविप्राय दरिद्रायांगदंददौ॥ हसन्नुन्मुच्यराजानं ब्राह्मण्यंजनतार्चयत्॥२४॥ अश्वमेधाग्निनि
र्दग्ध पाप्मनःपार्थिवस्यते॥उदारस्यसदारस्य प्रणतस्याशिषोवदन्॥ २५॥ अथर्वशिरसैर्मंत्रै
रिष्टिंकर्मविमुक्तये॥ पुत्रियांक्षात्रियेंद्रस्य व्यधाद्वैभांडकोमुनिः॥ २६॥ ऋश्यशृंगस्तदायोगैर्हि
विर्भागार्थमागतान्॥ सुरान्सवासवान्दृष्ट्वा प्रांजलिःप्रत्यभाषत॥ २७॥ यजमानोयमिष्ट्वावो
मेधावीहयमेधकृत्॥ शरणंपुत्रकामोवः प्राप्तःप्रीयध्वमंजसा॥ २८॥ इच्छत्यसावनुपमा न्पुत्रां-
स्त्रैलोक्यविश्रुतान्॥ देवकार्यस्यभावित्वा दपितत्रानुमोद्यतां॥२९॥ ॥ ॥ ॥

त्रमदांव्यधाच्चकार वैभांडकःऋश्यशृंगः॥ २६॥ सवासवान्इंद्रसहितान्॥ २७॥ मेधावीबुद्धिमान्वःयुष्मान्प्रीयध्वंप्रीतिंकुरुध्वं॥ २८॥ तत्रदशर थपुत्रजन्मनि॥ २९॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेइंद्राद्याःतापसेनमुनिना निर्जरादेवाः । तंपुत्रोत्पत्त्याख्यंतस्मैदशरथाय ॥ ३० ॥जगदुःअवदन् । गदव्यक्तायांवाचीतिधातुः । जगद्योनिंचतुर्मुखंहेना-
थेतिसंबुध्दिः । रक्षोभ्यांराक्षसाभ्यां ॥ ३१ ॥ राक्षसकृतबाधांवक्तुंतज्जन्मादिकमाह ॥ सुतावित्यादिना ॥ विश्रवसःविश्रवःसंज्ञस्यमुनेःअश्रांतंनिरंतरं
अवध्यतामवध्यतानामकं ॥ ३२ ॥ लोकान्रोदयतीतिलोकरावणः ॥ आस्यंमुखं ॥ ३३ ॥ अवहत्यकंडनंकृत्वा जघासअभक्षयत् । पृथुकवत्चिपिटवत् ॥

प्रार्थिताःपार्थिवार्थंते तापसेनेतिनिर्जराः ॥ वरंप्रदायतंतस्मै ब्रह्मलोकमुपाययुः ॥ ३० ॥
जगदुस्तेजगद्योनिं नत्वाप्रांजलयःसुराः ॥ नाथाऽनाथाःप्रजाःपाहि रक्षोभ्यःसमुपद्रुताः ॥३१॥ सु-
तौविश्रवसोऽश्रांतं तपस्तप्त्वाप्रतापिनौ ॥ वरंहिप्रापतुस्त्वत्तः सर्वलोकैरवध्यतां ॥ ३२ ॥ कुंभ
कर्णोग्रजोत्युग्रो रावणोलोकरावणः ॥ दिशोदशदशास्योसा वजयत्खलुलीलया ॥ ३३ ॥ विंशद्भि
र्बाहुमुसलै रवहत्यजघासस ः ॥ भयाग्निभर्जितान्देहिव्रीहीन्पृथुकवत्सदा ॥ ३४ ॥ देवोपदेव
भूदेवा न्नरदेवानुतेतरान् ॥ मारयन्दारयन्भ्राम्य त्यहोसिंहोमृगानिव ॥ ३५ ॥ यद्यच्चारुतरंघो
रः पश्येद्भुवनमंडले ॥ धनंजीवधनंवापि तत्तल्लंकामयापयत् ॥ ३६ ॥ स्त्रीरत्नानांसरत्नानां नृशं
सःपश्यतोहरः ॥ ईषणंचकुलस्त्रीणां भूषणंस्वस्यमन्यते ॥३७॥ तपःस्वाध्याययज्ञाना मंतरायंनि
रंतरं ॥ देवर्षिविप्रियापेक्षी दुराचारश्चरत्ययं ॥३८॥ लोकपालान्महेंद्रादी नस्मान्विस्मयविक्रमः ॥
अजान्गजाधिपइव प्राद्रावयदतिद्रुतं ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३४ ॥ भूदेवाःब्राह्मणाःनरदेवान्भूपान्भ्राम्यतिपर्यटति ॥ ३५ ॥ अयापयत्प्रेषयामास ॥ ३६ ॥ नृशंसःक्रूरःपश्यतोहरःजनेषुपश्यत्स्वपहरन् ॥
॥ ३७ ॥ अंतरायंविघ्नं । विघ्नोंतरायःप्रत्यूहइत्यमरः । चरतिकरोति ॥ ३८ ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अनपायस्यनाशरहितस्य ॥ ४० ॥ देवोब्रह्मा योगक्षेमदाता अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य परिहारलक्षणंक्षेम तत्प्रदाता विधित्सितं विधातुंकर्तुंनिरूपितंबत्मे रणयामथावरादिकंदत्तमित्यर्थः ॥ ४१ ॥ बालिंपूजां विश्वेसर्वेवितथनासाःमोतनासिकाःशंसुखं ॥ ४२ ॥ सभवःसरुद्रः ॥ ४३ ॥ पीयूषभोजनाःदेवाः ॥

वधोपायोऽनपायस्य यदिनाद्यनिरूप्यते ॥ प्राप्यतेप्रलयःस्वामिन् रुद्रंकालांतकंविना ॥ ४० ॥
इतिदेववचःश्रुत्वा देवःस्मितमुखोवदत् ॥ योयोगक्षेमदातान स्तेन्द्रहार्द्रंविधित्सितं ॥ ४१ ॥ य-
स्मैबलिंहरामोंग विश्वेपिविवशावयं ॥ विद्धनासायथागावः सशार्ङ्गीशंविधास्यति ॥ ४२ ॥ ए
तावदुक्त्वाभगवा न्सभवःकंजसंभवः ॥ सवृंदारकवृंदोथ तीरंक्षीरांबुधेर्ययौ ॥ ४३ ॥ प्रातर्बिंब-
मिवापश्यन् भगवत्कीर्तिवारिधेः ॥ पीयूषवारिधिंहार गौरंपीयूषभोजनाः ॥ ४४ ॥ पुरायितंमुर
रिपो र्मणिराजिविराजितं ॥ सालायमानैरुत्तुंगै स्तरंगैरुपशोभितं ॥ ४५ ॥ गंभीरस्तोत्रनिनदं
लोलमंतःकुतूहलात् ॥ अत्यंतमिवनृत्यंतं भक्तंभक्तानुरागिणः ॥ ४६ ॥ तस्यतीरमधिष्ठाय कं-
जोद्भवभवादयः ॥ तुष्टुवुस्तुष्टमनसो विष्टरश्रवसंसुराः ॥ ४७ ॥ नमोनागेंद्रशय्याय नमोनाना
विलासिने ॥ नमोनाद्यंतमध्याय नमोनारायणायते ॥ ४८ ॥ विपत्त्युत्पत्तिनियति स्थितिज्ञप्तिस-
मावृतीः ॥ सृतिंमुक्तिंचजगतां स्वामिन्नेकःकरोष्यहो ॥ ४९ ॥ ॥ ॥ ॥

॥ ४४ ॥ मणिराजिविराजितंरत्नसमूहशोभितं । सालायमानैःप्राकारवद्वर्तमानैः ॥ ४५ ॥ भक्तानुरागिणःभक्तवत्सलस्यहरेः ॥ ४६ ॥ विष्टरश्रवसं हरिं ॥ ४७ ॥ ४८ ॥ विपत्तिःसंहारःउत्पत्तिःसृष्टिःनियतिःप्रेरणंस्थितिःपालनं ज्ञप्तिःज्ञानं समावृतिरज्ञानं सृतिःसंसारः ॥ ४९ ॥ ॥ ॥

एकैकशःएकैकंगणशःसमूहत्वेनस्थिताः ॥ ५० ॥ दाशरथिभूपंदशरथपुत्रत्वं तावत्ततःपूर्वमेव वीततापान्विगतसंतापान् ॥ ५१ ॥ नुतिमद्भिःस्तुतियुक्तैःप्रत्यक्षीभवति पुराप्रत्यक्षोभूत् स्वाकल्पस्फुरितमणिःशोभनाभरणश्चासौस्फुरितकौस्तुभमणिश्चेतितथोक्तः ॥ ५२ ॥ इतिश्रीबालकांड टीकायां द्वितीयः सर्गः ॥ २ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्री ॥ मंदहासेंदुमहसामंदस्मितचंद्रतेजसा । साध्वसंभयं । भीतिर्भिःसाध्वसंभयामित्यमरः ॥ १ ॥

नैकैकशोपिगणश स्तवानंतान्गुणान्वयं ॥ समापयामःसततं गायंतोप्यपरेकुतः ॥ ५० ॥ यावन्ननिर्दहतिरावणनामवन्हि र्विश्वंचदाशरथिभूपमुपेत्यतावत् ॥ त्वंनाथतंशमयवीर्यसमुद्रपूरै र्भक्ताननन्यशरणान्कुरुवीततापान् ॥ ५१ ॥ गीर्वाणैरितिनुतिमद्भिरर्थ्यमानः प्रत्यक्षीभवतिपुरापुराणमूर्तिः ॥ बालार्कप्रकररुचिःपिशंगवासाः स्वाकल्पस्फुरितमणिर्मनोभिरामः ॥ ५२ ॥ इति श्रीसंग्रहरामायणे बालकांडे रामांके नारायण पंडिताचार्यकृतौ द्वितीयः सर्गः ॥ २ ॥ ॥

॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्री ॥ मंदहासेंदुमहसा नंदयन्देवताहरिः ॥ साध्वसंसाध्वशमयन् मेघगंभीरयागिरा ॥ १ ॥ निर्जराविज्वराःस्वस्थाः स्वस्थाभवतमाचिरं ॥ अपित्रैलोक्यजयिनं वत्स्यावत्स्यामिवोरिपुं ॥ २ ॥ आकर्ण्यकर्णपीयूष मुत्तमश्लोकजल्पितं ॥ कृतकृत्यास्ततोजग्मुस्त्रिदिवंत्रिदिवौकसः ॥ ३ ॥ राज्ञइष्टिसमित्धाग्ने र्नारायणनियोगतः ॥ उदतिष्ठन्महद्भूतं प्राजापत्यंरुचाज्वलत् ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



स्वस्थाःस्वेछावंतःस्वस्थाःस्वर्गस्थाःवत्स्यामिहनिष्यामि ॥ २ ॥ उत्तमश्लोकजल्पितंहरिवचनं । त्रिदिवंस्वर्गं ॥ ३ ॥ प्राजापत्यंप्रजापतिसंबंधिब्रम्हाख्यदेवताधिष्ठितमित्यर्थः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुत्रियंपुत्रप्रदं । तत्रैवइष्टयज्ञावेव । अंतर्दधेतिरोहितमभूत् ॥ ५ ॥ परमर्धंमुख्यमर्धं ॥ ६ ॥ ततःकौसल्यायैदत्तावशिष्टादर्धात् विभक्तंद्विधाविभागीकृतं ।
उत्तरार्धंभक्तंहविःसुमित्रायैददाविंतियोजना ॥ ७ ॥ तस्मादर्धात्ततःपुनरवशिष्टादर्धात् परमर्धंकैकेय्यैदत्तावशिष्टंअन्यदर्धं ॥ ८ ॥ देव्योराजभार्याःमा

सुवर्णपात्रेसंपूर्यं पायसंपार्थिवायतत् ॥ दत्वेदंपुत्रियामीति तत्रैवांतर्दधेद्रुतं ॥ ५ ॥ कौसल्यामथ
कल्याणी माहूयमहिषींप्रियां ॥ परमान्नंददावर्धं परंतस्यैनराधिपः ॥ ६ ॥ अर्धादर्धंततोभक्तं वि-
भक्तंभक्तिमान्हरौ ॥ पवित्रंससुमित्रायै सुस्मितायैददावथ ॥ ७ ॥ तस्मादर्धादसावर्धं कैकेय्यैप्र
तिदत्तवान् ॥ परमर्धंसुमित्रायै पुनरेवप्रदत्तवान् ॥ ८ ॥ तान्पायसांशान्भुक्त्वाताः देव्यःशुशु-
भिरेधिकं ॥ मधुकालगुणान्भुक्त्वा माधव्यइवसल्लताः ॥ ९ ॥ राघवान्निरघाद्गर्भं लेभिरेताव-
रस्त्रियः ॥ पूर्वपक्षादिवादिशः श्चंद्रमानंदकारिणं ॥ १० ॥ अवगम्यगदापाणे रवतारंनृपालये ॥ स्व-
यंभूःस्वयमाहूय विबुधानिदमब्रवीत् ॥ ११ ॥ अपिपूर्णोवतीर्णोवः प्रसादायदयाकरः ॥ सेवध्वं
सेवनीयंतं अवतीर्यभुवस्तले ॥ १२ ॥ उत्पादयध्वमृक्षीषु वानरेषुपरासुच ॥ उत्पत्स्यध्वंस्वतन
याः स्वयमेवचसद्गुणाः ॥ १३ ॥ जृंभमाणस्यमेवक्त्रा ज्जांबवानुदपद्यत ॥ ऋक्षोरक्षविनाशार्थं ध-
र्मोधर्मधरःपुरा ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

धव्यःभ्रमरास्त्रियःसल्लताःसंतुष्टाः ॥ ९ ॥ निरघात्निष्पापात् ॥ १० ॥ अवगम्यज्ञात्वा ॥ ११ ॥ १२ ॥ ऋक्षीपुऋक्षस्त्रीषुअपरासुमनुष्यस्त्रीषु ॥ १३ ॥
जृंभमाणस्यविजृंभमाणस्य वक्त्रात्मुखात् धर्मोयमः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विधिनियोगं गोलांगूलाःकृष्णवर्णमुखाः ॥ १५ ॥ १६ ॥ १७ ॥ ॥ १८ ॥ प्राणाद्याःपंचप्राणाःमरुतःवायवः ॥ १९ ॥ वस्वंशसंभवौ अष्टवसूनामंशेभ्यःसंभूतौ वस्वंशनामकदेवद्वयजातावितिकेचित् वसूनांमध्येप्रधानयोर्द्वयोर्द्वयोरंशजातावित्यपरे। मरुच्छ्रेष्ठौएकोनपंचाशन्मरुतांमध्येप्रधानौद्वौदेवौ॥ २०॥

उदपद्यतसद्यस्ते तंविधातुंविधेर्विधिं ॥ गोलांगूलाःकेचिदक्षा वानराअपरेनराः ॥ १५ ॥ बभूवहनुमान्नाम मुख्यप्राणःप्रभंजनः ॥ उत्तमश्लोकभक्ताना मुत्तमोयोखिलोत्तमः ॥ १६ ॥ वासवोवालिनामासी दिंद्रस्तत्तनयोंगदः ॥ रविःसुग्रीवनामाभू दनलोनीलनामकः ॥ १७ ॥ वरुणश्चसुषेणोभू द्विश्वकर्मानलोऽजनि ॥ अभूतांमैंदद्विविदा वश्विनौसेवितुंविभुं ॥ १८ ॥ प्राणाद्याः पंचमरुतो धनदात्तत्रजज्ञिरे ॥ गजोगवाक्षोगवयो वृषाख्योगंधमादनः ॥ १९ ॥ पनसाख्यःशतबलि जातौवस्वंशसंभवौ ॥ मरुच्छ्रेष्ठावजायेतां श्वेतसंपातिनामकौ ॥ २० ॥ बृहस्पतिर्बृहद्बुद्धि स्तारोनामव्यजायत ॥ शचीमहेंद्रमहिषी तारातारस्वसाभवत् ॥ २१ ॥ वित्तपःक्रथनाख्योभू न्निर्ऋतिर्दुर्मुखाभिधः ॥ मरुच्छ्रेष्ठःपूर्वमेव केसर्याख्योव्यजायत ॥ २२ ॥ पर्जन्यःशरभोजज्ञे प्रायस्ते स्वसुतास्स्वयं ॥ ऋषिगंधर्वसिद्धाद्या अपिजाताःसहस्रशः ॥ २३ ॥ कुर्वाधरांविभिंद्ययु रुद्धरेयुर्धराधरान्॥नखदंतायुधायुद्धे नागायुतबलोद्धताः ॥ २४ ॥ नानायोनिषुसंजाता नानायुद्धविशारदाः ॥ नानाविधमसेवंत नानावीर्यैरमापतिं ॥ २५ ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ मरुच्छ्रेष्ठःवायूनांमध्येप्रधानःप्रभंजनातिरिक्तःकश्चित् ॥ २२ ॥ २३ ॥ धरांभूमिं धराधरान्पर्वतान् ॥ २४ ॥ नानाविधमितिक्रियाविशेषणं॥ २५॥

घनाघनैर्वर्षशीलयुक्तैर्मेघैः । वर्षकाब्दाघनाघनाइत्यमरः । घनैर्निविडैः समस्कारि अलंकृता ॥ २६ ॥ अंतरेमन्वंतरे चैत्रेचैत्रमासे प्राक्पक्षेशुक्लपक्षे दिवा अहनि ॥ २७ ॥ गुरुगौरांश्वोः बृहस्पतिचंद्रयोः लग्नेराशौ मेषंमेषराशि पूषणिसूर्ये ग्रहपंचके अंगारकबुधगुरुशुक्रशनिनामकेस्वोच्चस्थेस्वोच्चस्थानस्थितेसति ॥ मकरकन्याकर्काटकमीनतुलानामकराशिषुयथाक्रमंस्थितेसतीत्यर्थः ॥ २८ ॥ ॥ २९ ॥ विषण्णतां भीतत्वं अनाकुलंअसंभ्रांतं ॥ ३० ॥ तूर्यशब्दाःभेर्या-

अछिन्नपक्षैरपरैः पर्वतैरिवसर्वतः ॥ घनाघनैरिवघनै स्तैसमस्कारिभूरियं ॥ २६ ॥ वैवस्वतांत-
रेप्राप्ते त्रेतायामुत्तरायणे ॥ चैत्रनवम्यांप्राक्पक्षे दिवापुण्येपुनर्वसौ ॥ २७ ॥ उदयेगुरुगौरांश्वो र्ल-
ग्नेकर्कटकाव्हये ॥ मेषंपूषणिसंप्राप्ते स्वोच्चस्थेग्रहपंचके ॥ २८ ॥ आविरासीत्स्वकलया कोसल्या
याःपरःपुमान् ॥ दिव्यव्रतैर्विशुद्धायाः साक्षात्तत्वमतेरिव ॥ २९ ॥ संतोगच्छन्प्रसंनत्व मसंतोपि
विषण्णतां ॥ जायमानेजगंनाथे जगदासीदनाकुलं ॥ ३० ॥ ब्रह्मादीनांसुरेंद्राणां रम्याःकुसुम-
वृष्टयः ॥ जयशब्दास्तूर्यशब्दा अप्ययोध्यामपूरयन् ॥ ३१ ॥ अनंतोनंतपर्यंकः परिचर्यार्थमीशि
तुः ॥ सर्पभेऽजनिसौमित्रिः कुलीरेभ्युदितेरवौ ॥ ३२ ॥ चक्रायुधस्ययच्चक्रं दैत्यचक्रविदारणं ॥
तत्कामरूपंकैकेय्याः पुष्येपुत्रत्वमाययौ ॥ ३३ ॥ देवद्विड्जनजन्यघ्नः पांचजन्योऽप्यजायत ॥ सु-
मित्रायाःसुतत्वेन स्वामिनःसेवनेछया ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥

दिशब्दाः ॥ ३१ ॥ सर्पभेसर्पदैवत्येनक्षत्रे आश्लेषायामित्यर्थः । रवौकुलीरेकर्कटराशावभ्युदितेसति । आषाढमासइत्यर्थः ॥ ३२ ॥ दैत्यचक्रविदारणं दैत्यसमूहविदारणं । पुष्येपुष्यनक्षत्रे ॥ ३३ ॥ देवद्विड्जनजन्यघ्नंदेवद्वेषिजनानांजन्यंयुत्धंहंतिनाशयतीतितथोक्तः ॥ ३४ ॥ ॥ ॥

आद्येवासुदेवनाम्नि अग्रतःप्रथमतःरामलेनेतियावत् । अन्यास्तिस्रःमूर्तयःसंकर्षणप्रद्युम्नानिरुद्धाख्याःआविशन्यथाक्रमं स्वांशैस्तेषुत्रिषुपुत्रेषुमावि-शन्नित्यर्थः । सन्मतंसतामुत्तमानांमतंसिद्धांतःएतेनलक्ष्मणादयोनसाक्षात्धरिरेव किंतुशेषादयएवेतिसूचितंभवति ॥ ३५ ॥ नावैतुनज्ञातवान् ॥ ३६ ॥



चतुर्मूर्तेर्मुकुंदस्य मूर्तिराद्याग्रतोभवत् ॥ अन्येषुत्रिषुतिस्रोन्या आविशंनितिसन्मतं ॥ ३५ ॥ श
त्रुघ्नआनिरुद्धोसौ प्रद्युम्नोभरतोभवत् ॥ संकर्षणस्तुसंहारी लक्ष्मणोभवदत्रच ॥ १ ॥ अपुत्रः
प्राप्यसत्पुत्रान् मग्नआनंदसागरे ॥ कृत्योत्तरंनृपोनावैन्निधिंलब्ध्वैवनिर्धनः ॥ ३६ ॥ पाल्यमा-
नाःप्रजाःसर्वाः प्रजानाथेनपुत्रवत् ॥ अवेत्यतंतुमंतंतं तुष्यंतिस्मगृहेगृहे ॥ ३७ ॥ नराणामु-
तनारीणा मयोध्यायांमहोत्सवः ॥ अभूदभूतपूर्वोत्र सेवकाननृतुर्जगुः ॥ ३८ ॥ सुताननेंदुरानंदं
निन्येराज्ञिकुमुद्वती ॥ मनोरथार्णवंराज्ञः पूर्णतांतूर्णमानयत् ॥ ३९ ॥ जातान्कुमारानभ्येत्य पु-
रान्यालंभतोन्नृपः ॥ पुरोधसंपुरोधाय जातकर्माकरोच्छुचिः ॥ ४० ॥ यथैवासंस्यतांयाता विप्रैरुक्ताः
सुताशिषः ॥ तथैवराज्ञादत्तानि वित्तानिब्रह्ममंडले ॥ ४१ ॥ सहितःस्वहितैराजा ब्राह्मणैर्ब्रह्म-
वादिभिः ॥ अनंतनाम्नश्चक्रेथ नामनारायणस्यसः ॥ ४२ ॥ रामःसर्वाभिरामत्वा दात्मारामत्व-
तोपिवा ॥ देवोमरकतश्याम इतिवारामनामकः ॥ ४३ ॥ ॥ ॥ ॥ ॥



तंतुमंतंसंततिमंतं तुष्यंतिस्म अतुष्यन् ॥ ३७ ॥ अभूतपूर्वःपूर्वमेवंनाभूदित्यभूतपूर्वःजगुःगानमकुर्वन् ॥ ३८ ॥ सुताननेंदुःसुतानांमुखचंद्रःराज्ञिकुमुद्वतीराज
भार्याख्य कुमुदाकुमारान् निन्येप्रापयामास ॥ ३९ ॥ अन्यालंभतःअन्यसंस्पर्शात् ॥ ४० ॥ ब्रह्ममंडलेब्राह्मणसमूहे ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥

नित्यंरमाभिसंबंधाद्रामइत्यस्यायमर्थः । रमायाःलक्ष्म्याःअयंपतित्त्वादिनासंबंधीतिरामनामकइति । तस्यकुमारस्यदानंश्रीरितिवा । रामनामइत्यस्यायं भावःरादानइतिधातुः । मेतिलक्ष्मीरुच्यते तथाचराशब्दोदितंदानमेव माश्रीरस्येतिरामनामकइति । रामाणांस्त्रीणांमनोहरत्त्वात्तंरामंविदुरिति रमयतीति रामइत्युक्तंभवति । रामाणांत्द्वद्यभावादितियोज्यं ॥ ४४ ॥ साधुलक्ष्मगुणोपेतःसात्विकानांलांछनात्मकसमस्तगुणोपेतः ॥ ४५ ॥ कुमाराभाःषण्मुखस

नित्यंरमाभिसंबंधा द्दानंश्रीस्तस्यहेतिवा॥रामाणांत्द्वद्यभावाद्वा रामंतंसज्जनाविदुः॥४४॥ साधुलक्ष्मगुणोपेतो लक्ष्मणोनामतोभवत्॥सौमित्रिरग्रजोलोके शत्रुघ्नोवरजोमतः॥४५॥ कैकेय्यानंदनं प्राहु र्भरतंभरितंगुणैः॥कुमारास्तेकुमाराभा एवंनामानिभेजिरे॥४६॥ संस्कारान्कारयामास ब्राह्मणैर्वेदपारगैः अप्यन्नप्राशनादीन्सः नंदनानांनराधिपः॥ ४७॥ उपनीताविनीतास्ते जगृहुःसांगमागमं ॥ अस्त्राणिचसमस्तानि धनुर्वेदंपराःकलाः ॥ ४८ ॥ शांतादांताःपराक्रांताः कांतिमंतोगुणाधिकाः ॥ श्रीमंतःकीर्तिमंतश्च देवास्तेधरणींगताः ॥ ४८ ॥ आत्मानइवतातस्य गुरूणांकिंकराइव॥जगतामिवदैवानि मातृणामिवबालकाः ॥ ५० ॥ शयानमासीनमथस्थितंगतं प्रक्रीडितंप्रस्तुतमग्रजंहरिं ॥ क्षणंचनामुंचतलक्ष्मणोगुरुं शत्रुघ्नएवंभरतंनिजाग्रजं ॥ ५१ ॥ लीलाभिःस्मितलसितैरपांगभृंगै र्वाणीभिःप्रमुषितवाणिनीमनोभिः ॥ आनंदंनिजजनवृंदामिंदिरेशो रामात्मासमगमयत्सुमंगलांगः॥ ५५॥ इति श्रीसंग्रहरामायणे बालकांडे रामांके तृतीयःसर्गः। ३।

माः ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ दांताःइंद्रियनिग्रहवंतः ॥ ४९ ॥ आत्मानःप्राणाः ॥ ५० ॥ मस्तुतंस्तवंकुर्वंतं नामुंचतनमुक्तवान् ॥ ५१ ॥ अपांगभृंगैः अपांगनामकभ्रमरैःवाणीभिःवचनैःप्रमुषितवाणीमनोभिःचोरीकृतसरस्वतीचित्तैःसरस्वतीवचनेभ्योप्यतिमनोहरवचनैरित्यर्थः । समगमयत् संप्रापयामास ॥ ५२ ॥ इति बालकांड टीकायां तृतीयःसर्गः ॥ ३ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्री ॥ राजादशरथःदारार्थंअनुकूलभार्याप्राप्त्यर्थं । सामात्यःमंत्रिसहितः॥ १ ॥ समाजेसभायांमित्रंमित्रभूतः ॥ २ ॥ ३ ॥ भगवन्पूज्यहेविश्वामित्र ॥ ४ ॥ अटंतिचरंतिआत्मार्थंस्वप्रयोजनार्थं ॥ ५ ॥ ६ ॥ ७ ॥ अवध्यानकृतोःअवज्ञांकुर्वतोःमोघःव्यर्थः ॥ ८ ॥ ९ ॥ वसिष्ठाद्याश्चविदुरित्यन्वयः ॥

ॐ ॥ अथोराजादशरथो पुत्राणांपुत्रवत्सलः ॥ चिंतयामासदारार्थं सामात्यःसमहीपतिः ॥ १ ॥
चिरंचिंतयतातेन समाजेसमदृश्यत ॥ विश्वामित्रंसतांमित्रं कार्यस्यैवविनिर्णयः ॥ २ ॥ प्रत्युत्था
यनृपःप्रीतः प्रदायपरमासनं ॥ सवसिष्ठोमुनिश्रेष्ठ मभिपूज्येदमब्रवीत् ॥ ३ ॥ भगवन्भगवद्भ-
क्ताः परिपूर्णाःस्वभावतः ॥ तथापिवयमात्मार्थं कुर्मोवःकर्मवांछितं ॥ ४ ॥ ननुनारायणपरा स्तद्भ
क्तानुग्रहार्थिनः ॥ जगत्यटंतिनात्मार्थं भास्कराइवभास्कराः ॥ ५ ॥ महीपालवचःश्रुत्वा महीदे
वोभ्यभाषत ॥ महावंश्यस्यमहतो युक्तमेतत्तवोदितं ॥ ६ ॥ रक्षोभ्यामतिरूक्षाभ्यां विहतामेमुहु
र्मुहुः ॥ यज्ञास्तद्रक्षणोद्देशी त्वामहंशरणंगतः ॥ ७ ॥ अवध्ययोःशंभुवरा दवध्यानकृतोःसतां ॥
मच्छापोपितयोर्मोघः स्यादग्निर्द्रुदयोरिव ॥ ८ ॥ ज्येष्ठंश्रेष्ठंतवसुतं रामंराजीवलोचनं ॥ नियुंक्ष्व
तद्वधायाशु श्रेयस्तेभविताध्रुवं ॥ ९ ॥ वेदाहंवेदसंवेद्यं तेजोराजन्सुतस्यते ॥ सुरासुरैरप्रधृष्यं
वसिष्ठाद्याश्चतेद्विजाः ॥ १० ॥ इतितस्यवचःश्रुत्वा मुमोहसमहीपतिः ॥ वित्रस्तोनिजपुत्रस्य विरहा
नलशंकया ॥ ११ ॥ लब्धसंज्ञोमुहूर्तेन मुहुरार्तोनरेश्वरः ॥ विनिश्वस्यमुनिश्रेष्ठं दीनोदीनमभाषत १२

॥ १० ॥ वित्रस्तंभीतं ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बा०स० ॥ ९ ॥

कुमारंकौमारवयासिस्थितं ॥१३॥ १४॥ १५॥ जितकाशिनं जितयुत्थवंतं। चक्रेणसैन्येन ॥ १६॥ १७॥ स्वैरंनिष्कारणं ॥ १८॥ क्षत्रबंधुनाक्षत्रियेण ॥ १९॥

सुकुमारंकुमारंमे सुखंसुखाविवर्धितं ॥ अनस्त्रज्ञमयुत्धज्ञं नरामंनेतुमर्हसि ॥ १३ ॥ नववर्षसह
स्त्राणि परितप्तःसुताशया ॥ रामाननेंदुनेदानी महमानंदितोमुने ॥ १४ ॥ सोहंमुहूर्तमप्येनं हि-
त्वानस्थातुमुत्सहे ॥ ममप्राणइवब्रह्मं स्तस्माद्रामोननीयतां॥ १५॥ मायिभीराक्षसैर्योत्धुं मामुदु-
र्जितकाशिनं ॥ चतुरंचतुरंगेण चक्रेणसहितंनय॥ १६॥ यदिरावणमाश्रित्य युष्मान्निघ्नंतिराक्षसाः॥
प्राप्तःसर्वविनाशोनो जगत्स्यादधरोत्तरं ॥ १७ ॥ सवासवाःसुरगणा यन्नाम्नैवप्रदुद्रुवुः ॥ वैरंस्वै
रंकथंयाम तेनतत्रानुचिंत्यतां ॥ १८ ॥ गोब्राह्मणार्थेदेहोयं धार्यतेक्षत्रबंधुना॥ तस्माद्यावन्मम
प्राणा स्तावद्योत्स्यामिवोरिपून् ॥ १९ ॥ इतितद्वचनाज्ज्येन प्राज्वलत्तापसानलः ॥ निशाचरा
पराधाख्यैः शुष्कवृक्षैःपुराज्वलन् ॥ २० ॥ कोपाटोपंमुनेर्वीक्ष्य वसिष्ठोनृपमब्रवीत् ॥ प्रतिश्रु-
तंत्वयाराजन् कुर्यामिष्टमितिध्रुवं ॥ २१ ॥ अभ्यागतायविप्राय श्रोत्रियायइयक्षवे ॥ वैष्णवा
यप्रतिश्रुत्य नाकर्तुंराघवार्हसि ॥ २२ ॥ महिमाहिमहानस्य त्वत्पुत्रस्यसुसंवृतः ॥ येनायंकुपि
तोलोका न्निर्दहेच्चचतुर्दश ॥ २३ ॥ विश्वामित्रोपितेजस्वी नारायणपरायणः ॥ समर्थस्यापिते
सूनोः सहायत्वंगमिष्यति ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तापसानलःविश्वामित्राग्निः ॥ २० ॥ कोपाटोपंकोपसंभ्रमं प्रतिश्रुतंप्रतिज्ञातं ॥ २१ ॥ इयक्षवेयष्टुकामाय ॥ २२ ॥ संवृतःगूढःयेनमहिम्ना ॥ २३ ॥ २४ ॥

जयासुप्रभयोः जयासुप्रभाख्ययोः । तदस्त्रशतकंजातं तद्ददेतियोजना अग्रेस्वस्यक्षत्रियत्वे ॥ २५ ॥ ॥ २६ ॥ कौशिकायविश्वामित्राय ॥ २७ ॥ कलापिनौ इषुधियुक्तौ । किशोरौ किशोरवयसौ । नवमवर्षादारभ्यषोडशवर्षपर्यंतं किशोरवयइत्युच्यते । ईयतुः अनुजग्मतुः ॥ २८ ॥ वागीशंबृहस्पतिं ॥ २९ ॥



जयासुप्रभयोःपूर्वं जातंयदक्षकन्ययोः ॥ तदस्त्रशतकंवेद सोन्यश्चाग्रेमहीसुरः ॥ २५ ॥ तस्माद्रामेण
राजेंद्र गंतव्यंमुनिनासह ॥ हंतव्यंराक्षसकुलं त्रातव्यंयज्ञकर्मतत् ॥ २६ ॥ वसिष्ठवाक्यमाकर्ण्य राघ
वौरामलक्ष्मणौ ॥ प्रेषयामाससुप्रीतः कौशिकायसमर्पयत् ॥ २७ ॥ दोर्दंडार्पितकोदंडौ शुभा-
लापौकलापिनौ ॥ किशोरावपिशूरौतौ सुस्मितौमुनिमीयतुः ॥ २८ ॥ मुमुदुस्तौप्रजावीक्ष्य वि-
श्वामित्रानुयायिनौ ॥ वागीशमनुगछंता विंद्राविष्णूइवामलौ ॥ २९ ॥ अध्यर्धयोजनाध्वानं ग
त्वागतिविदांवरः ॥ सरय्वाउत्तरेतीरे केशवंकौशिकोब्रवीत् ॥ ३० ॥ तातमंत्रौप्रवक्ष्यामि बलाम
तिबलामपि ॥ क्षुत्पिपासादिशमनौ ब्रह्मोक्तौसर्वकामदौ ॥ ३१ ॥ इतिब्रुवाणाद्विपेंद्रा न्मंत्रौशु
श्रावमाधवः ॥ सर्वज्ञःपूर्णकामोपि शिष्टाचारानुशिक्षकः ॥ ३२ ॥ मुनिनालालितौकामं नरदेव
कुमारकौ ॥ निशायांसरयूतीरे रेमातेरामलक्ष्मणौ ॥ ३३ ॥ सांध्यंकृत्यंततःकृत्वा प्रभातेसुप्रभा
ययुः ॥ आश्रमंसरयूगंगा संगमेनंगवल्लभं ॥ ३४ ॥ ॥ ॥ ॥ ॥

अध्यर्धयोजनाध्वानंसार्धैकयोजनपरिमितंमार्गं ॥ ३० ॥ बलां बलानामकं ॥ ३१ ॥ ३२ ॥ ३३ ॥ अनंगवल्लभंकामप्रियं ॥ ३४ ॥ ॥ ॥

यत्रआश्रमे हैमवतीकांतउमापतिः॥ ३५ ॥ ३६ ॥ नःसुभातंअद्यशोभनंप्रातरभूदितिप्रीताः ॥ ३७ ॥ ३८ ॥ ३९ ॥ मलयकरूशनामकाःस्फीताःपुष्टाः ॥ ४० ॥ ॥ ४१ ॥ सुंदस्यसुंदनाम्नोयक्षस्यअत्तिभक्षयति ॥ ४२ ॥ कलापःसमूहः ॥ ४३ ॥ मौनंतूष्णींभावं ताभ्यांलक्ष्मणविश्वामित्राभ्यां ॥ ४४ ॥

यत्रहैमवतीकांत लोचनानलजिव्हया ॥ अनंगोनंगतांप्राप्त स्तांरात्रिंतत्रतेवसन् ॥ ३५ ॥ कौतूहलेनमहता महामुनिगणाहरिं ॥ अर्चयांचक्रिरेतत्र रामनामानमागतं ॥ ३६ ॥ मुनयोविनयोपेताः पश्यंतोराघवाननं ॥ सुभातंनइतिप्रीताः संध्योपास्तिंप्रचाक्रिरे ॥ ३७ ॥ उपस्थितामुपारुह्य नावंनरवरात्मजौ ॥ सविप्रौतेरतुर्गंगां सुस्वनांसरयूजलैः ॥ ३८ ॥ दृष्ट्वावनंततोघोरं गछन्पप्छराघवः ॥ मुनिशार्दूलकस्येदं वनंघोरमहोइति ॥ ३९ ॥ इत्युक्तःप्रोक्तवान्विप्रो रामैतेविषयाः पुरा ॥ मलयश्चकरूशाश्च स्फीताइंद्रप्रसादतः ॥ ४० ॥ सुकेतुनाम्नोयक्षस्य ताटकातनयापुरा ॥ अवध्याब्रह्मवरतो नागायुतबलाभवत् ॥ ४१ ॥ भार्यासुंदस्यमारीच मातासागस्त्यशापतः ॥ रक्षस्त्वंससुताप्राप्य नरानत्त्यतिनिर्दया ॥ ४२ ॥ पश्यगोब्राह्मणगण कपालास्थिकलापकं ॥ त्वादृशानांसुदुर्दर्शं मान्यंकिंमन्यतेभवान् ॥ ४३ ॥ उक्त्वेतिमौनतांयाते मुनौमुनिजनप्रियः ॥ प्राविशत्सहितस्ताभ्यां ताटकाभवनंवनं ॥ ४४ ॥ चापंचापधरश्रेष्ठे जृंभयत्यदहल्क्षणात् ॥ स्फुलिंगवत्सविष्फारः ताटकाकर्णकोटरं ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥

जृंभयतिविष्फारयतिसति । ताटकाकर्णकोटरंताटकाकर्णाख्यबिलं ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तावत्ततःपूर्वमेव क्षपाचरीराक्षसी ॥ ४६ ॥ ४७ ॥ वात्याचक्रवातःराक्षसीरजोगुणसंबंधिनी ॥ ४८ ॥ मायाविनींकपटयुक्तां चकर्तेचिच्छेद ॥ पात्रिभ्यां शराभ्यां पत्रीरोपइषुर्द्वयोरित्यमरः । पत्रिकेतनःगरुडध्वजः ॥ पत्रिणौशरपक्षिणावित्यमरः ॥ ४९ ॥ विवृक्णोष्ठनासिकासंछिन्नोष्ठनासिका ॥ ५० ॥ सज्जनकृत्यासज्जनानांकृत्येवस्थिता कृत्येतिभूतविशेषः ॥ ५१ ॥ ५२ ॥ विधित्सुःकर्तुकामःपाटितवान्विदारितवान् । यथाकश्चिन्मार्गकर्तुकामःकवाटं

यावद्विष्फारसंत्रस्ता वनान्मृगखगादयः ॥ नोत्थिताःप्रोत्थितातावद पपातक्षपाचरी ॥ ४६ ॥
महाकायांमहावीर्यां व्यात्ताननमहागुहां ॥ अवेक्ष्योद्यतहस्तांतां रामस्तस्थावनाकुलः ॥ ४७ ॥
वात्येवात्यंतसंवेगा भूयःकोलाहलःस्वना ॥ राक्षसीसारजोवर्षं राजपुत्रेववर्षह ॥ ४८ ॥ पुनर्मायाविनींदृष्ट्वा शिलाजालाभिवर्षिणीं ॥ चकर्तास्याःकरौघोरौ पत्रिभ्यांपत्रिकेतनः ॥ ४९ ॥ सौमित्रिणाविवृक्णोष्ठ नासिकाकामरूपिणी ॥ अंतर्हितासाध्याहिता शस्त्रवृष्टिमवाकिरत् ॥ ५० ॥ मुनिरूचे तदारामं वनितावधलज्जितं ॥ वत्ससज्जनकृत्येयं हन्यतांहन्यतामिति ॥ ५१ ॥ चक्रवत्परिवृत्तां तां चक्रभृत्प्रहसन्निव ॥ अप्रयासःक्षणेनैव चकारशरपंजरे ॥ ५२ ॥ तामापतंतीमवलोक्यपुंसां स्वधर्ममार्गंभगवान्विधित्सुः ॥ उरःकवाटंखलुताटकायाः स्वपाटवात्पाटितवांछरेण ॥ ५३ ॥
जयजयजगतांपतेनमस्ते भवतुजयांकुरएषकल्पवृक्षः ॥ इतिवदद्भिनंदिनाकिवृंदं कुसुमचयंप्रववर्षराममौलौ ॥ ५४ ॥ इति श्रीसंग्रहरामायणे बालकांडे रामांके चतुर्थःसर्गः ॥ ४ ॥ ॥

विवृणोतितद्वदित्यर्थः ॥ ५३ ॥ जयउत्कृष्टतयावर्तस्व वदद्भिस्तुवत् अभिनंदिमहासंतोषयुक्तं । कुसुमकुलंपुष्पराशिं ॥ ५४ ॥ इति बालकांड टीकायां चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ श्री ॥ १ ॥ २ ॥ जगद्भृतेसर्वजगत्धारणाय ॥ ३ ॥ ४ ॥ ५ ॥ तान्मुनीन् आरात्समीपे ॥ ६ ॥ ७ ॥ तपस्यतःतपःकुर्वतः ॥ ८ ॥ बलेःमहाब-

॥ श्री ॥ सानुजःसजगन्नाथो मानितोमुनिनाभृशं ॥ उषितस्तत्रतांरात्रिं प्रभातेनियमंव्यधात् ॥ १ ॥
ऋषीरहसिरामाय ददावस्त्राणिसर्वशः ॥ वैष्णवंब्राह्ममस्त्रंच शैवाग्नेयादिकानिच ॥ २ ॥ उपसं
हाररूपाणि जृंभकास्त्राण्युपादिशत् ॥ स्वकीयकर्तव्यतया सर्वज्ञायजगद्भृते ॥ ३ ॥ ब्रह्मादयो
ह्यस्त्ररूपाः परिवार्यार्यसंमतं ॥ प्रोचुःप्रांजलयःस्वामिन् किंकरास्तेवयंत्विति ॥ ४ ॥ सौमित्रिर
प्यमित्राछि द्विश्वामित्रादवाप्तवान् ॥ समस्तानिमहास्त्राणि ब्राह्मादीनिब्रहन्मनाः ॥ ५ ॥ ताननु
ज्ञाप्यकाकुत्स्थो गछन्पप्रछसर्ववित् ॥ पश्यन्नाश्रममारात्सः कोयंदेशइतिद्विजं ॥ ६ ॥ तमब्रवी
द्गाधिसुत स्तातायंपरमाश्रमः ॥ अधिष्ठितःपुरासाक्षा द्विष्णुनाप्रभविष्णुना ॥ ७ ॥ बहवोत्रतप
स्यंतः सित्धाःसित्धत्वमाययुः ॥ तस्मात्सित्धाश्रमोनाम सित्धेर्दाताह्यधोक्षजः ॥ ८ ॥ बलैर्बले
नसंत्रस्तै र्देवैरत्रार्थितोहरिः ॥ कश्यपेनापितपसा ततोदित्याःसुतोभवत् ॥ ९ ॥ वामनोवामने
त्रोसौ वामएवामरद्विषां ॥ अयाचतबलेस्त्रीणि पदानिकिललीलया ॥ १० ॥ दत्तमात्रेबलींद्रेण
भूतलेत्रिपदाह्वये ॥ अणोरणीयान्महतो महीयान्भगवानभूत् ॥ ११ ॥ तस्यत्रिविक्रमस्याय
माश्रमाश्चित्रविक्रम ॥ वयंचान्येचमुनयो वसामोत्रमहामते ॥ १२ ॥ ॥ ॥ ॥

लेः ॥ ९ ॥ वामनेत्रःचारुनेत्रःवामएवशत्रुरेव ॥ १० ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आलपंत:आभाषणंकुर्वंत: । स्यादाभाषणमालापइत्यमर: ॥ १३ ॥ षडन्हपरिकल्पितं षड्भिर्दिनै:परिमाणमित्यर्थ: ॥ १४ ॥ भूयिष्ठेमहत्तमे ॥ १५ ॥ खेआकाशे उद्यछसंनद्धोभव आदत्तआददे ॥ १६ ॥ १७ ॥ रामसितेषुवीर्येणरामनिशितबाणवीर्येण ॥ १८ ॥ सुबाहुं सुबाहुनामकराक्षसं यमनिकेतनं यमपुरं ॥ १९ ॥ पिशिताशिनांराक्षसानां ॥ २० ॥ उदवस्यसमाप्य ॥ २१ ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इत्यालपंतस्वालापां स्तेतमाश्रममाविशन् ॥ उत्सवोमुनिनेत्राणां भास्करोप्यब्धिमाविशत् ॥१३॥
सप्तर्षिभि:समेतोथ षडन्हपरिकल्पितं ॥ कौशिक:कोसलेंद्रस्य यज्ञमारभताज्ञया ॥ १४ ॥ तत:
षष्ठेन्हिभूयिष्टे संप्रवृत्तेक्रतूत्तमे ॥ जज्वालवेदि:सकला हाहाकारोमहानभूत् ॥ १५ ॥ आकर्ण्यखे
कलकलं दृष्ट्वादुष्टौचराक्षसौ ॥ उद्यछलक्ष्मणेत्युक्त्वा चापंचादत्तराघव: ॥ १६ ॥ नप्रादूषयतांया
व त्तौशोणितवमद्रवै: ॥ यज्ञंयज्ञेश्वरस्ताव द्घोरंशरममुंचत ॥ १७ ॥ राममुक्तेषुवीर्येण विद्धुत्यशत
योजनं ॥ मारितोस्मीतिमारीचो ममज्जलवणार्णवे ॥ १८ ॥ ज्वलनज्वालमादाय सपुन:साय
कांतरं ॥ सुबाहुंचमहाबाहुं निन्येयमनिकेतनं ॥ १९ ॥ पुनश्चापातयद्बाणै: शिरांसिपिशिताशि-
नां ॥ तालानामिवपक्वानि राम:केचित्पराद्रवन् ॥ २० ॥ उदवस्यद्विजोयज्ञं मुनिमंडलसं
वृत: ॥ प्रशशंसभृशंराम माशीर्भिरभिपूरयन् ॥ २१ ॥ तस्यांरात्र्यांव्यतीतायां मुनींद्रोमुनि
संसदि ॥ सानुजंप्रत्युवाचेदं मधुरंमधुसूदनं ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥

घोष्यतेआघोष्यते विदेहान् विदेहदेशान् ॥ २३ ॥ २४ ॥ २५ ॥ शोणस्यशोणाख्यनदस्य प्रांतंसमीपं ॥ २६ ॥ कुशिकपुत्राणां तन्नामकराजपुत्राणां कथनीयानांकथितुंयोग्यानां ॥ २७ ॥ २८ ॥ प्रातिष्ठंत अगच्छंन् अन्हायवेगेन ॥ २९ ॥ ३० ॥ गांभूमिं ॥ ३१ ॥ गुसिंधुत्वं स्वर्गनदीत्वं ॥ ३२ ॥

स्वयंवरोवरोनाम जानक्याभुविघोष्यते ॥ महोत्सवोत्सुकाःसर्वे विदेहान्यांत्यहोजनाः ॥ २३ ॥
तामिछंतोहिगछंति राजानोराजनंदन ॥ यास्यामोवयमप्यत्र द्रक्ष्यामस्तंमहोत्सवं ॥ २४ ॥
एवमुक्तामुनिवरो मुनिभिःपरिवारितः ॥ सरामलक्ष्मणःप्राया दुत्तरांदिशमुत्तमां ॥ २५ ॥ नंद-
राजस्यशोणस्य प्राप्यप्रांतंमहामुनिः ॥ उवासतत्रतांरात्रीं सहशिष्यैःसराघवैः ॥ २६ ॥ पुरा
कुशिकपुत्राणां देशांस्तानवलोकयन् ॥ कथांसकथनीयानां कथयामासतापसः ॥ २७ ॥ कुशना-
भसुताद्भूपा त्कुशपौत्रान्महाबलात् ॥ गाधिनाम्नोनिजंजन्म रामायाहस्मकौशिकः ॥ २८ ॥ प्रा-
तिष्ठंततःप्रात र्ब्राह्मणाराघवान्विताः ॥ अन्हायजान्हवींप्राप्य मध्यान्हेविश्रमंययुः ॥ २९ ॥
सानुजस्तत्रकाकुत्स्थो हविर्भुक्तामृतोपमं ॥ ज्ञानंचपप्रछमुनिं विज्ञानायसतांप्रभुः ॥ ३० ॥ इयं
गंगाकुतोजाता गांजगामकथंपुनः ॥ राघवेणेत्यभिहितो हितायोचेसतांमुनिः ॥ ३१ ॥ अभूता
मद्भुतगुणे उमेहिमवतःसुते ॥ गंगागमद्युसिंधुत्वं उमागिरिशदारतां ॥ ३२ ॥ शिवस्यशिवया
सार्धं रतियोगोन्ववर्तत ॥ दिव्यवर्षसहस्रंच नैकत्रापिपराजयः ॥ ३३ ॥ तद्वीर्यभीरुभिर्देवैः
सुरतेविहतेहरः ॥ विससर्जनिजंवीर्यं जान्हवीवन्हिभूमिषु ॥ ३४ ॥ ॥ ॥ ॥

शिवयाउमया एकत्रापिशिवेशिवायांच पराजयःवीर्यपातलक्षणः ॥ ३३ ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

संभूतंमिलितं ॥ ३५ ॥ ३६ ॥ शिवाभ्यां उमाहराभ्यां ॥ ३७ ॥ गिरेर्हिमवतः ॥ ३८ ॥ तेपेतपश्चक्रे ॥ ३९ ॥ वंश्यः वंशप्रवर्तकः असमंजसः असमं-
जसनामा पराक्रांतं पराक्रमयुक्तं ॥ ४० ॥ सः असमंजसः संगसंविग्नः दुःसंगाद्भीतः नृशंसत्वं क्रूरत्वं जातपुत्रः उत्पन्नपुत्रः पित्रासगरेण ॥ ४१ ॥ मेध्यंय-

सर्वैरधार्यंतद्वीर्यं संभूतंभूतिदंसतां ॥ श्रीमान्कुमारःस्कंदोभू च्छिवयोर्नंदनःप्रियः ॥ ३५ ॥ तंका
र्तिकेयंगांगेय माग्नेयंचप्रचक्षते ॥ सेनापतिंसुरपति र्यंकृत्वान्यहनद्रिपून् ॥ ३६ ॥ वासुदेवप्रसा
दाय शिवाभ्यांतपसिस्थितं ॥ एवंविधामहादेवी गंगावतरणंश्रृणु ॥ ३७ ॥ पुरापादोदकंगंगा
चक्रिणोविक्रमत्रये ॥ कुतश्चित्कारणाज्जाता गिरेर्भूयोदिवंगता ॥ ३८ ॥ भूपोभूत्सगरोनाम ना
रायणपरायणः ॥ पूर्वजोभवतांपूर्वं तपस्तेपेसुतेच्छया ॥ ३९ ॥ एकस्यामेकपुत्रोभू देकवंश्योस-
मंजसः ॥ अपरस्यांपराक्रांतं पुत्रषष्टिसहस्रकं ॥ ४० ॥ सयोगीसंगसंविग्नो नृशंसत्वंप्रकाशय
न् ॥ एकपुत्रोजातपुत्रः पित्रात्यक्तोऽगमद्वनं ॥ ४१ ॥ अदीक्षिताश्वमेधेन सगरःसकदाचन ॥
शतक्रतुरदृश्योस्य मेध्यंहयमुपाहरत् ॥ ४२ ॥ मेध्यमश्वमभीप्संतः सागराअखनन्भुवं ॥ आ-
समुद्रादहोतस्मा त्सागरःसागरोऽभवत् ॥ ४३ ॥ कपिलाख्यंपरंज्योति रश्वचोरोयमित्यमी ॥
अभिपेतुर्जिघांसंतः पतंगाइवपावकं ॥ ४४ ॥ वासुदेवस्यदेवस्य लोचनोन्मीलनानलः ॥ अद-
हत्तान्नतच्चित्रं सर्वसंहारिणोहरेः ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ज्ञीयं ॥ ४२ ॥ सागराः सगरपुत्राः सागरः समुद्रः सागरः सगरपुत्रकृतवहुप्रदेशवान् सगरसंबंधी ॥ ४३ ॥ जिघांसंतः हंतुकामाः पतंगाः शलभाः ॥ ४४ ॥ ४५ ॥

अंशुमान् अंशुमानितिप्रसिद्धः। आसमंजसिः असमंजससुतः तस्मैकापिलाय ॥ ४६ ॥ अनुग्रांप्रसन्नांगां वाचं ॥ ४७ ॥ आशुक्षिप्रं शमीक्षमावान् ॥ ४८ ॥ ब्रम्हदंडहतान् ब्राम्हणापराधेनहतान् द्विजेंद्राज्ञया कपिलाज्ञया गंगावतारणं गंगावतरणकारणं ॥ ४९ ॥ कालधर्मंमरणं तस्मिन् अंशुमति दिलीपाख्येतत्सुतेच तपःकृत्वापि अकृतार्थे अप्राप्तगंगावतारे कालधर्मंगतेसति तत्सुतःदिलीपसुतः ॥ ५० ॥ पतंत्याः अधःपतंत्याः भर्तारंधारकंपुरुषं ॥ ५१ ॥ विष्णुपद्याःगंगा-

अश्वान्वेषीततःपार्श्वे अंशुमानासमंजसिः ॥ ननामतस्मैनाथाय क्षम्यतांक्षम्यतामिति ॥४६॥ अनुग्रहादनुग्रांगां करुणामृतवर्षिणीं ॥ ऊचेदेवोहयस्तात यज्ञीयोनीयतामिति ॥४७॥ आश्वानीयकुमारोश्वं पितामहमखंमहान् ॥ साधयामासशांतात्मा शमीहस्यात्पराक्रमी ॥ ४८ ॥ स्वर्गमार्गंगमयितुं ब्रह्मदंडहतान्पितॄन् ॥ सद्विजेंद्राज्ञयातेपे तपोगंगावतारणं ॥४९॥ कालधर्मंगतेतस्मिन् अकृतार्थे-नरेश्वरे ॥ तत्सुतेचदिलीपाख्ये तस्थौतपसितत्सुतः ॥५०॥ प्रसादाद्ब्रह्मणोगंगां प्राप्यराजाभगीरथः ॥ तस्याःपतंत्याभर्तारं त्रिलोक्यांनाभ्यपद्यत ॥५१॥ विष्णुपद्याधृतौयोग्यं वैष्णवाग्रेसरंहरं ॥ तोषयित्वैवतपसा तामवातारयन्नदीं ॥५२॥ तांहारगौरीमतिचित्रयात्रां जन्होश्चकन्यात्वमुपागतांसः ॥ नीत्वातदंभःपरिसिक्तदेहं निनायनाकंनिजताततजातं ॥५३॥ हरिचरणसरोजसंगिनीयं हरतिमहच्च मलंनचित्रमेतत् ॥ श्रवणमननकीर्तनानिविष्णो परमपदाय मनोभिरामरामं ५४ इति श्री पं०स०५

याःयोग्यंसमर्थं तांगंगां ॥ ५२ ॥ हारगौरांहारवच्छ्वेतां जन्होःजन्हुनामकस्यराज्ञः। भीमस्तुविजयस्याथ कांचनोहोतृकस्ततः। तस्यजन्हुःसुतोगंगांगंडूषीकृत्ययोपिबदितिभागवते। राजवंशकथनाज्जन्हुरितिब्रम्हर्षिर्नभवत्येव निनायप्रापयामास। नाकंस्वर्गं निजताततजातं स्वकीयपितृसमूहं ॥ ५३ ॥ महन्मलंबहुलमपिपापं परमपदाय परमपदप्राप्तये भवति मनोभिरामहेरामेति रामंप्रतिविश्वामित्रस्य संबोधनं ॥५४॥ इति श्रीसंग्रहरामायणे बालकांडटीकायां पंचमःसर्गः ५

॥ श्री ॥ क्षणदारात्रिः ॥ १ ॥ सुरनिम्नगांगंगां ॥ २ ॥ विशालेनविशालनाम्नाराज्ञा ॥ ३ ॥ आदिंउत्पत्यादिकं यद्वंश्यैःयस्यविशालस्यवंशजातैर्भूपैः ॥ ४ ॥ नेत्रंपाशःनेत्रश्रुतीश्वरःवासुकिनामासर्पाधिपः ॥ ५ ॥ कत्छपःकूर्मरूपः ॥ ६ ॥ ७ ॥ सरसःरूपलावण्यादिरसविशिष्टः अप्सरसांगणश्च

श्री ॥ इत्थंकथासंकथनैः पुण्यश्लोकानुवर्तिनां ॥ क्षणदाभूत्क्षणसमा सरामाणांद्विजन्मनां ॥ १ ॥ नानामुनियुतौनावा कोसलेंद्रौसकौशिकौ ॥ उत्तरंतीरमुद्दिश्य तेरतुःसुरनिम्नगां ॥ २ ॥ वैशाली नामनगरीं विशालेनपुराकृतां ॥ चारुशालांविशालांच विविशस्तेमहोदयां ॥ ३ ॥ विशालस्यनृपस्यादिं राघवायाभ्यधान्मुनिः ॥ तस्यवंशंचतद्वंश्यै वैशालीशशुभेपुरी ॥ ४ ॥ ममंथुरंबुधिंदोग्धुं पूर्वंसर्वेसुरासुराः ॥ तत्रासीन्मंदरोमंथा नेत्रंनेत्रश्रुतीश्वरः ॥ ५ ॥ सहस्रहस्तोभगवान् स्थिरीचक्रेद्रिमुद्गतं ॥ अधस्तादपिगछंतं कछपःकरुणाकरः ॥ ६ ॥ सुरासुरेषुश्रांतेषु संगृह्याहिमिहाजितः ॥ मंदरंसममंथाथ चलत्कंकणभूषणः ॥ ७ ॥ चंद्रादिरादयोजाताः सरसाप्सरसांगणः ॥ हरिर्धन्वंतरिस्तत्र सुधाकलशवानुदेत् ॥ ८ ॥ अमृतंहरतोमोहा दसुरानसुरांतकः ॥ मोहयन्महिलारूपी हत्वास्वेभ्योददौसुधां ॥ ९ ॥ पुनःसुरासुररणे हतपुत्रादितिःपतिं ॥ विलोक्यगर्भेलेभेयं तंचकर्तचवज्रभृत् ॥ १० ॥ मारोदीरितिसोवादी यद्गर्भंदलनात्धरिः ॥ तस्मात्ते मरुतोनाम महेंद्रस्याभवन्प्रियाः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

जातइत्यन्वयः । धन्वंतरिर्धन्वंतरिनामकः ॥ ८ ॥ महिलारूपी स्त्रीरूपी स्वेभ्योस्वभक्तेभ्योदेवेभ्यः ॥ ९ ॥ पतिंकाश्यपं तंगर्भंचकर्तखंडयत् ॥ १० ॥ गर्भदलनात् गर्भछेदनात् हरिः इंद्रः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अन्येषांद्वेषिणां अन्यथाविपदस्युरित्यर्थः ॥ १२ ॥ तासांक्षीरसमुद्रजातानां अयतत्रगराधिपः ॥ १३ ॥ आलपतःआभाषणकुर्वतः । सुमतःसुमत
नामकः वैशालःविशालवंशजातः तान्रामादीन् ॥ १४ ॥ विप्रवचनात् विश्वामित्रवचनात् ॥ १५ ॥ निवर्त्यनिर्गमयित्वा शर्वरींरात्रिं ॥ १६ ॥ १७ ॥

उत्तमश्लोकभक्ताना मुत्तमास्युर्हिसंपदः ॥ अन्येषामन्यथादृष्टा दृष्टांतास्तत्रहीदृशाः ॥ १२ ॥
तासामप्सरसांमध्ये रम्यमाहुरलंबुसां ॥ तस्यामयंविशालोभू दिक्ष्वाकोस्तवपूर्वजात् ॥ १३ ॥
इत्थमालपतोदृष्ट्वा प्रविष्टान्पुरुषर्षभान् ॥ सुमतिर्मतिमान्पुर्यां वैशालस्तानपूजयत् ॥ १४ ॥
विजानन्विप्रवचना द्राजातौरामलक्ष्मणौ ॥ अलालयज्जगल्लाल्यौ भूयोभुवनसुंदरौ ॥ १५ ॥
निवर्त्यशर्वरींतत्र प्रभातेनिर्गतःपुरात् ॥ मिथिलोपवनंमंद पवनंप्रापराघवः ॥ १६ ॥ मिथिलो
पवनप्रांते दर्शयन्नाश्रमांतरं ॥ गाधिसूनुरुवाचेदं मधुरंमधुसूदनं ॥ १७ ॥ अतिरिक्तंतपोहर्तुं
गौतमस्याश्रमेरिहा ॥ सुरकार्यंसुरपतिः कुर्वन्भार्यांसमस्पृशत् ॥ १८ ॥ ऋषिराश्रममाश्रित्य
तज्ज्ञात्वाकुपितोऽशपत् ॥ विफलःस्यादुपपति रुपलाभवपुंश्चलि ॥ १९ ॥ रामावलोकनाद्रामा
भवेदितिकृपाकरः ॥ शापमोक्षंस्वजायायै सोहल्यायैप्रदत्तवान् ॥ २० ॥ पितृदेवाःसुरेंद्राय द-
दुरुत्कृत्ययोगतः ॥ निजमेषस्यवृषणं समेषवृषणस्ततः ॥ २१ ॥ ॥ ॥ ॥

अतिरिक्तं स्वयोग्यतातिरिक्तं भार्यांअहल्यानाम्नीं ॥ १८ ॥ आश्रित्यआगत्य तत् इंद्रकृतंकर्म विफलःवृषणरहितःउपपतिःजारइंद्रः । जारस्तूपपतिः
समाविसमरः। उपलाशिला। उपलाश्मानःशिलादृषदित्यमरः ॥ १९ ॥ रामास्त्री भवेःभवस्व सगौतमः ॥ २० ॥ पितरश्चदेवाश्चेति पितृदेवाःसइंद्रः ॥ २१ ॥

मनःशल्यं मनोव्यथां कल्याण्यां अहल्यायां ॥ २२ ॥ उदितःउक्तःमुदितःतुष्टः प्रेक्षणीयेन मनोहरेण ॥ २३ ॥ शिलाभूताप्यहल्या कांताप्रिया भर्तृस्नेहास्पदा ॥ २४ ॥ सदारःभार्यासहितः ॥ २५ ॥ विशंकटे विशाले ॥ २६ ॥ विविक्तेविभिन्ने आस्तेस्म आस्थितोभूत् ॥ २७ ॥ २८ ॥ नागराःनगर



महेंद्रस्यमनःशल्यं त्वद्भक्तस्यसमुद्धर ॥ करुणांकुरुकल्याण्यां भवान्हिकरुणाकर ॥ २२ ॥ कौशिकेनैवमुदितो मुदितोगतआश्रमं ॥ प्रैक्षतप्रेक्षणीयेन तामपांगेनशार्ङ्गभृत् ॥ २३ ॥ सातद्दर्शनमात्रेण कांताकांतप्रियाबभौ ॥ नतच्चित्रंहरौविश्वं यद्भ्रूविभ्रमसंभवं ॥ २४ ॥ उदारचरितं रामं सदारःपर्यपूजयत् ॥ गौतमोभक्तिभरितो विश्वामित्रममानयत् ॥ २५ ॥ ततःप्रागुत्तरांप्राप्तो दिशंदेशेविशंकटे ॥ यज्ञवाटंसयज्ञेशो जनकस्यसमैक्षत ॥ २६ ॥ जनतापरिपूर्णस्य यज्ञवाटस्यराघवः ॥ नातिदूरेविविक्तेस्म स्थलआस्तेसकौशिकः ॥ २७ ॥ अपूर्वपुरुषोपेतं विश्वामित्रमुपागतं ॥ जनकोभिययौश्रुत्वा शतानंदादिभिर्वृतः ॥ २८ ॥ महोत्सवमुपायाता नानाजनपदाजनाः ॥ द्रष्टुमभ्याययूरामं सस्त्रीबालाश्चनागराः ॥ २९ ॥ अभिपूज्ययथान्यायं परिवारयुतंमुनिं ॥ लोकनाथंविलोक्येदं वाक्यमूचेमुनिंनृपः ॥ ३० ॥ श्रीमान्मरकतश्यामः पद्मपत्रनिभेक्षणः ॥ नवयौव्वनसंपन्नः कएषपुरुषर्षभः ॥ ३१ ॥ सिंहस्कंधोमहोरस्कः पूर्णचंद्रनिभाननः ॥ गंभीरनाभिःकोन्वेषः कंबुग्रीवोमहाभुजः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥



विद्यमानाः ॥ २९ ॥ मुनिंविश्वामित्रं नृपःजनकः ॥ ३० ॥ ३१ ॥ कंबुग्रीवः मथितशंखसमकंठः त्रिरेखायुक्तकंठोवा कंबुग्रीवात्रिरेखासेत्यमरः ॥ ३२ ॥

अमितार्थंबहुलार्थं मितंअक्षरतोल्पं ॥३३॥३४॥३५॥ ३६ ॥ पृछतिविचारयतिमाति मनोनरेजनमध्ये॥३७॥३८॥३९॥ रक्षःराक्षसकुलं अयंरामःअपीपलत्
अरक्षत्अमूमुचंतंमोचितवान् ॥ ४० ॥ दिदृक्षतेद्रष्टुमिछति धानुष्कहाटकानांधनुर्धराख्यसुवर्णानां ॥ ४१ ॥ जामातरंपुत्र्याःसीतायाःपतिं ॥ ४२ ॥ गांवाचं

अविस्मितास्मितमुखो गजराजगतिःकविः ॥ मुनेकोयंविनयवा नमितार्थंमितंवदन् ॥ ३३ ॥ अंगना
नामनंगोयं त्वादृशानांतुकिंकरः ॥ वैरिणांकेवलंकालो योगिनांभगवान्हरिः ॥ ३४ ॥ सुकुमारःकुमा
रोयं जनानांनयनोत्सवः ॥ पादपल्लवयोरस्य भूस्पर्शंनसहामहे ॥ ३५ ॥ अस्यपार्श्वेपरःकोयं
अस्यसादृश्यवांस्थितः ॥ प्रतिबिंबदन्वेति बिंबोष्ठोयमयंसदा ॥ ३६ ॥ पृछतिस्वछत्हृदये राजन्येवं
जनांतरे ॥ किंचित्स्मित्वाऽवदद्वाणीं प्रवीणोगाधिनंदनः ॥ ३७ ॥ अयंदशरथस्यांग नंदनःपुरुषो
त्तमः ॥ चिकीर्षुःसुरकार्याणि रामोनाममनोरमः ॥ ३८ ॥ अयंतस्यानुजःश्रेष्ठो लक्ष्मणःशुभलक्षणः ॥
अयोध्यायामयानीता वेतौसिद्धाश्रमंप्रति ॥ ३९ ॥ रक्षोनिहत्ययज्ञंमे लीलयायमपीपलत् ॥ अपां
गेनमुनेःशापा दहल्यामप्यमूमुचत् ॥ ४० ॥ धन्विनामग्रणीरेष धनुस्तवदिदृक्षते ॥ धानुष्कहाटका
नांच निकषाश्मायितंकिल ॥ ४१ ॥ समस्तगुणसंपूर्ण मेनंजामातरंकुरु ॥ वीरक्षीरांबुधिरिव पुरा
णपुरुषंपुरा ॥ ४२ ॥ गामित्थंगाधिपुत्रस्य श्रुत्वागौतमनंदनः ॥ शतानंदोमहानंदो रघुनंदनमब्रवी
त् ॥ ४३ ॥ रामदेवजगन्नाथ स्वागतंसानुजस्यते ॥ दिष्ट्यामेजीवितामाता भवताकरुणावता ॥ ४४ ॥
मन्येधन्यामिमंलोके विश्वामित्रंमहामुनिं ॥ अंतेवासिवदन्वेतियं भवान्पुरुषोत्तमः ॥ ४५ ॥ ॥

शतानंदःशतानंदनामा महानंदःमहासंतोषवान् ॥४३॥ दिष्ट्यादैवात्॥४४॥ धन्यतमंअत्युत्तमंअंतेवासिवत्शिष्यवत्। छात्रांतेवासिनौशिष्यइत्यमरः ४५

॥४६॥ शबलाकामधेनुःनृपतेःअस्यविश्वामित्रस्य॥४७॥ सःगाधिपुत्रः ॥४८॥ ब्रह्मजःवसिष्ठःवैष्णवेनविष्णुदैवत्येन तंराजानं ॥४९॥ वासिष्ठैःवसिष्ठकुलो
द्भवैः॥५०॥५१॥५२॥ निरुछ्वासःस्तंभितश्वासःनिरास्पदःनिश्चलःनिरामयःक्षुधादिबाधारहितः॥५३॥ अन्वमोद्यत अनुमोदितभूत् दत्तामितिभावः ॥५४॥

एषराजापुराराम गाधिसूनुर्महाबलः॥ वसिष्ठस्यवरिष्ठस्य गांकामदुहमाहरत्॥४६॥ शबलासाशकम्लें
छ यवनैर्बल्बवादिभिः॥ आत्मनोवयवोद्भूतै र्जघाननृपतेर्बलं॥४७॥ नरदेवोमहादेवं प्रसाद्यास्त्राण्यवाप्त
वान्॥ सब्रह्माणिचसर्वाणि वसिष्ठैर्युयुधस॥४८॥ ब्रह्मजोब्रह्मदंडेन वैष्णवेनतमभ्ययात्॥ अग्रसत्ता
निचास्त्राणि परब्रह्मप्रसादतः॥४९॥ वैष्णवेनैवतपसा समर्थोगाधिनंदनः॥ चंडालितंचवासिष्ठै स्त्रिशं
कुस्वर्गमानयत्॥५०॥ मखेकल्पतंपशुत्वेन शुनःशेपमपाहरत्॥ पुनश्चोरुतपस्तेपे वासुदेवमसौस्मरन्
॥५१॥ मेनकायांतुकामेन रंभायांक्रोधतोप्यसौ॥ दैवेछयातपोनाशं प्राप्यतेपेपुनस्तपः॥५२॥ निरा
हारोनिरुछ्वासो निरास्पंदोनिरामयः॥ वर्षायुतान्यनेकानि तपश्चक्रेथचाक्रिणे॥५३॥ राजर्षित्वमृषित्वं
च महर्षित्वंमहाव्रतैः॥ ब्रह्मर्षित्वंचब्रह्माद्यैः क्रमेणास्यान्वमोद्यत॥५४॥ वासुदेवप्रसादोयं मीदृशोय
स्याविद्यते॥ ब्रह्मण्यस्यतवैतास्मिन् प्रणयोनातिविस्मयः॥५५॥ गौतमात्मजागिरंसराघवः शुश्रुवानि
तिददर्शकौशिकं॥ तत्रतत्रहिकथाश्रुणोत्यसौ सर्वविश्वजगतांविडंबयन्॥५६॥ सुज्ञानरूपेजगदेकदीपे
नाज्ञानलेशोपिघटेतरामे॥ प्रकाशमूर्तावहिमप्रकाशे नहिकचिध्वांतलवोपिलक्ष्यः॥५७॥ इतिश्री संग्र
हरामायणेबालकांडे नारायण पंडिताचार्यकृतौ षष्ठःसर्गः॥ ६ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

॥५५॥ इतिशुश्रुवानितियोजना। विडंबयन् अनुकुर्वन् ॥५६॥ अहिमनकाशेसूर्ये ध्वांतलवः अंधकारलेशः लक्ष्यःद्रष्टुंयोग्यः ॥५७॥ इति बा० टी० षष्ठःसर्गः ६

॥ श्री ॥ सप्रश्रयोविनयवान् पृष्ट्वा सप्रश्रयामितिनाग्निशेषणंवा ॥ १ ॥ गांभूमिंनिकर्षेन्मन्तःपेइनिधिषयपट्टीसीराग्रभागेति हलाग्रमागेन अतएवलांगलपत्थाति जातत्वादेव सीतासीतानाम्नी । सीतालांगलपत्थतिरित्यभिधानं ॥ २ ॥ अंत्रायशूद्रायकथंचनमन्त्रंवा ॥ ३ ॥ धनूरत्नं अन्युत्तमंधनुः नः अस्माकंपिनाकनामक-

श्री ॥ ततःपरस्मिन्दिवसेसराजा सराघवंकौशिकमात्मशालां ॥ आनीयनत्वापरिपूर्णकामः सप्रश्रयोवाचमुवाचवाग्मी ॥ १ ॥ यागायगांगाधिजकर्षतोमे बभूवकन्याभुवनेषुधन्या ॥ सीराग्रमार्गादतवएसीता महानिधिश्रीरिवनिर्धनस्य ॥ २ ॥ पूर्णायदाचंद्रकलेवबाला तदाचिरंमांप्रविवेशचिंता ॥ इमामयोग्यायकथंनुदद्यां त्रयीमिवांत्यायकथंचनेति ॥ ३ ॥ वरंधनूरत्नमलाभिशंभोः प्रसादितान्नस्तपसाचिरेण ॥ विनापिनाकान्नमचालनीयं विनायथाभूतलमादिकोलं ॥ ४ ॥ दक्षाध्वरेपूर्वमनेनशर्वो नप्राप्यभागंत्रिदशांश्चकर्त ॥ प्रसादितःक्षिप्रतरप्रसादः स्वांगानितेषामथसंदधेच ॥ ५ ॥ आरोपयेच्चापमिमंयएव तस्मैप्रदास्यामिसुतांममेति ॥ प्रतिश्रवोमेविससारलोके सहस्ररश्मेरिवरश्मिराशिः ॥ ६ ॥ विराजमानाइहराजपुत्राः सयक्षरक्षप्रवराश्चदैत्याः ॥ स्वयंवरं वीरवराउपायन् पद्माकरंहंसवराइवाशु ॥ ७ ॥ आलोक्यकेचिद्धनुराप्यकेचि दन्येपरिस्पृश्यपरेप्रचाल्य ॥ वीराअवीरत्वमवाप्ययाताः केचिद्गतास्तानवलोक्यभीताः ॥ ८ ॥ उद्धर्तुकामाधनुरुद्धताये स्विन्नाःक्षितौतेपतिताःसमूर्छाः ॥ दशाननाद्याश्चदशामगच्छन् शोच्यामशोच्याःकिमुतान्यलोकाः ९

मस्त्रं धनुरस्येतिपिनाकास्त्रोद्ररुः तंआदिकोलंआदिवराहं ॥ ४ ॥ यन्नंदत्तेनानेनचापेन ॥ ५ ॥ इमंएवंविधं प्रतिश्रवःप्रतिज्ञा ॥ ६ ॥ उपायन्उपाजग्मुः ॥ ७ ॥ ॥ ८ ॥ स्विन्नाः अशक्तत्वात्स्वेदयुक्ताःदशांअवस्थां ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शठाः शूद्रद्वेषिणः हठात् बलात्कारात् नशेकुः शक्तानबभूवुः। संयति युद्धे मामांवरः श्रवरः विरिंचस्य ब्रम्हणोवरः बलमित्यन्वयः। नतुस्वभावशक्तयतिशयइति भावः ॥ १० ॥ प्रभानाथंसूर्यं ॥ ११ ॥ द्राक्शीघ्रं ॥ १२ ॥ आचकृषे आकृष्टं अष्टचक्रमंजूषयेत्यनेन मंजूषायाः स्थूलत्वंप्रकटयति। अयः कृतया अष्टचक्रमंजुषया अभिगुप्तंवरंशिवास्त्रं। राजाज्ञयाशिवस्यवरादेवपंचसहस्रसंख्यैर्वीरोत्तमैराचकृषइत्यन्वयः। शिवस्यैववरादित्यनेनतेषामपितदाकर्षणशक्तिः शिववरादे

शठाहठादप्यपहर्तुकामाः कन्यांनशेकुर्बलिनोपिमत्ताः ॥ संवत्सरंसंयतिमामियाता बलंविरिंचस्यवरोवरोमे ॥ १० ॥ आरोपयेद्राघवएवचाप मन्वेतुसीतापतिमेनमेव ॥ संपूर्णचंद्रंप्रतिचंद्रिकेव प्रभाप्रभानाथमिवानुरूपा ॥ ११ ॥ इतिब्रुवाणंनरनाथमेन मुदाहरद्विप्रउदारचेताः ॥ शरासनंवैरिनिरासनंत दानीयतांद्रागवनीश्वरेति ॥ १२ ॥ राजाज्ञयाऽथाचकृषेष्टचक्रमंजूषयायःकृतयाभिगुप्तं ॥ वीरोत्तमैः पंचसहस्रसंख्यै र्वराच्छिवस्यैववरंशिवास्त्रं ॥ १३ ॥ मुनिर्मुकुंदंनिजगादवत्स रामेदमापूरयचापरत्नं ॥ इतीरितोयंनृपतेःकुमारो ब्रुवाणॐमित्युदतिष्ठदीशः ॥ १४ ॥ श्यामंचलत्कुंडलचारुगंडं लावण्यसिंधुंधनुरात्रजंतं ॥ लोकेशमालोक्यविलासिनीना मन्योन्यमासीदितितत्रवार्ता ॥ १५ ॥ धन्याहिसाकोसलराजकन्या यासूनुमेनंसुषुवेसुवेशं ॥ सराघवोराजकरोपिधन्य स्तातेतियंतापहरोयमाह ॥ १६ ॥ संचीयसौंदर्यरसान्समस्ता निमंविधाताव्यधितेतिमिथ्या ॥ अकृत्रिमंप्रादुरभूद्भुवीद माश्चर्यरत्नंजनहर्षणाय ॥ १७ ॥ ॥ ॥ ॥

वनान्यथेत्युक्तंभवति ॥ १३ ॥ ॐमितितथास्त्वित्युक्तः उदतिष्ठत् उत्थितवान् ॥ १४ ॥ आव्रजंतंआगच्छंतं विलासिनीनांपुरस्त्रीणां ॥ १५ ॥ १६ ॥ संचीयएकीकृत्यव्यधितनिर्मितवान् मिथ्याअयथार्थं अकृत्रिमंअनिर्मितं स्वाभाविकमित्यर्थः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सीरध्वजकन्यकासीरध्वजनामकस्य भूपस्यकन्यका सामान्यनारी लोकस्त्रीसमानाकाचनस्त्री यागप्रयोगेयागप्रयोगार्थं प्रयत्नकरणसमये देवमायालक्ष्मीः ॥ ॥ १८ ॥ रामाभार्या योग्यःपतित्वइतिशेषः ॥ १९ ॥ धनुरानमेनधनुषआरोपणेन ॥ २० ॥ हेसख्यःतत्तयोःपाणिग्रहणंनःसुकृतेन शपामहेप्रार्थयामहे अस्म त्सुकृतंदत्वापितद्भवत्वितिप्रार्थयामहइत्यर्थः। शपधातोःप्रार्थनार्थत्वंच धातूनामनेकार्थत्वाद्युक्तं ॥ २१ ॥ प्रजल्पितानिसंभाषणानि दोष्णाहस्तेनभुजबाहूप्र

सीताचसीरध्वजकन्यकेयं सामान्यनारीनहिलोकमान्या ॥ यागप्रयोगेभुवआविरासीद्यादेवमायाजलधेरिवश्रीः ॥ १८ ॥ सीतैवरामस्यघटेतरामा तस्याश्चयोग्योननुरामएव ॥ यथेंदिरैवास्तिमुकुंदयोग्या मुकुंदएवोचितइंदिरायाः ॥ १९ ॥ सीतापतित्वंनपरीक्षणीयं रामस्यराज्ञाधनुरानमेन ॥ नहिप्रदीपेनपरीक्षणीयं प्रभाकरस्यप्रभयायुतत्वं ॥ २० ॥ नृपात्मजोयंजनकात्मजाया गृण्हातुपाणिंरमणोरमण्याः ॥ नारायणःसाध्वनुमोदतांत छपामहेनःसुकृतेनसख्यः ॥ २१ ॥ प्रजल्पितानीतिपुरांगनाना माकर्णयन्कर्णसुखानिपुंसां ॥ अविस्मितःसुस्मितएवरामो वामेनदोष्णाधनुरुज्जहार ॥ २२ ॥ नृणांसहस्रेसमवेक्षमाणेस्वस्तिवादेनृपतौमुनौच ॥ निजानुजेस्मेरमुखेसलील मारोप्यचापंसमपूरयत्सः ॥ २३ ॥ तालप्रमाणं परिकृष्यमाणं मध्येमहाचापमभज्यताशु ॥ विश्वाधिनाथेनविनैवयत्नं यथेंद्रनागेननवेक्षुदंडं ॥ २४ ॥ जगत्रयेदूतइवातिवेगीध्वनिर्धनुर्भंगभवःससार ॥ रामेणसीतोपगतेतिवार्ता मुद्घोषयन्व्यक्तमिवातिरम्यां ॥ २५ ॥ छित्वेदमछेद्यमवश्यमन्यैस्तत्कार्मुकश्रेष्ठमुदारकर्मा ॥ सलक्ष्मणःशोभनलक्षणोयं तस्थौविलोक्यास्यमुनेर्मुखेंदुं ॥ २६ ॥

वेष्टोदोरित्यमरः। उज्जहारउद्धृतवान् ॥ २२ ॥ नृपतौजनके मुनौविश्वामित्रे ॥ २३ ॥ अभज्यतभग्नमभूत् इंद्रनागेनऐरावतेन ॥ २४ ॥ ससारप्रससार ॥ २५ ॥ अन्यैरवश्यंसर्वथाप्यच्छेद्यामितियोजना मुनेर्विश्वामित्रस्य ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रावदत् प्रोक्तवान् ॥ १२ ॥ बांधवंबंधुलं ॥ १३ ॥ अवसाय अवसानंप्रापयित्वा स्मित्वास्मितंकृत्वा ॥ १४ ॥ वेश्मांतरे अन्यस्मिन्गृहे ॥ १५ ॥ परेद्युःपरदिने कुशध्वजंकुशध्वजनामकं ॥ १६ ॥ आनिनाय आव्हापयामास कुलाचार्यः वसिष्ठः ॥ १७ ॥ १८ ॥ वधूवंशंसीतावंशं ॥ १९ ॥ यस्मिन्

राघवंप्रावदद्राजा मुनींद्राणांचसंसदि ॥ दिष्ट्यादृष्टोसिराजेंद्र दुर्लभंप्रियदर्शनं ॥ १२ ॥ दिष्ट्या
मेराघवश्रेष्ठे रभूद्बांधवमीदृशं ॥ रामायलक्ष्मणायापि प्रदास्यामिसुतेमम ॥ १३ ॥ अवसाय-
महायज्ञ महंसीतोर्मिलेध्रुवं ॥ इत्युक्तोजनकेनोचे किंचित्स्मित्वासराघवः ॥ १४ ॥ प्रतिग्रहोदा
तृवशः तस्मादेवंभवत्विति ॥ सानंदोनंदनैःसार्धं राजावेश्मांतरेवसत् ॥ १५ ॥ विश्वामित्रवसि
ष्ठाद्यैः साकंहरिकथापरैः ॥ परेद्युर्भ्रातरंदूतै रुत्सवार्थंकुशध्वजं ॥ १६ ॥ वीरमिक्षुमतीतीरा दा-
निनायसमैथिलः ॥ कुलाचार्यःकुलीनानां कुलधर्मंसमाचरत् ॥ १७ ॥ सभायांसंनिधौराज्ञां वरवं
शमवर्णयत् ॥ यस्मिन्निक्ष्वाकुमांधातृ सगराःसांबरीषकाः ॥ १८ ॥ रघ्वजाद्याःसार्वभौमा नारा
यणपरायणाः ॥ जनकश्चवधूवंशं मुनीनामाज्ञयावदत् ॥ १९ ॥ यस्मिन्निमिर्देवरातो ऱ्हस्वरो-
मादयोनृपाः ॥ रामरामानुजाभ्यांस वाग्दानंकन्ययोर्व्यधात् ॥ २० ॥ विश्वामित्रवसिष्ठौता वे-
नंमैथिलमूचतुः ॥ कुशध्वजस्यतेभ्रातु र्भ्राजमानेसुतेउभे ॥ २१ ॥ दातव्येभरतायांग शत्रुघ्ना-
यचशोभने ॥ ऋषींद्रयोर्वचःश्रुत्वा मैथिलावथचोचतुः ॥ २२ ॥ ॥ ॥ ॥

वंशे निमिःतन्नामाचक्रवर्ती देवरातःतंनामा रामरामानुजाभ्यामितिचतुर्थी ॥ २० ॥ २१ ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अर्घ्यंप्रार्थनीयं श्वःपरदिने भाविनिभविष्यतिमनि महेउत्सवे ॥ २३ ॥ भूत्यै ऐश्वर्यायेत्यर्थः ॥ २४ ॥ स्वर्णवाससां सुवर्णैर्वस्त्रैश्चालंकृतानां ॥ २५ ॥ युधाजित् युधाजिन्नामकःकैकयविषयाधिपतिः ॥ २६ ॥ २७ ॥ उत्तराभ्यांफल्गुनीभ्यां उत्तराफल्गुनमुहूर्तेइत्यर्थः उद्वाहःविवाहः ॥ २८ ॥ यत्रउत्तराफ-

अर्घ्यमस्माभिरेवेदं भवद्भ्यांव्याहृतंत्विति ॥ अथश्वोभाविनिमहे नांदीश्राद्धानिराघवः ॥ २३ ॥
निमंत्र्यब्राह्मणांश्चक्रे चक्रीनःप्रीयतामिति ॥ चतुर्णामपिपुत्राणां भूत्यैविप्रगणायसः ॥ २४ ॥
गवांचतुःसहस्राणि ददौसस्वर्णवाससां ॥ धनैरन्नादिभिश्चायं यदाविप्रानतोषयत् ॥ २५ ॥ यु
धाजिदपितत्रागा त्तदाभरतमातुलः ॥ सबांधवोदशरथः कृतस्वस्त्ययनोद्विजैः ॥ २६ ॥ भूष-
णैर्भूषयामास पुत्रान्स्वगुणभूषणान् ॥ यथादशरथश्चक्रे चक्रातेमैथिलौतथा ॥ २७ ॥ कन्या-
नांसाधुकृत्यानि शतानंदमतोस्थितौ ॥ उत्तराभ्यांसउद्वाह फल्गुनीभ्यामभूत्तदा॥ २८ ॥ प्रा-
जापत्यमिदंकर्म यत्रशंसंतिपंडिताः ॥ राघवाणांचतुर्णांच विवाहोयंजगत्प्रियः ॥ २९ ॥ आ-
सीन्मुहूर्तएकस्मिन् ब्राह्मणैर्ब्रह्मवादिभिः ॥ संभारानथसंभृत्य कुलधर्मानुकूलतः ॥ ३० ॥ व-
सिष्ठोपिजुहावाथ विश्वामित्राभ्यनुज्ञया ॥ चक्रांकेनसरोजांकं सीतापाणिंस्वपाणिना ॥ ३१ ॥
अरुणेनारुणंरामो जग्राहजगदीश्वरः ॥ त्रिवारंपरिणीयाथ सम्यक्सप्तपदानिसः ॥ ३२ ॥ गम
यित्वाक्रियाशेष मशेषंचसमापयत् ॥ जनकंजगतांरामं जननीमपिजानकीं ॥ ३३ ॥ ॥

ल्गुनीमुहूर्ते ॥ २९ ॥ ३० ॥ जुहावहुतवान् ॥ ३१ ॥ परिणीय प्रदक्षिणंकारयित्वा ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥

आवलिः पङ्क्तिः वीथ्यालिरावलिः पङ्क्तिरित्यमरः ॥ ३४ ॥ ३५ ॥ प्रनृत्तं नृत्तमकारि ॥ ३६ ॥ चार्वंग्यः मंगलस्त्रियः ॥ ३७ ॥ उत्तमकल्पकैः शाल्वा क्तमकारैः ॥ ३८ ॥ आपृछ यात्रामुत्केतिशेषः ॥ ३९ ॥ सास्रेण प्रेमाश्रुसहितेन भूभृता दशरथेन पारिबर्हं स्त्रीधनं नृपः जनकः ॥ ४० ॥ क्षौमाणि दुकू-

वधूवरत्वमायाता ववैक्षंतसुरोत्तमाः ॥ रत्नैर्देदीप्यमानानां विमानानामथावलिः ॥३४॥ अलंचका रगगनं देवदेवानुगाकुलं ॥ देवैर्वाद्यान्यवाद्यंत गीतंगंधर्वपुंगवैः ॥ ३५ ॥ प्रहृष्टानिप्रसूनानि प्रन्टं-त्तंचाप्सरोगणैः ॥ लोकानांलोचनानंदाः सर्वाभरणभूषिताः ॥ ३६ ॥ विचेरुःपुरिचार्वंग्यो दिविदे-व्यइवोत्सवे ॥ ऊर्मिलालक्ष्मणस्यासी न्मालवीभरतस्यच ॥ ३७॥ भार्याथश्रुतकीर्तिश्च शत्रुघ्नस्या भवत्छुभा ॥ पुरोहितान्वसिष्ठादीन् वित्तैरुत्तमकल्पकैः ॥ ३८ ॥ अमानयन्महीपालो ब्राह्मणानपरान पि॥ अपृच्छत्तुष्टहृदयो सवसिष्ठंमहीपतिं॥३९॥ विश्वामित्रायये प्रातरुत्कः सास्रेण भूभृता॥ पारिबर्हं हि जनको राघवेभ्योददौनृपः ॥ ४० ॥ क्षौमाणिमणिराशींश्च कंबलानंबराणिच ॥ गवांलक्षाणिलक्ष्मी वान् चमूंचचतुरंगिणीं ॥ ४१ ॥ नियुतंचाहिरण्यानि ददौदासीःसमैथिलः ॥ दक्षिणेवप्रभुंयज्ञं दामो-दरमिवेंदिरा ॥ ४२ ॥ जयंतीऋषभंदेवं सीतारामम्रुपागमत् ॥ नजरानपरिस्पंदो नमलंविमला-त्मनोः ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लवस्त्राणि । क्षौमंदुकूलंस्यादित्यमरः । अंबराणि अन्यवस्त्राणि ॥ ४१ ॥ नियुतंविंशतिसहस्रपरिमितानि नियुतंदासीर्वित्यन्वयः । दक्षिणा दक्षिणा नामकत्वेनावतीर्णालक्ष्मीः ॥ ४२ ॥ ऋषभंऋषभावतारंहरिं परिस्पंदः कालनिमित्तो निद्रादिविकारः ॥ ४३ ॥ ॥ ॥ ॥ ॥

कमलाकमलेक्षणौ लक्ष्मीनारायणौ ॥ ४४ ॥ अर्थितौप्रार्थितौ किंवदंतीवार्ता किंवदंतीजनश्रुतिरित्यमरः । वव्रतेप्रवृत्ता ॥ ४५ ॥ निश्रेणीसोपानाधि-
ता निश्रेणिस्त्वधिरोहिणीत्यमरः ॥ ४६ ॥ निमित्तानि दुर्निमित्तानि ॥ ४७ ॥ पदव्यांमार्गे विपदाशंकी आपच्छंकावान् शकुनानांपक्षिणां । शकुंतश
कुनद्विजाइत्यमरः ॥ ४८ ॥ शंसंतीसूचयंति कथंअनयोःफलंकथं ॥ ४९ ॥ आसन्नंसमीपस्थं भूयःबहुलं ॥ ५० ॥ त्रिःसप्तकृत्वःएकविंशतिवारं क्ष-

अनयोःकिलदंपत्यो रगण्यगुणपूर्णयोः॥ जगतांपितरावेतौ कमलाकमलेक्षणौ ॥४४॥ प्रार्थितौकि
लनाकींद्रै रवन्यामवतेरतुः॥ किंवदंतीतिवव्रृते दंपत्योश्चगृहेगृहे ॥ ४५ ॥ अपित्रैलोक्यपापघ्नीं नि
श्रेणीमुक्तिपद्धतेः॥ अथानुज्ञायजनकं द्विजैःसार्धंबलैरपि॥४६॥ ससूनुःसस्नुषोराजा सभार्यःस्वपु
रंययौ ॥ निमित्तानिनिमित्तज्ञः सनिरीक्ष्यनराधिपः॥ ४७॥ पदव्यांविपदाशंकी हितमूचेपुरोहितं॥
शकुनानामयंशब्द श्चित्तंदारयतीवमे ॥ ४८ ॥ प्रादक्षिण्येनकल्याणं शंसंतीमेमृगाःकथं ॥ वाणीमा
कर्ण्यभूपस्य वसिष्ठोविस्मितोब्रवीत् ॥ ४९ ॥ अस्तिनोभयमासन्नं शांतिश्चास्यभवोदिति ॥ ततःप्रा
दुरभूद्भूय स्तेजसांपुंजमद्भुतं॥५०॥ प्रलयानलसंकाशं तंदृष्ट्वोचुर्महर्षयः॥ त्रिःसप्तकृत्वश्चक्रेयः क्ष-
मामक्षत्रियामिमां॥५१॥सएषभगवान्रामः कस्माज्जाज्वल्यतेधुना॥ कठोरेणकुठारेण वैकुंठःकंठ-
संगिना ॥५२॥ बाणेनचाग्निवर्णेन किंचिकीर्षुरिहागतः॥ रामाग्निर्नदहेत्कच्चि त्क्षत्रगोत्रतृणंपुनः॥
॥ ५३ ॥ कच्चित्त्रिलोकींनदहे दितितंमुनयोऽवदन्॥जामदग्न्यप्रसीदेति वसिष्ठाद्यैर्द्विजोत्तमैः।५४।

मांभूमिं । गोत्राकुःपृथिवीपृथ्वीक्ष्मावनिर्मेदिनीमहीत्यमरः ॥ ५१ ॥ जाज्वल्यते पुनःपुनर्ज्वलति कठोरेणक्रूरेण कुठारेणपरशुना ॥ ५२ ॥ क्षत्रगोत्रतृ
णं क्षत्रियकुलाख्यतृणं । संततिर्गोत्रजननकुलान्यभिजनान्वयावित्यमरः ॥ ५३ ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामःपरशुरामः ॥ ५५ ॥ ताभ्यां चापरत्नाभ्यां जिग्यतुःजितंचक्रुः । ओजोजिज्ञासया बलंज्ञातुमिछया ॥ ५६ ॥ ५७ ॥ विजिष्णुं विजयशीलं ॥
॥ ५८ ॥ इदंहरस्तंभनं ॥ ५९ ॥ वितता व्याप्ता अद्वंद्वःअसदृशः इदंमत्धस्तस्थितं आरोपयेः आरोपितंकरोषि । तर्हीतिशेषः ॥ ६० ॥ ६१ ॥ सबाष्पग

पूजितोराममासाद्य रामोधीरमभाषत ॥ चापरत्नउभेराम लब्ध्वाहरिहरौपुरा ॥ ५५ ॥ ताभ्यांज-
गत्प्रतीताभ्यां जिग्यतुःससुरासरं ॥ ओजोजिज्ञासयादेवैः प्रार्थितौप्रार्थितप्रदौ ॥ ५६ ॥ देवौ
युद्धायसंनद्धौ तस्थतुस्तौधनुर्धरौ ॥ अहंकारमयंशर्वं हुंकारेणैवकेशवः ॥ ५७ ॥ क्षणेनस्तंभया
मास गरुडःपन्नगंयथा ॥ विजिष्णुंविष्णुममरा ब्रह्माद्यास्तमथास्तुवन् ॥ ५८ ॥ विश्वंयन्नियतं
तस्य नेदंचित्रंहरेरिति ॥ भवताननुतद्भग्नं शंकरस्यशरासनं ॥ ५९ ॥ तेनतेवितताकीर्ती रामो
द्वंद्वःपुमानिति ॥ इदंतद्वैष्णवंचापं राघवारोपयेर्यदि ॥ ६० ॥ ममतुल्यबलोवीरः परमःपुरुषो-
भवान् ॥ इतिगंभीरवाचंतं भार्गवंप्रेक्ष्यभूपतिः ॥ ६१ ॥ सबाष्पगद्गदोदीनः प्रणिपत्येदमब्र-
वीत् ॥ अरागद्वेषदोषोहि देवोनारायणोभवान् ॥ ६२ ॥ रेणुकायांमुनेर्जातो भूभारपरिभूतये ॥
भक्तवत्सलभक्ताय मह्यंप्रवयसेप्रभो ॥ ६३ ॥ न्यस्तशस्त्रेणभवता पुत्रभिक्षाप्रदीयतां ॥ प्रया-
चमानमेवंतं प्रोवाचभृगुनंदनः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

द्गदः बाष्पेणाश्रुणा गद्गदेनस्खलद्वचनेन सहितइतितथोक्तः । अरागद्वेषदोषःरागद्वेषदोषैरहितः ॥ ६२ ॥ रेणुकायांरेणुकादेव्यां मुनेःजमदग्नेःपरिभूति-
र्नाशः प्रवयसेवृद्धाय तदत्ताइतिशेषः ॥ ६३ ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामः रघुरामः रामेण भृगुरामेण ॥ ६५ ॥ ब्रह्मन् ब्राह्मण स्यात् अस्तु सज्योतिर्मंडलंतेजः समूहमहितंमज्जंगुणेनमहितं । मौर्वीज्यासिंजिनीगुणइत्यम-
रः । आरोपितमित्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ महेष्वा महाबाणेन पत्रीरोपइषुर्द्वयोरित्यमरः । वदतिमाति ॥ ७० ॥ तरसावेगेन इत्यूचइत्य-

पुत्राख्यस्तेरामोमे प्रतिवीरोभवेदिति ॥ रामरामगृहाणेति रामोरामेणचोदितः ॥ ६५ ॥ ब्रह्म-
न्स्याद्भार्गवेत्युक्का चापंजग्राहसस्मितः ॥ सज्योतिर्मंडलंचापं सज्जंकृत्वाहसन्नयं ॥ ६६ ॥ रा-
घवोलाघवेनैव क्षणाद्बाणेनसंदधे ॥ देवोपदेवमुनय स्तयोराश्चर्यंचर्ययोः ॥ ६७ ॥ क्रीडांदिदृ-
क्षवःप्रीत्या अलंचक्रुर्नभस्तलं ॥ परब्रह्मस्वरूपत्वा न्नशरेणेशशीर्यसे ॥ ६८ ॥ इत्युक्ताकृष्यमा
णंतं राघवंभार्गवोब्रवीत् ॥ कारणांतरतोराम स्वेछयांतःकृतंमया ॥ ६९ ॥ तपोमयंलोकमयं म
हेष्वातंहनासुरं ॥ वदत्येवंजामदग्न्ये सशरोराघवच्युतः ॥ ७० ॥ असुरंतरसाभस्मी चकारातु-
लनामकं ॥ भार्गवोभगवानूचे रामदाशरथेधुना ॥ ७१ ॥ साक्षान्नारायणोसीति सम्यग्ज्ञातंज-
नैरिति ॥ प्रदक्षिणीकृत्यमुदा दक्षिणंलक्ष्मणाग्रजं ॥ ७२ ॥ तेनैकीभूयभूयश्च माहेंद्रंभार्गवोय-
यौ ॥ लीलेयंरामयोःसाक्षा द्विश्वरूपस्वरूपयोः ॥ ७३ ॥ नहिभेदोनयोःकश्चि दित्युक्तास्वर्ययुः
सुराः ॥ शुचाहतंमुखंराज्ञः प्रोत्फुल्लंरामतेजसा ॥ ७४ ॥ नैशांबुनाशिथिलितं भानुभासेवपंक-
जं ॥ वसिष्ठाद्यैर्मुनिश्रेष्ठैः सराजापरिवारितः ॥ ७५ ॥ ॥ ॥

न्वयः ॥ ७१ ॥ दक्षिणं कुशलं ॥ ७२ ॥ तेनरघुरामेण माहेंद्रंमाहेंद्रनामकंपर्वतं विश्वरूपस्वरूपयोः हरिस्वरूपयोः ॥ ७३ ॥ शुचाशोकेन ॥ ७४ ॥
नैशांबुनारात्रौ विद्यमानेनहिमजलेन शिथिलितं मुकुलितं ॥ ७५ ॥ ॥ ॥ । ॥ ॥ ॥ ॥ ॥ ॥

अरिभिरयोध्या योद्धुमशक्या ॥ ७६ ॥ केतुःध्वजः ॥ ७७ ॥ ७८ ॥ ब्राह्मणैःसहेतिशेषः शिखाभिःज्वालाभिः ॥ ७८ ॥ सीतागुणसंपदा श्रीरेवेति वाणी लोकवार्तायत्रसीतायां सत्यैवयथार्थैव औपचारिकी उपचारमात्रेण वर्तमानानहि तांतादृशांसीतांरमणीं भार्यांअवाप्य रामोरेजइत्यन्वयः ॥ ८० ॥ अयंनारायणः श्वेतद्वीपेतत्रापिराजमाने विमाने दिव्यरत्नमंटपाख्ये तत्रापिअधिकंभासमाने शोभमाने असमाने असदृशे श्रीमद्भोगींद्रभोगे श्रीमतिशेषदेवशरीरे रमयासह अधिकंयथाविहरति विनोदंकरोति तथात्रभूमंडले तत्रापिजंबूद्वीपे तत्राप्यत्रायोध्यानामकपुर्यां गुणनिधिरयंरामोपि अधिकंरंजयंत्या

सनंदनोमहानंदः पुरींप्रायाद्बलैर्वृतः ॥ अयोध्यामापनगरी मयोध्यामरिभिर्नृपः ॥ ७६ ॥ सिक्तांपुष्पाक्षताकीर्णां पताकाकेतुमालिनीं ॥ पूर्णैःसुवर्णकलशै र्नानावाद्यैश्चनादितैः ॥ ७७ ॥ नरा नार्यश्चाभिययु र्वधूवरसमागमे ॥ विवेशांतःपुरंराजा पुरंदरपुरोपमं ॥ ७८ ॥ मांगल्यसूक्तंशंसद्भि र्ब्राह्मणैर्ब्राह्मणप्रियः ॥ रमणारमणीभिस्ते लक्ष्मणाद्याःसुलक्षणाः ॥ विरेजिरेत्रयस्तत्र शिखाभिरिवपावकाः ॥ ७९ ॥ रेजेथरामोरमणीमवाप्य सीतांजगन्मंगलमंगलांगीं ॥ श्रीरेवसीतागुणसंपदेति सत्यौपचारीनहियत्रवाणी ॥ ८० ॥ श्वेतद्वीपेयथायंविहरतिरमयाराजमानेविमाने श्रीमद्भोगींद्रभोगेगुणनिधिरधिकंभासमानेसमाने ॥ जंबूद्वीपेत्रिपुर्यांजनकतनययाराजयंत्याजयंत्या देव्यारामोभिरेमेऋषभइवजगद्भ्रंजयंत्याजयंत्या ॥ ८१ ॥ ॥ इति श्रीमत्संग्रहरामायणे बालकांडे रामांके श्रीनारायण पंडिताचार्यकृतौ अष्टमःसर्गः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

शोभमानया जगद्भ्राजयंत्याविकासयंत्या जयंत्याउत्कृष्टतयावर्तमानया जनकतनययादेव्या सीतयासहरेमइत्यन्वयः । जयंत्याजयंतीनाम्न्यालक्ष्म्या ऋषभइव.तन्नामकोहरिरिवचरेमइत्यन्वयः । विशेषणंसर्वमपिअत्रापिसममेव । राजयंत्याविकासयंत्या जयंत्याउत्कृष्टतयाशोभमानये त्यत्रस्वार्थेणिच् ॥ ८१ ॥
इति श्रीविद्याभूषणार्यकृतायां बालकांडटीकायां अष्टमःसर्गः ॥ ८ ॥ बालकांडःसमाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ राजादशरथः सरितामीशइव समुद्रइव ॥ १ ॥ मातामहस्य स्वमातुःकैकेय्याःपितुः ओकसिनगरे कैकयस्यकेकयविषयाधिपतेः युधाजिन्नामकस्य चिरायअतिचिरकालं विद्यागणाभ्यासिन विद्यागणाभ्यासंकृत्वास्थितवातिसति तस्यभरतस्य ॥ २ ॥ जनैःसंकीर्तितैरितिसंबंधः वर्त्मेतिमार्गउच्यते अयनंवर्त्ममार्गाध्वइत्यमरः । विष्टपमंडलंराज्यमंडलं ॥ ३ ॥ समाहरत्आव्हापयामास सामंतवर्यान् मंडलाधिपतिश्रेष्ठान् सर्वाःप्रकृतीश्चस-

श्रीगुरुभ्योनमः ॥ रामेरमण्यासहपूर्णरूपे प्रातोदयेचंद्रिकयेवचंद्रे ॥ समृद्धिपूरैःपरिपूर्यमाणो रराजराजासरितामिवेशः ॥ १ ॥ मातामहस्यौकसिकैकयस्य शत्रुघ्नयुक्तेभरतेचिराय ॥ विद्यागणाभ्यासिनितस्यवार्तां श्रुत्वानरेंद्रोधिकमाननंद ॥ २ ॥ संकीर्तितैरामगुणैरगण्यै र्जनैःसभावर्त्मगृहापणेषु ॥ पूर्णंविशालंविरराजराज्ञो ह्रन्मंडलंविष्टपमंडलंच ॥ ३ ॥ सुमंत्रपूर्वैरथमंत्रिमुख्यैः समं:यसन्मंत्रयुतैश्चविप्रैः ॥ रामाभिषेकायसमाहरत्सः सामंतवर्यान्प्रकृतीश्चसर्वाः ॥ ४ ॥ दिवीवदेवैःसहदेवराजो व्योम्नीवताराधिपतिःसतारः ॥ सभातलेस्वैःपरिवारवर्गैः समावभासेसहितोमहीशः ॥ ५ ॥ उवाचवाचंनरदेवनाथो निगृह्यवेगंस्वमनोरथस्य ॥ सुतंयुवानंयुवराजमेनं कुर्मोमतंचेद्भवतांतदेवं ॥ ६ ॥ ॥ ॥ ॥ ॥

प्रकृतीः । अमात्यामंत्रिणोदूताः श्रेणयश्चपुरोहिताः । पुरंजनपदंचेतिसप्तप्रकृतयस्त्विमाः ॥ ४ ॥ व्योम्नि आकाशे सताराःसनक्षत्रः महीशःदशरथः ॥ ५ ॥ निगृह्य अप्रकाश्य चेद्भवतांसर्वेषामपि तद्रामस्ययौवराज्याभिषेकाख्यंकर्म मतंअभिमतं अनुकूलमित्यर्थः । तर्त्त्वाहं तत्कर्मएवंभवन्मतानुसारेणाहमित्यन्वयः तदेतिकचित्पाठः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रोमोद्गमः रोमविकासः प्रमदाश्रु आनंदाश्रु आसंनि प्रत्येकंसंबंधः ॥ ७ ॥ जानपदे च जने तस्मिन् रामाभिषेकाख्यंकर्मोद्दिश्येत्यर्थः । तस्मिन् सभातलड्-
तिवा । अंतपालैःपर्यंतदिङ्मंडलाधिपैः अंतरक्षकैरितिवा । विवक्षौवक्तुमिच्छावतिसति । गांवाचं ॥ ८ ॥ ९ ॥ नैसर्गिकैः स्वाभाविकैः उपाकर्षतिवशी-
करोति सत्वभाजांउत्तमानां अयस्कांतस्तन्नामकोमणिः स्वगोभिः स्वरश्मिभिः ॥ १० ॥ परायणात्मामुख्याश्रयस्वरूपः निखिलात्मनांसमस्तप्राणिनां क-
विर्ब्रह्मा ॥ ११ ॥ लघोर्भाररहितात् गुरोर्भारयुक्तात् गुरौपितरिदुर्भरइत्यमरः ॥ १२ ॥ धातुंधर्तुंपालयितुमित्यर्थः । विधातुंकर्तुंस्रष्टुमित्यर्थः पिधातुंपिहितुं

रोमोद्गमोंगेप्रमदाश्रुनेत्रे रामश्चचित्तेंजलिरासमूर्ध्नि ॥ मुखेविकासोवदनेचवाणी तत्साधुसाध्वित्यखिल
प्रजानां ॥७॥ पौरेजनेजानपदेचतस्मिन् सहांतपालैरधिकंविवक्षौ ॥ सपद्यभिप्रायविदः सभायां वृद्धाः
समृद्धामथगामवोचन् ॥ ८ ॥ महाजनोयंमनसाचवाचा करोतिरामस्यसदाभिषेकं ॥ महाजनानामधि-
नाथराजन् महाभिषेकंकुरुकर्मणैव ॥ ९ ॥ नैसर्गिकैरेवगुणैरगण्यैः प्रजापतेतेतनयःप्रजानां ॥ मनांस्यु-
पाकर्षतिसत्वभाजा मयांस्ययस्कांतइवस्वगोभिः ॥१०॥ नारायणात्माकिलनंदनस्ते परायणात्मानिखि
लात्मनांच॥ अमुष्यकोवागणयेद्गुणौघान् रजांसिभूमेर्गणयेत्कविश्च॥११॥अणोरणीयान्महतोमहीयान्
गुरोर्गरीयांश्चलघोर्लघीयान्॥ईशःसमस्तस्यचसत्यकामः स्वतंत्रऐश्वर्ययुतोयमेव१२सशंभशक्राणिज
गंतिधातुं धातुंविधातुंसहसापिधातुं॥ भ्रूविभ्रमेणैवखलुप्रभुःस्या द्वीरस्यवीर्याणिहितादृशानि१३नकेव
लंयःकुमुदंविकासं नयत्यभीक्ष्णंहिदिवोमुदंच द्विपक्षपूर्णोस्तकलंकलेशः कीर्तींदुरस्यास्यतिपूर्णमिंदुं१४

तिरोहितंकर्तुंसंहर्तुमित्यर्थः ॥ १३ ॥ यःकीर्तिचंद्रःकेवलंकुमुदंकुमुदकुसुमं विकासंन नयतिनप्रापयति किंनामकुमुदंकोः भूमेः मुदंसंतोषविकासंचनयति अ-
भीक्ष्णंसम्यक् समस्तभूमंडलस्यसंतोषमभिवर्धयतीत्यर्थः । केवलंतावदेवन किंतुअभीक्ष्णंचंद्रादप्यत्यंतं अधिकत्वेनदिवः आकाशादिलोकस्यापि मुदंहर्षं
विकासंचनयति आकाशादिलोकस्थितानांपुरुषाणां संतोषमत्यंतंवर्धयति हियस्मात्तेनकारणेन पूर्णमिंदुंअस्याति निरस्यतीत्यर्थः ॥ १४ ॥ ॥

यस्मिन् रामेविद्यमानाँल्लोभतः ॥ १५ ॥ भावीनिउपरिभविष्यंति भूतानिपूर्वंभूतानिभवंति इदानींवर्तमानानि विशेषैः समं अशेषविशेषसहितत्वेन हस्तहारं द्रववत् हस्तास्थितहारश्रेष्ठवत् वेत्तिजानाति भूम्नः परिपूर्णस्य ॥ १६ ॥ निजमेव स्वस्वरूपभूतमेव तेननिरंतरमपि स्वस्वरूपानंदभोक्तृत्वेन तस्यरामस्यमनीषा बुद्धिः बुद्धिर्मनीषाधिषणेत्यमरः । रागरोगोपहतारागाख्यरोगेणोपहता विनाशितानभवतीतियोजना ॥ १७ ॥ एतान् वेदेनीतिशास्त्रेच प्रसिद्धान् षड्गुणान् बिभर्तीत्यस्यायमर्थः । तत्रसंपूर्णैश्वर्यवीर्ययशः श्रीज्ञानवैराग्यानिचेतिएतेवेदोदिताः षड्गुणाः तथाचोक्तं ऐश्वर्यस्यसमग्रस्य वीर्यस्ययशसः श्रियः । ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणेति । शत्रुभिः सहसंधानात्मकः संधिः तैः कलहरूपोविग्रहः तत्पुराभिगमनलक्षणं यानं तत्पुरसमीपेचिरकालस्थितिरूपमासनं मंत्रभेदनतेषुद्वैविध्यकरणरूपोद्वैधीभावः तच्छरणप्राप्तिरूपः संश्रयश्चेत्येतेनीतिपथोदिताः षड्गुणाः यथोक्तं संधिंचविग्रहंचैवयानमासनमेवच । द्वैधीभावंसंश्रयंच षड्गुणान्कवयोविदुरिति । पंचभावानित्यस्यायमर्थः नारायणवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यानिपंचरूपाणि वेदोदिताः पंचभावाः कर्म

भित्वाभुवंराजसुताछलेन यल्लोभतः श्रीः स्वयमेनमाप ॥ तांसर्वलोकानुपमामनंतां रूपश्रियंत्वस्यनिरूपयामः ॥ १५ ॥ भावीनिभूतानिभवंतिवापि समस्तवस्तूनिसमंविशेषैः ॥ योहस्तहारंद्रववदेववेत्ति ज्ञानेसमोनाप्यधिकोस्यभूम्नः ॥ १६ ॥ अमंदमानंदमनिंदनीयं निरंतरंयन्निजमेवभुङ्क्ते ॥ स्त्रीराज्यकोशादिषुतस्यतेननरागरोगोपहतामनीषा ॥ १७ ॥ गुणान्षडेतानथपंचभावां स्तिस्रश्चशक्तीरुदयांश्चसिद्धीः ॥ अर्थद्वयांश्चेतिबिभर्तिरामो वेदोदितान्नीतिपथोदितांश्च ॥ १८ ॥ ॥ ॥

आरंभसमयेउचितउपायः इत्येकं पुरुषसंपद्द्रव्यसंपदित्येकं अनर्थपरिहारात्मकं विनिपातप्रतीकारात्मकंचेत्येकं । देशकालपरीक्षात्मकमेकं कार्यसिद्धिरित्येकमिति । नीतिपथोदिताः पंचभावाः पंचांगानि तच्चोक्तं कर्मारंभोचितोपायः पुरुषद्रव्यसंपदौ । विनिपातप्रतीकारोदेशकालावलोकनं । कार्यसिद्धिरितिमेकर्मंगानां पंचकंबुधैरिति । तिस्रः शक्तीरित्यस्यायमर्थः । सृष्टिस्थितिसंहारविषयास्तिस्रः शक्तयोत्रवेदपथोदिताः उत्साह प्रभुमंत्राख्या स्तिस्रः शक्तयोनीतिपथोदिताः । त्रिनुदयानित्यस्यायंभावः अरुणोदयउषोदयसूर्योदयश्चेतित्रयोवेदोदिताउदयाः मित्रोदयभूम्युदयकोशोदयश्चेतित्रयोनीतिपथोदिताउदयाः । तिस्रः सिद्धीरित्यस्येदंतात्पर्यं । तत्रवेदपथोदितसिद्धीनामानंत्याच्चिस्रइत्युपलक्षणं । तथाचमहिमाशौर्यवीर्यमित्याद्यनंताश्चसिद्धीर्बिभर्तीत्यर्थः । अर्थसिद्धिः स्थलसिद्धिर्जलात्समुद्रादेः सिद्धिरितितिस्रो नीतिपथोदिताः सिद्धयः । रामइत्युक्तप्रकारेण वेदोदितान्नीतिपथोदितांश्च द्विविधानर्थान् धर्मांश्चबिभर्तीत्यन्वयः । अनेनरामस्यात्वंराज्ययोग्यत्वमस्तीत्युक्तंभवति । अत्रपुनरपिप्रतिपदमनेकेऽर्थाः प्रतीयंते । तथापिग्रंथगौरवभयादुपरम्यते ॥ १८ ॥

स्वस्वकीयं पारमेष्ठ्यंपरमेष्ठित्वं परमोत्कृष्टत्वमित्यर्थः परमेष्ठिनःचतुर्मुखस्य यत्पारमेष्ठ्यादीनिमंबंधः। ओजःशत्रुभिभवशक्तिः पुरारेःशिवस्य विभवः ऐश्वर्यं वलारेरिंद्रस्य अन्ये नीतिमत्वादयः अन्यगताः बृहस्पत्यादिसमस्तगताः रामस्यगुणानांपरमेष्ठित्वादीनां प्रतिबिंबभूताइतिमत्वाप्रनीतिमत्वादिनेषुतदधीनभूताइत्यर्थः। अन्येगुणाअपियदातदधीनाः तदारामस्यगुणवत्वंकिमुवक्तव्यमितिकैमुत्यद्योतकोयंश्लोकः ॥ १९ ॥ प्रभाक्रतमयःक्षमाभूमिःइत्येनेका-पादयः स्वानकांत्यादीनतान् स्वस्वगुणान्शिक्षयंति रामकांत्यादिवदस्माकंकांत्यादिकंनाभूदितिमत्वा अनुशिक्षयंतीत्यर्थः ॥ २० ॥ माधुर्यमनोहरत्वंम-

स्वपारमेष्ठ्यंपरमेष्ठिनोय दोजःपुरारेर्विभवोबलारेः॥ अन्येगुणाश्चान्यगतागुणानां रामस्यसर्वेप्रतिबिंबभूताः ॥ १९ ॥ कामःस्वकांतिंपरिशांतिमिंदुः प्रभांप्रभाकृद्धनितांधनेशः॥ क्षमांक्षमेयंरघुवंशकेतो र्हेष्ठगुणान्स्वाननुशिक्षयंति ॥ २० ॥ औदार्यमाधुर्यसधैर्यशौर्य गांभीर्यचातुर्यमहार्यभावैः॥ गुणैरसंख्यैरपरैश्चपूर्णः सुतास्त्रिलोकीतिलकस्तवायं॥२१॥ सर्वत्रसर्वानपिसर्वदापि प्राप्नोतिकामान्ननुसत्यकामः॥ कामःकथंद्रुह्यतितेनजग्तु सीतापतिंविश्वपतिंसुतंते॥२२॥ प्रियस्यहानिर्नकदाचिदस्य प्रियेतरस्यापिनसंभवःस्यात् ॥ क्रोधस्ततोलक्ष्मणपूर्वजस्य पराजितःपादरजांस्युपास्ते।२३। संत्यज्यसाम्राज्यमिदंप्रभुःस्या द्वनंप्रयातुंसहसाप्रसन्नः॥ आत्मानमप्येषददातिसद्यो रामेनलोभोलभतेवकाशं ॥ २४ ॥ ॥ ॥ ॥ ॥

हार्यभावमतिपूज्यत्वं त्रिलोकीतिलकःत्रैलोक्यतिलकः॥२१॥ सर्वत्रापिदेशेसर्वदापिकालेसर्वानपिकामान शुभानततसत्यकामत्वात्सत्यसंकल्पत्वादित्यर्थः। कामःक्षुद्रोयंकामः द्रुह्यतिद्रोहंकरोति द्रोहंकर्तुंसमर्थोभवतीत्यर्थः। तेनवसुतस्यपरिपूर्णसमस्तकामत्वेन जात्वपिकदापि ॥ २२ ॥ इतरस्यअप्रियस्य संभवः उत्पत्तिः ततःपराजितः प्रियस्यहानौवा अप्रियस्योत्पत्तौवा खलुक्रोधउत्पद्यते। रामेतुतदुभयस्याप्यभावात्तेनपराजितइत्यर्थः ॥ २३ ॥ प्रसन्नःमनःखेदरहितः आत्मानमपिकिमुतधनादिकं अत्यंतलोभरहितइत्यर्थः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मोहाद्यवद्यानि अज्ञानादिदोषाः शांतिमायांति प्राप्नुवंति नष्टाभवंतीत्यर्थः । यत्प्रसादात् यस्यरामस्यानुग्रहात् अस्यपरमोहादिकंपरिहर्तुः तत्रानुकूलंदृष्टांतमाह । यस्याहिमांशोरिति । अहिमांशोःसूर्यस्य व्यपैतिदूरादेवापगच्छति अतोत्रएवंविधेसूर्येकुतः कथंघटतेनकथमपीत्यर्थः ॥ २५ ॥ मोहात् विपरीतज्ञानात् अविद्यमानात्मगुणाभिमानं स्वस्मिन्नविद्यमानाअपिगुणाः मयिसंतीतियोभिमानोगर्वस्तमित्यर्थः । नास्तिगुणराशिरस्तीत्यर्थः । तस्मादेवंसर्वगुणपूर्णत्वादस्य एवंविधस्यरामस्य अहंकारलवोप्यहंकारस्य लेशमात्रमपिनास्ति तदुत्पत्तिकारणाभावादित्यर्थः ॥ २६ ॥ आर्याःपूज्याःपुरुषाः असौजनोमद्वशोममवशवर्तीनभवति । इत्येवमात्मकोयश्चित्ततोदः चित्तव्यथाताद्दशंचित्ततोदं मात्सर्यं समुदाहरंतिवदंति । एतद्विश्वंचसर्वमपिजगत्

प्रयांतिशांतिंकिलयत्प्रसादा न्मोहाद्यवद्यानिकुतोस्यमोहः ॥ यस्याहिमांशोरुदयेव्यपैति महांधकारोत्रकुतोंधकारः ॥ २५ ॥ अविद्यमानात्मगुणाभिमानं मोहादहंकारमुशंतिसंतः ॥ अविद्यमानोनगुणोस्तिरामे तस्मादहंकारलवोपिनास्य ॥ २६ ॥ नमद्वशोसावितिचित्ततोदं मात्सर्यमार्याः समुदाहरंति ॥ विश्वंचयद्वश्यमवश्यमेत त्समत्सरीचेत्तुरगोपिशृंगी ॥ २७ ॥ मदप्रमादौभयदुःखशोकाः क्षुतृट्त्रिधातुप्रभवाश्चदोषाः॥ नसंतिरामेप्रथितःश्रुतौय आदित्यवर्णंतमसःपरस्तात् २८

अवश्यंनिश्चयेन सर्वदापियद्वश्यं यस्यरामस्यवशेस्थितं तदाज्ञानुसारेण वर्तमानमित्यर्थः । सएवंविधोरामोमत्सरीचेत् मत्सरवांश्चेत् तुरगोपिहयोपि शृंगीशृंगवान्स्यादित्यर्थः । यथालोकेतुरगशृंगमत्यंतमसत् तथारामेमत्सरोपि असन् सर्वदाप्यविद्यमानइत्यभिप्रायः ॥२७॥ क्षुत्क्षुधातृट्तृषा त्रिधातुप्रभवाः वातपित्तश्लेष्मजनिताः एवमादिदोषाभावेकारणमाह । प्रथितःश्रुतावयइति । श्रुतौसर्वज्ञत्वादिमत्वेन समस्तदोषरहितत्वेनचप्रतिपादितइत्यर्थः । श्रुतिमेवार्थतःपठति । आदित्यवर्णमिति । आदित्यवत्तेजोमयःसर्वज्ञइत्यर्थः । तमसःपरस्तात् तमःपारेस्थितः अज्ञानादिसर्वदोषरहितइत्यर्थः । आदित्यवर्णंतमसस्तुपारेसर्वाणिरूपाणिविचित्यधीरइत्यादिरूपाश्रुतिश्च ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रत्यक्षयुक्तिश्रुतयः प्रत्यक्षानुमानागमाः । अत्रउक्तेरामस्यरूपेमानंप्रमाणं ॥ २९ ॥ क्षांतःक्षमावान् प्रशांतःअक्रुध्यन् प्रसंनःसुमुखः नित्यानृशंसः नित्यमप्यक्रूरः अनुपमानुभावः असदृशसामर्थ्यवान् अविपश्चितांच अपंडितानांबालादीनामपि संमतःत्हृदयानुकूलः एवकारेण कस्याप्युत्तमस्यजीवस्य-स्थावरजंगमात्मक नानायोनिगतस्यापि एवमुक्तविधेरामे विवादाभावंसूचयंति ॥ ३० ॥ हेनरदेवदशरथचक्रवर्तिन् स्वभावपूर्णायकिंदत्तेसति किंस्यादित्यतआहुः । तवैवभूत्यैऐश्वर्यायेति तद्राज्यप्रदानेनइहपरत्रच तवैश्वर्यंभवतीत्यर्थः । अत्रानुकूलंदृष्टांतद्वयमाह । रत्नाकरायेत्यादिना । तत्प्रदानेनाप्रदानेन

योयोगुणोनामसएवरामे योयश्चदोषःसतुनैवतास्मिन् ॥ नरेंद्रकिंवाबहुनोदितेन प्रत्यक्षयुक्तिश्रुतयोत्रमानं ॥ २९ ॥ क्षांतःप्रशांतःप्रियवाक्प्रसन्नो नित्यानृशंसोनुपमानुभावः ॥ चराचराणामविपश्चितांच गुणांबुधिःसंमतएवरामः ॥ ३० ॥ रामायराज्यंनरदेवदेहि स्वभावपूर्णायतवैवभूत्यै ॥ रत्नाकरायांबुधयेयथार्घ्यं त्रैलोक्यदीपाययथाप्रदीपः ॥ ३१ ॥ इतिवसिष्ठगरिष्ठसभाजनैरभिहितस्थिररामसभाजनैः ॥ दशरथस्तनयायमहीमतः प्रतिददौसुनयायमहीमतः ॥ ३२ ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे प्रथमः सर्गः ॥ १ ॥ ॥ ॥

नवा अत्रकोपिविशेषोनास्तीत्यर्थः ॥ ३१ ॥ दशरथःस्थिररामसभाजनैः । स्थिरंरामसभाजनं रामसंभावनं येषुतेतथोक्ताः तादृशैर्वसिष्ठगरिष्ठसभाजनैः वसिष्ठः गरिष्ठः प्रधानोयेषांतेतथोक्ताः तैःसभाजनैः सभायामुपविष्टैस्सज्जनैः इत्युक्तप्रकारेणाभिहितःउक्तःसुनयाय शोभननीतियुक्ताय तनयायपुत्रायरामाय अतःसभातलात् तत्रैवसर्वेषांपुरस्तादेव महींभूमिं राज्यंप्रतिददौ सर्वथारामस्यैवेदंराज्यमित्यातुक्त्वा प्रदत्तवानित्यन्वयः । महीमहोत्सवसहितइतिनृपविशेषणं । मतःप्रख्यातःसर्वलोकप्रसिद्धइत्यर्थः ॥ ३२ ॥ इति श्रीअयोध्याकांडटीकायां प्रथमःसर्गः ॥ १ ॥ ॥ ॥ ॥ ॥

श्री ॥ १ ॥ पर्वैः पतितैः ॥ २ ॥ ३ ॥ ४ ॥ दशस्यंदनेनदशरथेन शतानंदस्यनंदनः ब्रम्हपुत्रोवसिष्ठः । आभिषेचनिकानअभिषेचनयोग्यान ॥ ५ ॥
नूत्नानिनूतनानि शातकुंभमयैःसुवर्णमयैःशतंशतपरिमितानि ॥ ६ ॥ ७ ॥ रथीरथमारूढः ॥ ८ ॥ अध्यास्तआरुरोह ॥ ९ ॥ प्रासादेस्थितइतिशेषः



श्री ॥ इतिवाक्यस्यतस्यांते त्वध्यतांतत्रनृत्यतां ॥ महाजनानांशब्दोभू त्परितःसाधुसाध्विति ॥ १ ॥
पुत्रानुरागमालोक्य जनानांसजनेश्वरः ॥ हारैरिवबभौपन्नै रानंदास्रोदबिंदुभिः ॥ २ ॥ सवरि
ष्ठान्वसिष्ठादीन् ब्राह्मणानिदमब्रवीत् ॥ यौव्वराज्येभिषेक्ष्यामि रामंराजीवलोचनं ॥ ३ ॥ श्वो-
भूतेपुष्पयोगोयं चैत्रेस्मिन्मासिशस्यते ॥ तत्राभिषेकुंसंभारा नादिश्यंतांयथाविधि ॥ ४ ॥ उ-
क्तोदशस्यंदनेन शतानंदस्यनंदनः ॥ आभिषेचनिकान्नाना संभारानादिशद्द्रुतं ॥ ५ ॥ वस्त्ररत्ना
निनूत्नानि मधुसर्वौषधानिच ॥ शातकुंभमयैःकुंभैः शतंतीर्थोदकानिच ॥ ६ ॥ यच्चान्यद्द्विविधं
द्रव्यं वसिष्ठस्याज्ञयातदा ॥ सर्वंसंपादयामासुः पुरुषाःशीघ्रकारिणः ॥ ७ ॥ समानयसुमंत्राशु
रामंममनोहरं ॥ राज्ञइत्याज्ञयामंत्री रामधामरथीययौ ॥ ८ ॥ प्रांजलिःकंजनाभाय पितुराज्ञां
न्यवेदयत् ॥ सयावत्तावदेवायं देवोध्यास्तरथंचतं ॥ ९ ॥ सार्वभौमःपरीतोसौ सामंतैस्तैःसमं-
ततः ॥ प्रासादेसुप्रसन्नात्मा ददर्शायांतमात्मजं ॥ १० ॥ इंदीवरोदरप्रख्य मिंदिरायाविलोभ-
नं ॥ अमंदचंद्रवदनं मंदहासंनिसर्गतः ॥ ११ ॥ ॥ ॥ ॥

॥ १० ॥ विलोभनंआश्चर्यकरं ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मत्तमातंगगामिनं मत्तगजसदृशगमनवंतं ॥ १२ ॥ १३ ॥ मंगलकृतंअभीष्टंकुर्वंतं उपेयुषांशरणंगतानां ॥ १४ ॥ स्वजनौघानां भक्तजनसमूहानां कृतांतंयम ॥ १५ ॥ नातृप्यतांतृप्तिमतीनाभूता पायंपायंपीत्वापीत्वा ॥ १६ ॥ समवस्कंद्य अवरुह्य । मंनतंनमस्कृतं सौधंप्रासादं ॥ १७ ॥ रामनामाहं

सिंहसंहननंवीरं मत्तमातंगगामिनं ॥ उत्तमंसर्वलोकानां पद्मपत्रारुणेक्षणं ॥ १२ ॥ सर्वाभरण
संपन्नं सर्वावयवसुंदरं ॥ सर्वेंद्रियसुखंपुंसां सर्वैश्वरमुपागतं ॥ १३ ॥ अपांगैर्मंगलकृतं जयरा-
मेत्युपेयुषां ॥ मितभाषिणमप्यारा त्स्मितपूर्णाभिभाषिणं ॥ १४ ॥ जनकंस्वजनौघानां कृतांत-
मिववैरिणां ॥ परब्रह्मात्मविदुषां सुतंराजातमैक्षत ॥ १५ ॥ नराज्ञोतृप्यतांनाम नयनेनलिना
यते ॥ रामलावण्यपीयूषं पायंपायंसुदुर्लभं ॥ १६ ॥ स्यंदनात्समवस्कंद्य चारुंचलितकुंडलं ॥
संनतंसौधमारुह्य सोभ्यनंदत्स्वनंदनं ॥ १७ ॥ पाणिभ्यामनुकुर्वद्भ्यां पारिजातस्यपल्लवं ॥ ववंदे
सपितुःपादौ नामकीर्तनपूर्वकं ॥ १८ ॥ वंदनायनतंदेव मक्रमापेक्षणोनृपः ॥ कृत्वानिःसंगमुत्संगे
परिरंभमुदायदा ॥ १९ ॥ तदैवानंदजैर्बाष्पै रभ्यषिंचन्नृपःसुतं ॥ सार्वभौमोभवेत्युक्त्वा कृतकृ-
त्योभवद्ध्रुवं ॥ २० ॥ आसीनःपितुरादेशा दासनेशुद्धकांचने ॥ जगन्नाथोजगद्दीपं जिगायोदय
शैलगं ॥ २१ ॥ रामेंदुनाकृतानंदा न्नरेंद्रकुमुदाकरात् ॥ वचःपरिमलोजज्ञे सभाजनसभाजितः ॥
॥२२॥ यौवराज्यस्थलेनत्वां साम्राज्येसद्गुणान्वितं ॥ अभिषेक्ष्यामिवत्साह मनुमोदस्वकर्मतत् २३

भोअभिवादयइति नामसंकीर्तनपूर्वकं यथाभवतितथेत्यर्थः ॥ १८ ॥ अक्रमापेक्षणः क्रमापेक्षारहितः उत्संगेअंके ।१९।२०। जगद्दीपंसूर्यं ।२१।२२।२३।

भारक्षमेभारवहनसमर्थे न्यस्यनिधाय प्रवयाःवृद्धः प्रवयाःस्थविरोवृद्धइत्यमरः ॥ २४ ॥ बाढंतथास्त्विसभिनंद्य स्वधामस्वगृहं ॥ २५ ॥ चिंताश्रांतःचिंतयापरिखिन्नः रहःएकांते ॥ २६ ॥ सुष्ठुअनुष्ठितइतिस्वनुष्ठितः तत्फलंतस्यफलभूतं ॥ २७ ॥ स्वप्नजागरणानि स्वप्ने जागरणेचविद्यमानानि मृतिशंसी-

भारक्षमेत्वयिन्यस्य भारंभूभरणाव्हयं ॥ प्रवयामंदयत्नोहं विश्रमिष्यामिनंदन ॥ २४ ॥ इतितात
गिरंरामो बाढमित्यभ्यनंदत ॥ प्रापस्वधामराजापि विवेशांतःपुरंततः ॥ २५ ॥ दुर्निमित्तैर्निमित्तज्ञ
श्चिताश्रांतोमहीपतिः ॥ पुनश्चपुत्रमाहूय रहोराममभाषत ॥ २६ ॥ इष्टंदत्तंमयाभुक्तं स्वधर्मश्चस्व-
नुष्ठितः ॥ नूनंमेदुर्लभंतात तत्फलंतेभिषेचनं ॥ २७ ॥ अमंगलनिमित्तानि स्वप्नजागरणानिच ॥
भवंतिमृतिशंसीनि कार्यविघ्नकराणिच ॥ २८ ॥ शांताःस्युरंतरायामे वासुदेवप्रसादतः ॥ सहव-
ध्वात्वयात्वद्य दीक्षाकार्योपवासिना ॥ २९ ॥ इत्थंपित्रोपदिष्टःस मातुरंतःपुरंगतः ॥ ददर्शतत्रकौस
ल्यां नारायणपरायणां ॥ ३० ॥ पुत्रस्याभ्युदयंश्रुत्वा पूजयंतीमधोक्षजं ॥ देवींसुमित्रासहितां स-
ववंदेसलक्ष्मणः ॥ ३१ ॥ तावत्सावाग्यतादेवी रामाभ्युदयकांक्षिणी ॥ अब्रवीद्बाष्पपूर्णाक्षी प्रेम्णा
प्रियतमंसुतं ॥ ३२ ॥ स्वस्तिवत्सचिरंराम सतःपाह्यसतोजहि ॥ जगतांनाथजगतीं पाहिमांपुत्रिकामि
व ॥ ३३ ॥ इतिपुत्राशिषःप्रोच्य चक्रेसाभ्युदयक्रियाः ॥ आमंत्र्यलक्ष्मणंरामः ससीतःस्वगृहंययौ ३४

नि मरणसूचकानि ॥ २८ ॥ शांताः परिहृताः अंतरायाःविघ्नाः विघ्नोंतरायःप्रत्यूहइत्यमरः । वध्वासीतया ॥ २९ ॥ ३० ॥ ३१ ॥ वाग्यतामौनवती ॥ ३२ ॥ सतः सज्जनान् असतोदुष्टान् जगतींभूमिं ॥ ३३ ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥३५॥३६॥ दक्षक्षमीः कनकाकल्पं सुवर्णमयाभरणसमूहं ॥३७॥३८॥ वैदेह्यामीतया ॥३९॥ अभूतपूर्वः पूर्वमेवंविधानजातइत्यभूतपूर्वः ॥४०॥ अर्कः सूर्यः ४१
रामस्यवार्तायेषांतेतथोक्ताः जाग्रतिस्म जागरणंचक्रुः ॥४२॥ प्रतिसद्म प्रतिगृहं। प्रतिव्रजंगोकुलेगोकुले ॥४३॥४४॥ केवलंकोसलमंडलस्थाएव रामानुरागा

पुरोहितोब्रह्मसुत स्त्वरितोराज्ञआज्ञया ॥ रमारमणधामाभं रामधामाभ्यपद्यत ॥ ३५ ॥ आ-
सनात्सहसोथ्थाय श्रीमान्विनयभूषणः ॥ गुरुंजगत्रयगुरुः पूजयामासशास्त्रतः ॥ ३६ ॥ आभि
षचेनिकींदीक्षां दक्षःप्राप्यविधानतः ॥ प्रददौकनकाकल्प माचार्यायायुतंगवां ॥ ३७ ॥ हुत्वा-
भुक्ताहविष्यान्नं सपत्नीकउपोषितः ॥ दध्यौरामस्वमात्मानं ज्योतिर्नारायणाव्हयं ॥ ३८ ॥ यत
वाक्सहवैदेह्या स्वास्त्रतेदर्भसंस्तरे ॥ सशिश्येशेषशयन स्तांनिशांऋषिवाक्यतः ॥ ३९ ॥ अ
भूदभूतपूर्वोस्या मयोध्यायांमहोत्सवः ॥ रामाभिषेकलोलानां लोकानांवदतांमिथः ॥ ४० ॥
अर्कोदयेभिषेकःस्या त्कदान्वर्कउदेष्यति ॥ कदानुरामंपश्यामः ससीतमाभिषेकिणं ॥ ४१ ॥ इत्या
दिवादिनस्तत्र पौराजानपदाजनाः ॥ सबालवृद्धवनिता रामवार्ताःस्मजाग्रति ॥ ४२ ॥ प्रतिसद्म-
प्रतिसभं प्रतिवर्त्मप्रतिव्रजं ॥ महोत्सवोत्सुकाराम मस्तुवन्नूगणशःप्रजाः ॥ ४३ ॥ मालाध्वजप-
ताकाद्यैः संमार्जैरुपलेपनैः ॥ सार्वभौमाज्ञयासर्वा मलंचक्रुःपुरींनराः ॥ ४४ ॥ रामानुरागामृतभो
गतृप्ता नकेवलंकोसलमंडलस्थाः ॥ त्रयोपिलोकाःसकलाःसपाला स्त्रैलोक्यनाथोहिसकोसलेंद्रः
॥ ४५ ॥ इति संग्रहरामायणे अयोध्याकांडे रामांके नारायणपंडिताचार्य कृतौ द्वितीयः सर्गः ॥ २ ॥

मृतभोगतृप्ताइतिन नभवंति किंतर्हि सकलास्त्रयोलोका अपीत्यन्वयःतत्रहेतुः सकोसलेंद्रः त्रैलोक्यनाथोहीति ॥४५॥ इत्ययोध्याकांडटीकायां द्वितीयःसर्गः२

श्री ॥ ज्ञातिदासी ज्ञातिःबंधुभूतादासीचेति । तथोक्ता । सगोत्रबांधवज्ञातिबंधुस्वस्वजनाःसमाइत्यमरः । कुब्जा-ह्रस्वकाया मंथरानाम्नीत्यर्थः ॥ १ ॥ धात्रींपूर्वंस्वस्यरक्षांकृतवतीं कांचनस्त्रियंप्रतिपपृच्छ विचारितवती खलाअतिदुष्टा ॥ २ ॥ ३ ॥ ४ ॥ व्यालीसर्पस्त्रीत्हतपोतका अपत्हतबालका अमंथरा

॥ श्री ॥ ज्ञातिदास्यथकैकेय्या गृहेजातासहोषिता ॥ कुब्जाप्रासादमारूढा मंथरापुरमैक्षत ॥ १ ॥ पुष्टतुष्टजनंदृष्ट्वा नगरंसमलंकृतं ॥ वाद्यमानमहावाद्यं धात्रींपपृच्छसाखला ॥ २ ॥ कोयंमहोत्सवोभद्रे पुर्यामस्यांप्रवर्तते ॥ राममात्राकुतोवित्तं विप्रेभ्योभूरिदीयते ॥ ३ ॥ पृष्टेतिधात्रीसंतुष्टा नृत्यंतीचेदमब्रवीत् ॥ रामोभिषिच्यतेहंत साध्वलंक्रियतामिति ॥ ४ ॥ व्यालीवयष्टिसंस्पृष्टा व्याघ्रीवत्हतपोतका ॥ चुक्षोभामर्षताम्राक्षी मंथरानन्वमंथरा ॥ ५ ॥ साक्षादलक्ष्मीःक्षोणिस्था कस्मिंश्चित्कारणांतरे ॥ रामेणचरणेक्षिप्ता जज्ञेरामैकवैरिणी ॥ ६ ॥ दीर्घश्वासकृतायासा प्रासादादवरुह्यसा ॥ गृहेशयानांकैकेयीं हाहतास्मीत्युपाद्रवत् ॥ ७ ॥ तदुपश्रुत्यकैकेयीं संभ्रांतांसहसोत्थितां ॥ किमेतदितिपृच्छंतीं कितवीसाभ्यभाषत ॥ ८ ॥ रामोभिषिच्यतेराज्ञा भूयोनोभयमागतं ॥ इत्युक्तवत्यैदास्यैसा प्रत्हृष्टाभूषणंददौ ॥ ९ ॥ इमांचवाचमाचष्ट भद्रेभीरिहनास्तिनः ॥ समौमेरामभरतौ सुतौराजसुतौध्रुवं ॥ १० ॥ वदान्योलोकमान्योयं ज्येष्ठश्रेष्ठोनृपात्मजः ॥ कथंमयापरिद्वेष्यो भक्तिमान्मयिमातृवत् ॥ ११ ॥ ॥ ॥ ॥

अमनोहरा दुष्टेत्यर्थः ॥ ५ ॥ चरणेपादेक्षिप्ताविद्धा जज्ञेअभूत् ॥ ६ ॥ ७ ॥ कितवीकपटयुक्ता ॥ ८ ॥ भूयःबहुलं ॥ ९ ॥ भीःभयं भीतिर्भीःसाध्वसं भयमित्यमरः ॥ १० ॥ वदान्यःदानशीलः स्युर्वदान्यस्थूललक्ष्यदानशौंडाबहुप्रदइत्यमरः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

भूषां भूषणं ॥ १२ ॥ अनयं अन्यायं विलोभितावंचिता ॥ १३ ॥ १४ ॥ १५ ॥ अन्ववायःवंशः । वंशोन्ववायःसंतानइत्यमरः । दास्यंदासत्वं ॥१६॥
अयंरामः ॥ १७ ॥ आदितेयाःदेवाः आदितेयादिविषदइत्यमरः । दैतेयान् दैत्यान् असुरादैत्यदैतेयाइत्यमरः । अवसरोचितेछिद्रे छिद्रंप्रतीक्ष्यछिंदं-

इतिब्रुवंत्यांकैकेय्यां तांचभूषांनिरस्यसा ॥ निर्भर्त्सयंतीनिर्भाग्या राज्ञींपुनरभाषत ॥ १२ ॥ वि
नयादनयंप्राप्य व्यसनेमज्जसिध्रुवं ॥ सपत्नीपक्षिणाराज्ञा मूढेत्वंहिविलोभिता ॥ १३ ॥ सानु-
जेभरतेयाते पश्यरामाभिषेचनं ॥ लक्ष्मणोराममन्वास्ते शत्रुघ्नोभरतंयथा ॥ १४ ॥ यदिरामो-
भिषिच्येत सपत्न्यास्तवनंदनः ॥ त्वयाससुतयादास्यं कौसल्यायाविधीयतां ॥ १५ ॥ भरत
स्यान्ववायोपि दास्यमेवप्रयास्यति ॥ नत्वराजसुतोराजा राजत्वंरामसंतते ॥ १६ ॥ निगूढवै-
रोवीरोयं कालयेद्धात्वदात्मजं ॥ त्वंनुरामानुरागेण स्वपुत्रस्याहितेरता ॥ १७ ॥ आदितेयाहिदै
तेयां स्तपोविद्यागुणाधिकान् ॥ छिद्रेछिंदंतिसत्येवं क्षत्रधर्माःसनातनाः ॥ १८ ॥ कैकेयीकुब्ज-
येत्युक्ता कष्टभावेदमब्रवीत् ॥ सत्यमेतत्कथंकुब्जे राज्यंसूनोर्भवेन्मम ॥ १९ ॥ नीतिमांश्चविनीतश्च
रामोयंजनरंजनः ॥ पितुःप्राणसमोराज्या त्कथंनीत्याप्रयाप्यते ॥ २० ॥ इतिब्रुवाणांकैकेयीं सु-
स्मितांस्माहमंथरा ॥ वरौकिंविस्मृतौमुग्धे पत्यादत्तौपुरैवते ॥ २१ ॥ वरद्वयंवृणीष्वत्वं वरमेतद्वरा
नने ॥ साम्राज्यंभरतस्याशु प्रव्राज्यंजानकीपतेः ॥ २२ ॥ ॥ ॥ ॥ ॥

तिनाशयंतीत्यर्थः । इसतिकैकेयि सनातनाःस्वाभाविकाः ॥ १८ ॥ १९ ॥ प्रयाप्यतेप्रयातःकार्यते राज्यभ्रष्टःकर्तुंशक्यतइत्यर्थः ॥ २० ॥ पत्याभर्त्रा
दशरथेन दत्तौप्रदत्तौ ॥ २१ ॥ प्रव्राज्यं प्रव्रजनरूपंवनवासं ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

समाःसंवत्सरान् ॥ २३ ॥ मंथरामतेःतंविलासमितियोजना आशिश्लेष आलिंगनंचकार ॥ २४ ॥ क्रोधागारंकोपेसमागतैसानि शयनार्थंयद्गृहंतत्क्रोधागारं ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तत्रभुजंगींसर्पास्त्रियं ॥ २९ ॥ आलप आभाषणंकुरु नोपयासिनप्राप्नोषि ॥ ३० ॥ अवन्यांभूमौ चतुरंतायां चतुः

चतुर्दशसमारामो वनंयातुवसेद्व्रती ॥ छिन्नमूलोभवेद्व्यक्तं भरतोरंजयेज्जनं ॥ २३ ॥ कैकेयीत्थंस
माकर्ण्य विलासंमंथरामतेः ॥ आशिश्लेषद्रुतंदासीं हसंतीसाधुसाध्विति ॥ २४ ॥ कुब्जायैकुंडले
दत्वा कैकेयीस्वेप्रहर्षतः ॥ क्रोधागारेद्रुतंशिश्ये मंथरायामतेन्सा ॥ २५ ॥ अभिषेकस्यसंभारा
न्विभवांश्चोपकल्प्यसः ॥ राजाराजीवनयनः कैकेयीभवनंययौ ॥ २६ ॥ सस्मरन्सुस्मितांजाया
मनंगस्यवशंगतः ॥ नापश्यच्छयनागारे रत्नदीपप्रदीपिते ॥ २७ ॥ कुत्रकांतेतिसंभ्रांतः क्रोधा-
गारंप्रविश्यसः ॥ ददर्शतरुणींभार्यां शयानांकेवलंभुवि ॥ २८ ॥ तांपापनिश्चयांभूयो रमणीत्य-
भ्युपेयिवान् ॥ भुजंगीमाल्यबुध्येव परिमृश्येतिचाब्रवीत् ॥ २९ ॥ त्यजशोकंविशालाक्षि मामा-
लपशुकालपे ॥ नोपयासिप्रियेत्वंमां कथंस्मरशराहतं ॥ ३० ॥ अवन्यांचतुरंतायां कस्मिन्दंडोनि-
पात्यतां ॥ अब्राह्मणकुलंब्रूहि देवितेविहितागसं ॥ ३१ ॥ प्रयच्छाम्यधुनासर्वं कृशोदरियदि-
च्छसि ॥ कल्पवृक्षइवाहंते स्मितेनोत्तिष्ठसुस्मिते ॥ ३२ ॥ कांतवाणीमितिश्रुत्वा कांतावाणीमभा
षत ॥ सत्यसंधःसदाराजन् भवधर्मविदांवर ॥ ३३ ॥ ॥ ॥

समुद्रपर्यंतायां विहितागसंकृतापराधं ॥ ३१ ॥ प्रयच्छामिप्रददामि कृशोदरिसूक्ष्ममध्ये ॥ ३२ ॥ सत्यसंधःसत्यप्रतिज्ञः ॥ ३३ ॥ ॥ ॥

निशासुरात्रिषु अरक्षं अपालयं रक्षोभ्यः ॥ ३४ ॥ याचेप्रार्थये याचनीयंप्रार्थयितुंयोग्यं ॥ ३५ ॥ वक्रायाःकुटिलचित्तायाः ॥ ३६ ॥ प्रेयसाअधिकं-
प्रियेणेसर्थः शपेशपथंकरोमि ॥ ३७ ॥ असौकैकेयी ॥ ३८ ॥ ॥ ३९ ॥ याप्यतां प्रव्राज्यतां ॥ ४० ॥ ४१ ॥ कैकेयीत्रिनताशक्तया कैकेय्येवत्रिन-

पुरासुरासररणे त्वांनिशासुशरक्षतं ॥ अरक्षंननुरक्षोभ्यो विद्ययाविप्रदत्तया ॥ ३४ ॥ तदाप्री
त्याप्रदत्तौमे वरौनरवरत्वया ॥ याचेतौयाचनीयंत्वां दीनाहंतववल्लभा ॥३५॥ इतितस्यावचोवीरो
वक्रायामधुराक्षरं ॥ मृगीगीतामिवाकर्ण्य विवशोवाक्यमब्रवीत् ॥ ३६ ॥ वरौवराननेदद्या मभी-
ष्टौसत्यमेवतौ ॥ ममपुत्रेणरामेण प्राणेभ्यःप्रेयसाशपे ॥ ३७ ॥ राज्ञःप्रतिज्ञांतांश्रुत्वा किंचिदु
त्फुल्ललोचना ॥ वचोवज्रंससर्जासौ जगन्मंगलभंगदं ॥ ३८ ॥ तवराजन्प्रतिज्ञायाः साक्षिणो-
धर्मसाक्षिणः ॥ रामःप्रियश्चेद्भवतो मह्यंदेहिवराविमौ ॥ ३९ ॥ अनेनैवोद्यमेनाद्य भरतोत्राभिषि
च्यतां ॥ चतुर्दशसमारामो प्राप्यतांचवनंप्रति ॥ ४० ॥ वाक्यबाणेनतेनैव विदीर्णहृदयोनृपः ॥
पपातसहसामर्त्यां छिंनमूलइवद्रुमः ॥ ४१ ॥ कैकेयीत्रिनताशक्त्या मुक्तोमंथरयाशरः ॥
वाङ्मयोपातयद्भूपं दैत्येषुभिरपातितं ॥ ४२ ॥ दुःखमोहपराभूतः समुहूर्तंमहीपतिः ॥ संज्ञांक-
थंचित्संप्राप्य दीनआसमहीतले ॥ ४३ ॥ क्रोधशोकाभिसंतप्ता न्बाष्पबिंदून्महोष्मणः ॥
निमृज्यदीर्घंनिश्वस्य कैकेयींवीक्ष्यसोब्रवीत् ॥ ४४ ॥ ॥ ॥

तात्रिपुस्थलेषुनताधनुर्विशेषात्मिकायष्टिः तच्छक्त्या ॥ ४२ ॥ दुःखमोहपराभूतःदुःखमोहाभ्यांमूर्छितः आसेतसअतिष्ठत् ॥ ४३ ॥ महोष्मणः अत्यु-
ष्णान् निमृज्यपरिमृज्य ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शैलूषींनटस्त्रियं वाचाटींबहुभाषिणीं टिट्टिभीमिव टिट्टिभनामकपक्षिस्त्रियमिव ॥ ४५ ॥ कृपाणी खड्गापरनामिकाकृपाणीव निसर्गतःकोमलाभवति परैः शत्रुभिः कृष्टाआकृष्टाचभवति सुवंशापिशोभनग्रहणस्थलवतीचभवति कैकेय्यांस्पष्टएवार्थः धारिताधृता ॥ ४६ ॥ गेहात्गृहात् त्वत्स्थात् त्वायस्थितात् स्नेहात् भरतंचअधोलोकंपातयसि गमयसीत्यर्थः ॥ ४७ ॥ उक्थंमुख्यप्राणं ॥ ४८ ॥ मनस्वीबुद्धिमान् ॥ ४९ ॥ अश्वपतेःकेकयराजस्य निकृंतासिछि

धिग्धिग्बुध्दिविहीनांत्वां दुर्बुध्दौबुध्दिमानिनीं ॥ शैलूषीमिवनिःशंकां वाचाटींटिट्टिभीमिव ॥ ४५ ॥
कृपाणिवकृपाहीना कोमलाचनिसर्गतः ॥ परैःकृष्टासुवंशापि मन्नाशायासिधारिता ॥ ४६ ॥ गे
हाद्रामंप्रयाप्यत्वं देहान्मामपिपापिने ॥ स्नेहात्वत्स्थाच्चभरतं लोकांस्त्वंपातयस्यधः ॥ ४७ ॥
अहर्पतिंविनैवाह्न विनावारीववारिजं ॥ देहीवोक्थंविनारामं विनाहंनास्मिसर्वथा ॥ ४८ ॥
मयारामेणचत्यक्तां भरतोनावसेत्पुरीं ॥ प्राणजीवपरित्यक्तां तनूमिवमनःस्वयं ॥ ४९ ॥
भरतस्यासिजननी भार्यामेश्वपतेःसुता ॥ त्रयाणामपिनःकीर्तिं धार्मिकाणांनिकृंतसि ॥ ५० ॥
अनुक्तपूर्वंदुर्वाक्य मिदानीमुक्तवत्यसि ॥ सर्वेषामपिपूर्वेषां गुणानांदहनायितं ॥ ५१ ॥
सर्वभूताभिरामाय रामायगुणसिंधवे ॥ ऋजवेऽनभ्यसूयाय कोभ्यसूयतिकुत्रचित् ॥ ५२ ॥
समौमेरामभरता वित्यवादीःकथांतरे ॥ भरताच्चापिशुश्रुषू रामस्त्वंत्यज्यतेकथं ॥ ५३ ॥
वनंगच्छेतिवक्ष्यामि कथंराममनागसं ॥ कांतत्यक्तांप्ररुदितां वधूंद्रक्ष्यामिवाकथं ॥ ५४ ॥

नांकरोषि ॥ ५० ॥ दहनायितं अग्निवत्स्थितं ॥ ५१ ॥ अभ्यसूयति असूयांकरोति गुणेषुदोषाविष्करणमसूयेत्युच्यते ॥ ५२ ॥ शुश्रूषुःशिश्रूषाकरण शीलः ॥ ५३ ॥ अनागसं अपराधरहितं ॥ वधूंस्नुषां ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ५५ ॥ वामोरुमनोहरोरुकैकयि ॥ ५६ ॥ लालप्यमानस्य पुनःपुनर्विलापंकुर्वतः भामिनिकांते ॥ ५७ ॥ विलुठंतंभूमौपरिभ्रमंतं ॥ ५८ ॥ ५९ ॥
औशीनरादयः उशीनरपुत्राद्याराजानः प्रतिज्ञाय प्रतिज्ञांकृत्वा ॥ ६० ॥ ६१ ॥ दीनतांदुःखस्वभाववर्ती एकाहंएकस्मिन्नहनि किमुनिरंतरं ॥ ६२ ॥

संमतात्वंगुणैःसर्वैः पौरजानपदेष्वपि ॥ त्यजैकंबाल्दिदोषंत सर्वदूषणकारणं ॥ ५५ ॥ यद्यदिछ
सिवामोरु तत्तदास्यामिसर्वथा ॥ वरावेतौविनादेवि प्रणम्यत्वांप्रसादये ॥ ५६ ॥ ममदीनस्यवृ
द्धस्य तवप्रियतमस्यच ॥ लालप्यमानस्यभृशं शरणंभवभामिनि ॥ ५७ ॥ विलपंतंपतिमि-
ति विलुंठंतंमहीतले ॥ विलोक्यानल्पदर्पासा कैकेयीवाक्यमाददे ॥ ५८ ॥ अनेनासत्यवादेन य
शोधर्मादयोगुणाः ॥ स्फीतानश्यंतितेराजन् वरौमेनददासिचेत् ॥ ५९ ॥ औशीनरादयःपूर्वं स
त्यार्थेदेहमत्यजन् ॥ प्रतिज्ञायस्वपुत्राय त्वंराज्यंनचदास्यसि ॥ ६० ॥ रामंराज्येभिषिच्यत्वं रंतुं-
कौसल्ययेछसि ॥ शिष्टलक्षणदुष्टात्म न्नष्टोयंतेमनोरथः ॥ ६१ ॥ सपत्नींत्यजकौसल्यां मानिनीं
दीनतांगतां ॥ एकाहंचेदवेक्षिष्ये गमिष्यामिकृतार्थतां ॥ ६२ ॥ विषंपास्यामिविषमं मरिष्या
मितवाग्रतः ॥ नचेत्प्रतिज्ञांकुरुषे प्रोच्येतिविरराम सा ॥ ६३ ॥ हारामेतिक्षितौपन्नो मोहेनसम
हीपतिः ॥ नानासांत्वैरशांतांतां पुनःकृत्वोब्रवीदिदं ॥ ६४ ॥ पापेपाणिर्मयायस्या गृहीतोमंत्रपू
र्वकं ॥ त्वांत्यजामिममायोग्यां रामसंत्यागकारणं ॥ ६५ ॥ ॥ ॥ ॥ ॥

॥ ६३ ॥ पन्नःपतितः ॥ ६४ ६५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मंदस्य अल्पभाग्यस्य मंदाल्पापटुनिर्भाग्याइत्यमरः । धास्यतिकरिष्यति ॥ ६६ ॥ सहस्रयामासहस्रयामपरिमिता ॥ ६७ ॥ सीतायाःकांतःप्रभातेप्रातः समयेमागधैःप्रबोधकारिभिःपुरुषैः स्युर्मागधास्तुमगधाइत्यमरः । इतिजगदेसंस्तुतोभूत् कथंहरामततत्र प्रभाशक्तिः जगदेकांतश्रियै जगतांलोकस्य मुख्य श्रियैभवतीतिशेषेणान्वयः । रवेःसूर्यस्यप्रभेवेत्यन्वयः ॥ ६८ ॥ तेनैवतादृशकांत्याश्रयमणिगणेनैव तेनतादृशमणिरंजितभूषणगणेन वल्लभयासहेतियो-

श्रुत्वैवंवरदानंमे रामःक्षिप्रंगमिष्यति ॥ ऋजुर्मंदस्यमेभीष्टां राज्यरक्षांनयास्यति ॥ ६६ ॥ इत्थं लालप्यमानस्य कैकेय्यादारितात्मनः ॥ सहस्रयामातस्यासी त्सात्रियामापिशर्वरी ॥ ६७ ॥ प्र भातेजगदेकांतः सीतायामागधैरिति ॥ प्रभातेजगदेकांतः श्रियैरामरवेरिव ॥ ६८ ॥ तत्रोत्सवे मणिगणोरुचिभिर्विरेजे तेनैवभूषणगणोविविधोविरेजे ॥ रामोथतेनसहवल्लभयाविरेजे भूम्नाचरा चरमिदंसकलंविरेजे ॥ ६९ ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे तृतीयःसर्गः ॥ ३ ॥ ॥

॥ श्री ॥ दिवाकरेथाभ्युदिते सुमंत्रोमंत्रिसत्तमः ॥ सत्वरःसत्वसंपन्नो नरेंद्रांतःपरंययौ ॥ १ ॥ प्रविश्यांतःपुरंकांतं मंत्रीद्वास्थैरवारितः ॥ सुप्तंमत्वानरपतिं बोधयामाससंसदि ॥ २ ॥ सर्वान्सं भृत्यसंभारा नाभिषेचनिकानिह॥ वसिष्ठाद्याश्चमुनय स्त्यरंतेतेहितेरताः ॥ ३ ॥ कृतःस्वस्त्ययनः श्रीमान् रामस्तवनियोगतः ॥ अलंकृतःसपत्नीक आस्तेकार्यंकुरुद्रुतं ॥ ४ ॥ सचिवस्यवचःश्रु त्वा लज्जाशोकाकुलेनृपे ॥ अवाङ्मुखेमौनवति प्रोचेसाकैकयात्मजा ॥ ५ ॥ ॥ ॥

जना भूम्नापरिपूर्णात्मकेनहरिणा ॥ ६९ ॥ इत्ययोध्याकांडटीकायां ३ सर्गः ॥ ॥ श्री ॥ सत्वरःसवेगःसत्वसंपन्नःसात्विकः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ निद्रातिनिद्रांकृत्वास्थितवतिसति जाग्रतिजागरणंकुर्वतिवर्तिसति सचिवस्यभृत्यस्यसुमंत्रस्य अवाङ्मुखे अधोमुखे ॥ ५ ॥ ॥ ॥ ॥

॥ ६ ॥ ७ ॥ आवेदय ज्ञापय ॥ ८ ॥ ९ ॥ १० ॥ विश्लेषःविरहः ॥ ११ ॥ मृतकंशवसमं मंक्षुक्षिप्रं ॥ १२ ॥ १३ ॥ वप्रैःप्राकारैः पुरंदरपुराक्षिप्नु

रामहर्षेणराजेंद्रो जागर्तिस्मनिशामिमां ॥ तस्मान्नूनंसनिद्रोसौ त्वंशीघ्रंराममानय ॥ ६ ॥ मंत्रीम
त्वावचःसत्यं तथेतिसमुदाहृतं ॥ निर्गतःप्रैक्ष्यतद्वारि मंत्रिणःसपुरोहितान् ॥ ७ ॥ उदे-
तिदेवःसविता संभारःसंभृतोखिलः ॥ आवेदयाशुराजानं सतैरित्यभिभाषितः ॥ ८ ॥ ततःसुमं
त्रःसंभ्रांतः कालस्यात्ययशंकया ॥ पुनरंतःपुरंगत्वा स्तुवन्भूपमबोधयत् ॥ ९ ॥ महेंद्रसखराजें
द्र महासुरनिबर्हण ॥ आयुष्मन्रामजनक क्षिप्रमुद्बुध्यतांत्वया ॥ १० ॥ सुमंत्रस्तुतिवाक्यानि
कैकेयीक्रूरवाक्यतः ॥ राज्ञोतिदुःसहान्यासन् रामविश्लेषशंकिनः ॥ ११ ॥ महीशोमंत्रिणंप्राह मृ
तकंस्तौषिकिंसखे ॥ जीवन्क्षणंचपश्यामि राममानयमंक्ष्विति ॥ १२ ॥ ततःकिंचिदुपाक्रम्य कि
मेतदितिदुर्मनाः ॥ चिंताक्रांतःसुमंत्रोपि रामधामद्रुतंययौ ॥ १३ ॥ दृष्टपुष्टजनंवप्रैः सौवर्णैःस
माभिर्वृतं ॥ पुरमिंद्रपुराक्षिप्नु वैकुंठोपममाविशत् ॥ १४ ॥ ददर्शदेवंसौवर्ण पर्यंकेरांकवास्तृते ॥ आ
सीनंचंदनेनाक्तं वराहरुधिरत्विषा ॥ १५ ॥ सीतयासेवितंदेव्या चारुचामरहस्तया ॥ द्रष्टुमिच्छतिराजा
त्वा मित्यूचेसंप्रणम्यतं ॥ १६ ॥ आरुरोहरथंरामः प्रभाकरसमप्रभं ॥ अभिनंद्याथमैथिल्या अपांगैर्वि
श्वमंगलैः ॥ १७ ॥ पुरात्पुरुषसिंहोयं महासिंहोगुहादिव ॥ निर्जगामजगन्नाथो नानाभटगणैर्वृतः १८

पुरंदरपुरमाक्षेप्तुंनिराकर्तुंशीलमस्येतितथोक्तं ॥ १४ ॥ रांकवास्तृतेमृगरोमजवस्त्रास्तृते वराहरुधिरत्विषातिरक्तेनेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

हर्म्याणिप्रासादान् रामासीमंतिनीस्त्री ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ मोदेनर्मतोषेण ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ आगःअपराधः मानात्

रम्याणिहर्म्याण्यारुह्य रामारामंनिरीक्ष्यच ॥ परस्परमितिप्राहुः पुरुषाश्चततस्ततः ॥ १९ ॥ सी-
मंतिनीनसीतायाः समास्तिभुवनत्रये ॥ राघवंवल्लभंलेभे यामुकुंदमिवेंदिरा ॥ २० ॥ कौसल्य
यानृपेणापि किंनुतत्सुकृतंकृतं ॥ रामंवत्सेतियावेनं समाश्लिष्याभ्यनंदतां ॥ २१ ॥ मानुषाङ्ग-
वपीयूषं धनंभूरीवनिर्धनाः ॥ लब्ध्वाराममसुराजानं हंतमोदामहेधुना ॥ २२ ॥ एवंविचित्रमो-
देन वाचःप्रब्रुवतोजनान् ॥ सस्मितेनकटाक्षेण लालयन्प्रययौप्रभुः ॥ २३ ॥ प्रविश्यराजभ
वनं देवराजगृहोपमं ॥ ववंदेपितरंरामः कैकेयीमपिमातरं ॥ २४ ॥ आयुष्मन्भववत्सेति
विवक्षोरपिभूपतेः ॥ वचनंनागलद्धक्त्रा न्नेत्राभ्यामगलज्जलं ॥ २५ ॥ पितुस्तंशोकमालक्ष्य कै-
केयींपृच्छातिस्मसः ॥ जानंश्चसर्वंसर्वेशो लोकमेनंविडंबयन् ॥ २६ ॥ किमंबदुःखंतातस्य किमा
गोमयिपश्यति ॥ किंत्वयागःकृतंमाता स्तत्यंब्रूहिसुतायते ॥ २७ ॥ वाणीमाकर्ण्यरामस्य शठाक
ठिणमानसा ॥ कैकेयीकैतवप्रज्ञा सस्मितंसमभाषत ॥ २८ ॥ नत्वयागःकृतंपत्र नमयानापरेणवा ॥
राजामह्यंवरौदत्वा त्वद्भयादनुतप्यते ॥ २९ ॥ यदितातस्त्वतातेते भवेद्भक्तिरकैतवा ॥ धर्मकृच्छ्रा ॥ ३२ ॥
दिमंपाहि वक्ष्येत्वंचेत्प्रतिश्रवी ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥

गर्वात् ॥ २७ ॥ कैतवप्रज्ञाकपटबुद्धिः ॥ २८ ॥ २९ ॥ अकैतवा निर्व्याजा प्रतिश्रवी प्रतिज्ञावान्भवसि ॥ ३० ॥ ॥ ॥ ॥ ॥

॥ ३१ ॥ प्रतिश्रुतंप्रतिज्ञामतिज्ञातमितिवा ॥ ३२ ॥ ३३ ॥ सौजन्यात्स्नेहात् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ नाश्नातिभोजनंनकरोति ॥

इत्युक्तऊचेभगवान्नकुर्यांकिंपितुःप्रियं ॥ पिबेयंकालकूटंतु विशेयंज्वलितानलं ॥ ३१ ॥ मातःक्ष
मापयक्षिप्रं क्षमावंतंक्षमापतिं ॥ पित्रादत्तौवरौतुभ्यं मयासत्यंप्रतिश्रुतं ॥ ३२ ॥ प्रभुणेतिप्राति
ज्ञाते सापापाव्यलल्लापतं ॥ त्वत्पित्रामेवरौदत्तौ पालितेनपुरामया ॥ ३३ ॥ इदानींतौवरौदातु
मुचितौयाचितौमया ॥ स्वयंदत्वाप्यहोमेत्वां सौजन्यान्नवदत्यसौ ॥ ३४ ॥ वनेवसत्वंतपसा
वत्सरान्नवपंचच ॥ भरतःपातुपृथिवी मेतद्राज्ञानुशासनं ॥ ३५ ॥ इत्युक्तऊचेकाकुत्स्थो वनंया
स्याम्यहंसुखं ॥ आनीयतांचभरतो दूतैःसाध्वभिषिच्यतां ॥ ३६ ॥ निःसंगास्मोवयंमातु र्नत्तुप्रा
कृतधर्मिणः ॥ किंतुकस्मादिदंतातः स्वयंनाज्ञापयत्यहो ॥ ३७ ॥ इत्युक्तेसाखलाप्रोचे तवमान
धनःपिता ॥ लज्जयात्वांनवक्तीह गूढोभावोस्यचोच्यते ॥ ३८ ॥ यावत्तिष्ठस्ययोध्यायां तावन्ना-
श्नातितेपिता ॥ शीघ्रंनिर्गच्छगुर्वाज्ञां रामत्वंनातिवर्तसे ॥ ३९ ॥ इत्थंकाप्यैवकैकेय्या सर्वारुंतु
दयोदिते ॥ धिक्कष्टमितिभूपालः सपपातममोहच ॥ ४० ॥ रामऊचेथकैकेयीं देविद्रक्ष्यामिमा
तरं ॥ सीतांचसांत्वयिष्यामि पुनर्यास्यामितापसः ॥ ४१ ॥ ॥ ॥ ॥

॥ ३९ ॥ काप्यैव कापट्यैव ॥ सर्वारुंतुदया सर्वमर्मशल्यव्यथाकारिण्या अरुंतुदंतुमर्मस्पृगित्यर्थः ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥

॥ ४२ ॥ मुक्तकंठःरुरोद उच्चैःरोदनमकरोदित्यर्थः ॥ ४३ ॥ निश्चक्रामनिर्जगाम निवेशनात्गृहात् ॥ ४४ ॥ प्रव्रजति प्रव्रजनंकुर्वतिसति ॥ ४५ ॥ ४६ ॥ तेनेचक्रे ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ धामवत्तेजोयुक्तं ॥ ५० ॥ कनत्कनककंकणके शोभमानसुवर्णमयकटकयुक्ते प्रकोष्ठेहस्तप्रदेशे न्यस्यानिक्षिप्य ॥



एतावत्क्षम्यतांमात स्त्वयाराजर्षिजायया ॥ भरतःपातुपृथिवीं पितृशुश्रूषणेरतः ॥ ४२ ॥ इ-
तिशत्धांशुभांश्रुत्वा गिरंरामस्यपार्थिवः ॥ हारामरामवत्सेति मुक्तकंठोरुरोदसः ॥ ४३ ॥ राज्ञ
स्तस्यविसंज्ञस्य कैकेय्याश्चजगद्गुरुः ॥ परिक्रम्याभिवंद्यांघ्री न्निश्चक्रामनिवेशनात् ॥ ४४ ॥ आ
र्तस्वरोमहानासी न्माहिषीणांमहीभृतः ॥ पितुरंतःपुरात्तस्मा त्प्रव्रजत्यखिलेश्वरे ॥ ४५ ॥ सर्वभू
तप्रियोरामः क्वनोवत्सोगमिष्यति ॥ कथंत्यजतिराजानं मुहूर्तंविरहासहं ॥ ४६ ॥ इत्युच्चैःक्रंदि
तंतासां संघेसंघेनिवेदितं ॥ सर्वत्राक्रंदितंतेने बीजंबीजांतरंयथा ॥ ४७ ॥ पूर्णानंदस्यरामस्य पूर्णे
दुनिभमाननं ॥ दृष्ट्वाराज्यच्युतस्यापि शोचंतिस्मपुनःप्रजाः ॥ ४८ ॥ लक्ष्मणःक्षुभितोलज्जा
शोकक्रोधसमुच्चयात् ॥ बत्धमौनोनिजंश्रेष्ठं निर्यांतमनुनिर्ययौ ॥ ४९ ॥ सजगज्जनकोगत्वा
जनन्याधाममधामवत् ॥ वैष्णवव्रतनिष्ठांता मभ्यवंदतसानुजः ॥ ५० ॥ राज्ञीकनत्कनककंकणके
प्रकोष्ठे न्यस्याक्षमाल्यमथकंपितकर्णभूषा ॥ आश्लिष्यराममवदत्प्रमदाश्रुपूर्णा स्याद्यौवराज्यम
धुनैवतवात्मजेति ॥ ५१ ॥ ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके चतुर्थःसर्गः ॥ ४ ॥

॥ ५१ ॥ इत्ययोध्याकांडटीकायां चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्री ॥ १ ॥ समयेन संकेतेन ॥ २ ॥ उल्लूनामंछिन्ना सारंगीमृगी ॥ ३ ॥ ४ ॥ सास्रौघा अश्रुसमूहसहिता ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ जानेसति ॥ अ-

श्री ॥ लक्ष्मणंप्रेक्ष्यभगवा न्सस्मितंप्राहमातरं ॥ अंबनूनंनजानासि तवाप्रियमुपास्थितं ॥ १ ॥
समयेननृपंबध्वा कैकेय्यामेप्रचोदितः ॥ वनेचतुर्दशसमा वासोराज्यंस्वसंततेः ॥ २ ॥ इत्युप-
श्रुत्यकौसल्या निपपातावनीतले ॥ उल्लूनापुष्पवल्लीव सारंगीवशराहता ॥ ३ ॥ आलोक्यलो-
कनाथस्तां मूर्छितांभुवउद्धरन् ॥ ममर्जपांसूस्तस्यांगा त्कराभ्यांकरुणाकरः ॥ ४ ॥ मुहूर्तात्सा
शनैःसंज्ञां लब्ध्वाशोकाग्निशोषिता ॥ दीनाजगादसास्रौघा दृष्ट्वापुत्रमुखांबुजं ॥ ५ ॥ अस्वैरिणीं
शुचिंदांतां गुरुदेवार्चनेरतां ॥ त्यक्तुमर्हसिमांतात मातरंमामनागसीं ॥ ६ ॥ सपत्न्याममकैके-
य्याः कलहाख्यानलोष्मणा ॥ संतत्यांसुचिरायत्वं कथंत्यजसिधार्मिक ॥ ७ ॥ नाप्रियाहंतवपि
तर्नापिलोकैर्विनिंदिता ॥ किंतुसावक्रधीर्नाहं तस्मान्ममपरोभव ॥ ८ ॥ याःसप्तविंशतिसमा स्त्व
यिजातेइमाःसुत ॥ तवोदयंप्रतीक्ष्याहं स्थिताब्दामिवचातकी ॥ ९ ॥ वज्रात्खरतरंनूनं त्हृदयंम
मनंदन ॥ त्वद्यात्रावाक्यवज्रेण यन्नभिन्नंसहस्रधा ॥ १० ॥ पितुर्गरीयसीमाता नगच्छातोमदाज्ञ-
या ॥ यदियास्यसिहास्यामि देहंत्वद्विरहाग्निना ॥ ११ ॥ स्वर्गयास्यतिराजेंद्रो निर्गतेत्वयिस-
र्वथा ॥ क्षणंत्वद्विरहाशक्ता नजीवेयमभर्तृका ॥ १२ ॥ ॥ ॥ ॥ ॥

ब्दंवर्षणशीलमेघं चातकी चातकनामिकापक्षिणी ॥ ९ ॥ खरतरं कठिणतरं ॥ १० ॥ हास्यामि त्यक्ष्यामि ॥ ११ ॥ १२ ॥ ॥ ॥

शाकेन फलादिना ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कंडुनाकंडुनामकेनमुनिना ॥ १७ ॥ प्रतीपं विपरीतं ॥ १८ ॥ १९ ॥ २० ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥



वयंशाकेनजीवामः कैकेय्याःसंतुसंपदः ॥ करुणांकुरुधर्मज्ञ नमांमुंचकथंचन ॥ १३ ॥ विलपंती
मिमांवीक्ष्य क्षुभितंलक्ष्मणंभृशं ॥ नियम्यहेतुमद्वाक्यं जगादजगतांपतिः ॥ १४ ॥ मातर्गरीय
सीमाता सर्वस्माज्जगतोपितुः ॥ आचार्याज्जनकाद्वापि परंनास्तिहरिंविना ॥ १५ ॥ मातरंमारया
मास भार्गवोभगवान्पुरा ॥ अज्ञयापितुरेवाथ तत्प्रसादादजीवयत् ॥ १६ ॥ कंडुनापंडितेनैव गौ
र्हतापितुराज्ञया ॥ पित्रर्थमन्वनुज्ञांमे देहिमातःप्रियासिचेत् ॥ १७ ॥ पितुराज्ञामनुष्ठाय चतुर्द
शसमास्त्वहं ॥ निवर्तिष्येप्रतीपंमा ब्रूहिप्राणैःशपेमम ॥ १८ ॥ अनुनीयेतिजननीं रामोलक्ष्मण
मब्रवीत् ॥ दैवोपसादितेकार्ये नतातक्रुध्यतामिति ॥ १९ ॥ कैकेय्याःकैतवंसर्वं प्रजासंकटमुत्कटं ॥
आर्जवंचप्रभोर्वीक्ष्य पुनश्चुक्रोधलक्ष्मणः ॥ २० ॥ लालाटींभ्रुकुटींबिभ्र द्भ्रमद्भूररुणेक्षणः ॥ अमि
त्रघ्नोथसौमित्रिः प्रोचेप्रेक्ष्यासिमात्मनः ॥ २१ ॥ यद्दैवंदेवदेवेश स्यात्तेराज्यापनोदनं ॥ हन्यां-
पुरुषकारेण तत्प्रसन्नेसातित्वयि ॥ २२ ॥ चतुर्दशसुलोकेषु श्रियैयस्तेभ्यसूयति ॥ कृपाणीयंकृ
पाहीना तस्यपास्यतिशोणितं ॥ २३ ॥ कैतवेनैवकैकेयी वरावादत्तभूपतेः ॥ पश्चात्तत्संचनःपि
त्रा कोत्रधर्मव्यतिक्रमः ॥ २४ ॥ अप्रियंसर्वभूतानां कृत्वाप्रव्रजनंत्वया ॥ क्षुद्रायानैवकैकेय्याः
प्रियंनाथविधीयतां ॥ २५ ॥ ॥ ॥ ॥ ॥

॥ २६ ॥ २७ ॥ पुण्यारण्यशरण्यानां पुण्यारण्य शरणवतां निर्वृतिंप्रीतिं ॥ २८ ॥ २९ ॥ ३० ॥ शांतविभ्रमः शांतविलासः सेवोत्कंठः सेवायामुत्कंठा आकांक्षायस्यासौतथोक्तः ॥ ३१ ॥ वराश्रेष्ठा मुक्तेःमोक्षात् इतरसंपदइतिपंचमी ॥ ३२ ॥ ३३ ॥ वेद जानामिब्रह्मभवोरुद्रः ॥ ३४ ॥ भागवता-

इत्युक्तऊचेभगवान् क्वनोदुःखंक्वनोसुखं ॥ पत्तनंचवनंचांग निःसंगानांसमंमतं ॥ २६ ॥ पूर्णमस्मद्यशश्चंद्रं कलंकोनस्पृशत्यलं ॥ राघवोराज्यलोभेन तातंलंघितवानिति ॥ २७ ॥ पुण्यारण्यशरण्यानां कुर्वाणोनिर्वृतिंसतां ॥ वनेषुसंचरिष्यामि संत्यन्येचात्रहेतवः ॥ २८ ॥ मयिस्वभावभक्तस्य युक्तमुक्तंतवेदृशं ॥ भरतेनसमंमातापितृशुश्रूषणंकुरु ॥ २९ ॥ इतिविश्वेश्वरेणोक्तं श्रुत्वाविश्वेश्वरानुजः ॥ शांतकोपोययौशोकं स्वामिविश्लेषशंकया ॥ ३० ॥ बद्धांजलिर्बाष्पमुखश्चिंतयाशांतविभ्रमः ॥ सेवोत्कंठोरुद्धकंठो देवमाचष्टलक्ष्मणः ॥ ३१ ॥ नाथतेयत्रयात्रास्या त्तत्रत्वामनुयाम्यहं ॥ त्वत्सेवामेवरामुक्तेः किमुतेतरसंपदः ॥ ३२ ॥ यदियास्यसिमांत्यक्त्वा करुणाकरमानद ॥ क्षुद्रंदेहमिमंत्यक्त्वा सेवेत्वामन्यजन्मना ॥ ३३ ॥ वेदाहंपुरुषंपूर्णं प्रभुंत्वांप्रकृतेःपरं ॥ यत्सेवयाकृतार्थाःस्यु र्ब्रह्मब्रह्मभवादयः ॥ ३४ ॥ इतिभागवताग्रण्यो भगवान्शुश्रुवान्वचः ॥ सस्मितंतमवेक्ष्योचे बाढमागम्यतामिति ॥ ३५ ॥ ॥ ॥ ॥

ग्रण्यः भागवतानांमध्येप्रधानस्स ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३६ ॥ अवलिप्तस्यस्त्रीजितस्य ॥ ३७ ॥ मनुनास्वायंभुवनामकेन इयंगाथाकथा अभिषिंचस्व अभिषिक्तोभव ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

पुत्रयात्रोद्यमंज्ञात्वा कौसल्यापुनरब्रवीत् ॥ पुरातनानांवचनं मानंचेक्षुणुनंदन ॥ ३६ ॥ गुरोर-
प्यवलिप्तस्य कार्याकार्यमजानतः॥ कामकार्यप्रवृत्तस्य नकार्यंब्रुवतोवचः ॥ ३७ ॥ मानवेंद्रेण
मनुना गाथेयंनन्वगायत ॥ तस्मात्त्वमभिषिच्यस्व राजाप्यत्रानुनीयतां ॥ ३८ ॥ मातुरेतद्वचः
श्रुत्वा प्रोवाचप्रहसन्प्रभुः ॥ पितुःशांतस्यदांतस्य कार्यैवाज्ञागुरोरिति ॥ ३९ ॥ दीर्घश्वासकृ-
तायासा संततास्रुजलाकुला ॥ अनिवर्त्यंसुतंज्ञात्वा कौसल्याविललापसा ॥ ४० ॥ सपत्न्याभी
षमाणांमां व्याघ्रघ्रागामिवदुर्बलां ॥ तातसंत्यज्यमायाहि नयमामपिकाननं ॥४१॥ इत्युक्तऊचे-
भगवान् मातरेवंतुमावद ॥ पतिशुश्रूषणात्स्त्रीणां परमात्माप्रसीदति ॥ ४२ ॥ भरतंमामिवेक्ष-
स्व सचत्वांमद्वदर्चयेत् ॥ सत्यमानंदयिष्यामि वत्सरेत्वांचतुर्दशे ॥ ४३ ॥ काकुत्स्थेकथयत्येवं
सादेवीदेवतोपमा ॥ नियम्यनीत्यातंशोकं तस्यस्वस्त्ययनंव्यधात् ॥ ४४ ॥ रक्षोघ्नान्सर्षपान्
जप्त्वा बबंधतनुमध्यमा ॥ चक्रांकेचक्रिणःपाणौ चक्रीत्वांपालयेदिति ॥ ४५ ॥ सर्वदास्वस्तये
संतु सर्वभूतानिताततें ॥ सर्वभूतांतरात्माच केशवःस्वस्तयेस्तुते ॥ ४६ ॥ विनतेवात्मतनय
मुपेंद्रमिववादितिः ॥ विष्णुप्रसादाद्द्रक्ष्यामि त्वांविक्रांतमुपागतं ॥ ४७ ॥ ॥ ॥

॥ ४३ ॥ नियम्यप्रशांतंकृत्वा ॥ ४४ ॥ ४५ ॥ ४६ ॥ स्वतनयंगरुडं विक्रांतं पराक्रमिणं ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४८ ॥ ४९ ॥ अतनुराजमार्गेण महाराजमार्गेण वियतिआकाशे दृष्टिर्दर्शनं ॥ ५० ॥ ॥ इत्ययोध्याकांड टीकायां पंचमःसर्गः ॥ ५ ॥ ॥
श्री ॥ देवींसीतां चिकीर्षितं कर्तुंनिरूपितं ॥ १ ॥ २ ॥ समुद्रे संवादयुक्तंकृतवान् तत्रसंवादं चक्रइत्यर्थः ॥ ३ ॥ ४ ॥ प्रव्हं अवनतं ध्यायंतं आलोचयं

पुरुषोत्तमभक्त्यामे पुनरेहिभलक्ष्मणः ॥ इत्युक्त्वामूर्ध्न्युपाघ्राय परिरेभेसुतंसती ॥ ४८ ॥ प्रसाद्यमा
तरंदेवः परिक्रम्यप्रणम्यच ॥ निर्जगामगृहात्तस्मा ल्लक्ष्मीवांल्लक्ष्मणान्वितः ॥ ४९ ॥ रराजरामो-
तनुराजमार्गे सश्यामधामावियतीवमेघः ॥ स्वदृष्टिवृष्ट्यापरितापहारी मुहूर्तमार्तिंशमयन्प्रजा-
नां ॥ ५० ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे पंचमःसर्गः ॥ ५ ॥ श्री ॥ महोत्सवोत्सुकजनं
प्रविश्यस्वपुरंप्रभुः ॥ अंतःपुरगतांदेवी मूचेकिंतेचिकीर्षितं ॥ १ ॥ त्वयासहवनंयामि देवेत्यूचे
थजानकी ॥ पुरएवोष्यतांतन्वि त्वयेत्यूचेजगत्पतिः ॥ २ ॥ समुद्रेसहतद्यात्रां कृच्छ्रेणकिलकेशवः ॥
सदाप्येकधियोरेत देवदेव्योर्विडंबनं ॥ ३ ॥ वनवासविवादंतं राजराज्ञ्योःप्रशुश्रुवान् ॥ अंतःपुर
जनःसर्वो रुरोदविवशोभृशं ॥ ४ ॥ लक्ष्मणंबाष्पपूर्णाक्षं पार्श्वेप्रव्हमुपस्थितं ॥ ध्यायंतमथकर्तव्यं
भगवांस्तमभाषत ॥ ५ ॥ कैकेय्यानियतोराजा मातरौनौनमानयेत् ॥ भरतश्चामदांधश्च तस्मा
दत्रोष्यतांत्वया ॥ ६ ॥ मज्जनान्पाहिशुश्रूषा मच्छुश्रूषैवनान्यथा ॥ किंचक्लेशसहंप्रेष्टं त्वांवनंन
नयाम्यहं ॥ ७ ॥ एवंब्रुवाणेदेवेस्मिं स्तूर्णंपादाभिवंदनं ॥ कृत्वार्यस्यतथार्याय रुदन्नाचष्टलक्ष्मणः ॥ ८ ॥

तं ॥ ५ ॥ नियतः नियमितः बद्धइतियावत् नौआवयोः ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

निसृष्टंप्रदत्तं उपजीवनं उपजीवनकरं ॥ ९ ॥ मातुःस्वमातुःकैकेय्या अप्यधिकंयथाभवतितथा ॥ १० ॥ शिष्यंअनुशिक्षणीयं प्रेष्यंप्रेषयितुंयोग्यं ॥ ११ ॥



कौसल्यानैवशोच्यासा त्वद्वियोगंसहेतचेत् ॥ यस्याग्रामसहस्रंहि निसृष्टमुपजीवनं ॥ ९ ॥ कौस
ल्यांचसुमित्रांच भरतस्त्वयिगौरवात् ॥ पूजयेदधिकंमातुः कृत्यंनास्त्यत्रमेततः ॥ १० ॥ प्रेष्टो-
हंचेत्तवस्वामिन् कथंमांननयस्यहो ॥ त्वच्छुश्रूषोचितंसाक्षा त्प्रेष्यशिष्यंतवानुजं ॥ ११ ॥ देव-
त्वंसहवैदेह्या वनेस्वैरंहिरंस्यसे ॥ सकलःसफलःकालो युवयोःसेवनेस्तुमे ॥ १२ ॥ एवमुक्तवत
स्तस्य भक्तिंतांभक्तवत्सलः ॥ विज्ञायप्रत्युवाचेदं लक्ष्मणंलक्ष्मणाग्रजः ॥ १३ ॥ वत्सैवंस्या-
त्प्रसन्नोस्मि त्वमापृच्छसुहृज्जनं ॥ येराज्ञेवरुणप्रत्ते धनुषीतेसमानय ॥ १४ ॥ अभेद्यंकवचंहृद्यं
अक्षयेषूतथेषुधी ॥ खड्गौचानयविन्यस्तं सर्वमाचार्यसद्मनि ॥ १५ ॥ इत्युक्तमात्रःसौमित्रिः
स्वमापृच्छत्सुहृज्जनं ॥ आचार्यसमनोहेती हैमदीप्ताःसमानयत् ॥ १६ ॥ पुनश्चदेवस्यादेशा
त्सदानायसमानयत् ॥ सुयज्ञंचवसिष्टस्य सूनुमन्यान्द्विजानपि ॥ १७ ॥ कोटीरकांचीकटक के
यूरादिविभूषणं ॥ अनर्घ्यंराघवःप्रादा त्सुयज्ञायमणीनपि ॥ १८ ॥ भूषणानिपरार्घ्याणि वासां
सिविविधानिच ॥ सुयज्ञपत्न्यैप्रददौ रामपत्नीमुदान्विता ॥ १९ ॥ मातुलेनात्मनेदत्तं नागंशत्रु
जयंप्रभुः ॥ हेमभूषंददौतस्मै सहस्रेणगवांसह ॥ २० ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ २२ ॥ २३ ॥ गुरुंवसिष्ठं ॥ २४ ॥ श्मश्रुवर्धकान् क्षौरकर्तॄन् ॥ २५ ॥ २६ ॥ आस्माकः अस्मत्संबंधी विश्राणय विभागेनदेहि विशेषज्ञ तत्त द्विशेषज्ञ ॥ २७ ॥ व्यंगादिभ्यः हस्तपादाद्यवयवराहितेभ्यः ॥ २८ ॥ दंडावलंबनः यष्ट्याधारः ॥ २९ ॥ गार्ग्यः गार्ग्यकुलजातः बव्हपत्या बहुसंतानवती ॥ ३० ॥

ब्राह्मणेभ्यस्तथान्येभ्यः सर्वेभ्योर्थिभ्यएवच ॥ यथेष्टंप्रददौवित्तं प्रीतास्तेनाशिषोवदन् ॥ २१ ॥
ततःसौमित्रिमाहूय भगवानिदमब्रवीत् ॥ धनराशिमिमंपश्य लक्ष्मणोत्तमलक्षण ॥ २२ ॥ द्विजार्थे
भ्यस्तथान्येभ्यो सुहृद्भ्यश्चप्रदीयतां ॥ योयोजनोधुनावित्तं यद्यदिछतितद्दिश ॥२३॥ अगस्त्यंकौ-
शिकमुनिं गार्ग्यंशांडिल्यमप्यथ ॥ तैतिर्यंचगुरुंचाशु तर्पयेतैर्महाधनैः ॥२४॥ सूतंचमेचित्ररथं बं-
दिहासकमल्लकान् ॥ तर्पयान्यांश्चशिल्पाद्यान् याजकान्श्मश्रुवर्धकान् ॥२५॥ कौसल्यायाःसुमित्रा
याः प्रेष्यान्भिक्षूंश्चतद्गृहे ॥ द्वाभ्यांद्वाभ्यांसहस्राभ्यां निष्काणांप्रतितर्पय ॥ २६ ॥ मयिनाथेवनंयाते
नास्माकःकोपिसीदतु ॥ विश्राणयविशेषज्ञ निःशेषंमेततोधनं ॥२७॥ इत्यार्यस्यवचःश्रुत्वा तथाच-
क्रेसलक्ष्मणः ॥ पुनश्चधनशेषंस्वं व्यंगादिभ्योददौप्रभुः ॥२८॥ अथकश्चिद्द्विजोवृद्धो मलिनोमलि
नांबरः ॥ त्रिजटोनामदुद्राव रामंदंडावलंबनः ॥२९॥ सगार्ग्योदेवमाचष्ट राममेतरुणीप्रिया ॥ बव्ह
पत्याहिदारिद्र्यात् खिन्नामेदीयतांधनं ॥ ३० ॥ इत्युक्तऊचेभगवा न्हास्यंलोकेहसत्यमुं ॥ इतोदंडंक्षि-
पसिचे द्रोषुदास्यामिताङ्इति ॥ ३१ ॥ सशाणींमलिनांकक्ष्यां वृद्धःसंवेष्ट्यसंभ्रमी ॥ आविध्यदं
डंचिक्षेप सर्वप्राणेनवेपितः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ताः तत्रस्थितागाः ॥ ३१ ॥ शाणींशाणतंतुनिर्मितां कक्ष्यामध्यबंधानुकूलां संवेष्ट्यवेष्टयित्वा अविध्यभ्रामयित्वा सर्वप्राणेन सर्वशक्त्या वेपितःकंपितः ३२

॥ ३३ ॥ ३४ ॥ ३५ ॥ शोकशंकुक्षतांतराः शोकाख्यस्थाणुपरिक्षतचित्ताः ॥ ३६ ॥ ३७ ॥ सत्वैःप्राणिभिः ॥ ३८ ॥ असंगतांनिःसंगत्वं ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ दारार्धसप्तशतकं पंचाशदधिकत्रिशतपरिमितमित्यर्थः ॥ ४२ ॥ शोकवनवन्हिजवेन शोकाख्यदावाग्निवेगेन सप्तधातवः त्वक्चर्मरुधिर

सदंडःसरयूंतीर्त्वा गोसहस्रेसमापतत् ॥ प्रशस्याश्लिष्यतंविप्रं गोसहस्रंददौप्रभुः ॥ ३३ ॥ इय
क्षवेपुनस्तस्मै कामंवित्तंप्रदत्तवान् ॥ ब्राह्मण्यत्वेवदान्यत्वे प्रशशंसुःप्रजाःप्रभोः ॥ ३४ ॥ इत्थंवि-
भज्यविप्रेभ्यो विश्वेशोवित्तमुत्तमं ॥ सानुजःसहजानक्या जनकंद्रष्टुमेयिवान् ॥ ३५ ॥ वाचमूचुर्ब
हुविधाः शोकशंकुक्षतांतराः ॥ तत्रजानपदाःपौरा नरनार्योनिरीक्ष्यतान् ॥ ३६ ॥ यांतमन्वेतिचचमू
श्चतुरंचतुरंगिणी ॥ तमिमंसीतयासाक मनुगच्छतिलक्ष्मणः ॥ ३७ ॥ यानशक्यापुराद्रष्टुं सत्वैरा-
काशगैरपि ॥ तामिमांराजमार्गेस्मि न्वीक्ष्यंतेजानकींजनाः ॥ ३८ ॥ मुंचतीमांश्रियंप्राप्ता मीश्वरो
प्यखिलेश्वरः ॥ कैकेय्यावाक्यमात्रेण पश्यतासंगतांप्रभोः ॥ ३९ ॥ यदिरामोवनंयाति यामःसर्वेवयं
सह ॥ नैनंविनाहिजीवामो जलंजलचराइव ॥ ४० ॥ आर्तवादमनार्तस्तं शुश्रुवान्भगवानिति ॥
प्रहसन्प्राविशद्गेहे पितुर्नानाविलापिनः ॥ ४१ ॥ विज्ञायराममायांतं सुमंत्रवचनान्नृपः ॥ दारार्धस
प्तशतकं रामंद्रष्टुमुपाव्हयत् ॥ ४२ ॥ व्याप्तेनशोकवनवन्हिजवेनराज्ञः तातप्यमानसकलेंद्रियसप्तधा
तोः ॥ रामाननेंदुहसितामृतपूरवर्षः सर्वाभितापशमनःसकृदाविरासीत् ॥ ४३ ॥ इति श्रीसंग्रह
रामायणे अयोध्याकांडे रामांके षष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

धातवःसप्तमेदोयज्जास्थिनायकाः सप्तधातवः सकृत्तदानीमेकवारं ॥ ४३ ॥ ॥ इत्ययोध्याकांड टीकायां षष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥

श्री ॥ सिंहासनादुत्पपात राजाराममवेक्ष्यतं ॥ एह्येहिरामवत्सेति शोकात्कंठपरिप्लुतः ॥ १ ॥
परिरंभपरोराजा पतन्नप्राप्यराघवं ॥ मामेतिलोकनाथेन सहसासमगृह्यत ॥ २ ॥ परिरभ्यसुतं
भूपः पर्यंकेसन्निवेश्यसः ॥ सीतांसौमित्रिमप्यारा द्विक्षुर्मूर्छितोपतत् ॥ ३ ॥ स्त्रीसहस्रस्यरावो
भू त्करुणोराजसंसदि ॥ राज्ञिमूर्छामुपायाते रामविश्लेषशंकया ॥ ४ ॥ मुहूर्तात्प्राप्तसंज्ञंतं प्रो-
वाचपितरंप्रभुः ॥ तातमामनुजानीहि वनवासाभिकांक्षिणं ॥ ५ ॥ सीतेयंलक्ष्मणश्चायं वारितौ
हेतुभिर्मया ॥ अप्यन्वागछतस्ताभ्यां ततोनुज्ञाप्रदीयतां ॥ ६ ॥ इत्युक्तऊचेराजेंद्रः कितवा
यैवरावदां ॥ ततोमांशिक्षयित्वाते धर्मोराज्यस्यपालनं ॥ ७ ॥ बतयास्यसितातत्व मथवासर्व
थावनं ॥ नयमांनरवैडूर्य नजीवामित्वयाविना ॥ ८ ॥ इत्युक्तऊचेरामस्तं मैवंवक्तुंत्वमर्हसि ॥
त्वमेवराजाभरतो युवराजोमदाज्ञया ॥ ९ ॥ स्वर्गेवानरकेवापि वनेवापत्तनेपिवा ॥ सुखमेवन-
मेदुःखं तस्मात्वंनिर्वृतोभव ॥ १० ॥ राजारामस्यनिर्बंधं ज्ञात्वामंत्रिणमब्रवीत् ॥ सकोशरत्नं-
स्त्रीरत्नं बलंराममनुव्रजेत् ॥ ११ ॥ कामंवनेवसेद्रामो ममसर्वविभूतिभिः ॥ निर्धनायामयो-
ध्यायां कैकेयीतनयोवसेत् ॥ १२ ॥ वयोज्येष्ठोगुणज्येष्ठः श्रेष्ठोयंसर्वदेहिनां ॥ कथंरामोभवेछो
च्यः कैकेयीकैतवादितः ॥ १३ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥ महामात्रः गजपालकः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ तृणं प्रार्थये खननार्थमनुरूलोयोदंडः मचखनित्रमित्युच्यते फ-
लादिसंग्रहानुकूलंपात्रंपिटकमित्युच्यते पात्रस्थापनानुकूलं पाशकृतंसिक्यं ॥ २० ॥ परिधत्स्व परिधानंकुरु ॥ २१ ॥ २२ ॥ २३ ॥ ग्रीवायांकंठे कं



इत्याकर्ण्यगिरंपत्युः क्रुधाकैकेय्यभाषत ॥ असमंजसवद्रामो ज्येष्ठोपित्यजतामिति ॥ १४ ॥
धिग्धिक्पापीयसीमित्थ मुक्काराजन्यवाङ्मुखे ॥ सिद्धार्थनामाप्रोवाच महामात्रोनृपप्रियः ॥१५॥
सरव्यांप्राक्षिपद्बाला नितित्यक्तोसमंजसः ॥ सगरेणपुराराज्ञि द्रक्ष्याम्यस्यनदूषणं ॥ १६ ॥
निर्दोषंब्रुवतोनाथं त्रिलोकोयंगुणार्णवं ॥ विनीतंतंप्रियंरामं कथंराजापरित्यजेत् ॥ १७ ॥ महा
मात्रेवदत्येवं कैकेयींक्रूरवादिनीं ॥ शपमानेचराजेंद्रे राघवःपुनरब्रवीत् ॥ १८ ॥ राजन्राजवि-
भूत्याकिं राज्यंत्यक्तवतोमम ॥ गजंत्यक्तवतःपुंसः किंफलंगजकक्षया ॥ १९ ॥ सर्वदास्यामिकै-
केय्यै चीराण्येवव्रणेस्वयं ॥ खनित्रपिठकंचोभे सद्दिक्येनरनायक ॥ २० ॥ भगवत्युक्तवत्येवं
निर्लज्जाकेकयात्मजा ॥ चीराणिपरिधत्स्वेति ददौरामायसंसदि ॥ २१ ॥ अविचार्यचतेचीरे गृ-
हीत्वापर्यधात्प्रभुः ॥ विहायवाससीसूक्ष्मे प्रसन्नाननचंद्रमाः ॥ २२ ॥ स्वनाथंजगतांनाथं दृष्ट्वा
तंचीरधारिणं ॥ चीरेप्रदत्तेकैकेय्या पर्यधादाशुलक्ष्मणः ॥ २३ ॥ चीरेप्रदत्तेकैकेय्या मुग्धेवा-
दायमैथिली ॥ ग्रीवायामेकमाबध्य रामंप्रेक्ष्येदमब्रवीत् ॥ २४ ॥ ॥ ॥ ॥



ठंगलोथग्रीवायामित्यमरः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

|| २५ || २६ || चंदनागेचंदनवृक्षे || २७ || २८ || २९ || ३० || ३१ || ३२ || ३३ || ६४ || ३५ || एष्यंतंगमिष्यंतं || ३६ || ३७ || ||

मुनिवध्वोनिबध्नंति कथंचीरमिदंप्रभो ॥ इत्युक्ताचीरवस्त्रासा तस्थौलज्जावतीसती ॥ २५ ॥
सत्वरंसत्वधोपेत्य कुशचीरंगृहीतवान् ॥ कौशेयोपरिसीतायाः रामस्तत्पर्यधापयत् ॥ २६ ॥
देवींचीरधरांदृष्ट्वा वीरनाथामनाथवत् ॥ वसिष्ठेमन्युरुदभूत् चंदनागेइवानलः ॥ २७ ॥ मामे-
तिसीतांसंवार्य कैकेयीमब्रवीन्मुनिः ॥ अतिप्रवर्तसेपापे कैकेयीकुलदूषणि ॥ २८ ॥ त्वद्वरेणा-
पिदुर्वृत्ते नगंतव्यंहिसीतया ॥ सीतारामशरीरार्धा मेदिनींपालयेत्पुरे ॥ २९ ॥ सदारोयाति-
चेद्रामो यामःसर्वेवयंध्रुवं ॥ भरतःसानुजोरामं चीरधार्यनुयास्यति ॥ ३० ॥ शून्यामयोध्याम
ध्यास्व त्वंकालीवकलिप्रिये ॥ वदत्येवंवसिष्ठेस्वं धिक्कुर्वाणेजनेनृपः ॥ ३१ ॥ धर्माशांजीविता-
शांच चिछेदविरहेप्रभोः ॥ रामस्यैकस्यपापिष्ठे वनवासोवरस्तव ॥ ३२ ॥ सीतालक्ष्मणयोः
कस्माच्चीरमित्यवदन्नृपः ॥ सर्वमाकुलमालोच्य रामोराजानमब्रवीत् ॥ ३३ ॥ मत्स्नेहादपि
पाहीमां जननींजनकाधुना ॥ यत्कृपालुतयाकृष्टं निःसंगमपिमेमनः ॥ ३४ ॥ तस्यांमातरिमे
तात कृपणायांकृपांकुरु ॥ निशम्यैवंनिगदितं राजारामस्यगछतः ॥ ३५ ॥ मुक्तकंठोरुरोदो-
च्चैः प्रियैर्भार्याशतैःसह ॥ चिरंविलप्यराजेंद्रः कैकेयींगर्हयन्पुनः ॥ ३६ ॥ रामंपदातिमेष्यंतं
ज्ञात्वासूतमभाषत ॥ सुमंत्रममयानेन नंदनमेवनंनय ॥ ३७ ॥ ॥ ॥ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ मावमंस्थाः अवज्ञातंमाकुरु ॥ ४२ ॥ ४३ ॥ मेपरिभावीममपरिभववान् मांजयन्नित्यर्थः । परिभावीप्रतिभटइतिवा ॥

मात्रापित्राचनिर्यास्यः पुत्रोनन्वेवमीदृशः ॥ इतिराज्ञासमादिष्टः सारथीरथमानयत् ॥ ३८ ॥
सीतांदृष्ट्वारुदन्भूपः कोशाध्यक्षमभाषत ॥ वरीयांसिचवासांसि पराध्याभरणानिच ॥ ३९ ॥
समादायप्रदेह्याशु स्नुषायैमेयथेप्सितं ॥ इतिराजनियुक्तेन राजामात्येनतत्क्षणात् ॥ ४० ॥
दत्तैराकल्यवासोभि र्विरेजेवीरवल्लभा ॥ स्नुषामुवाचकौसल्या लालयंतीसुतामिव ॥ ४१ ॥ मा-
वमंस्थामुनिंरामं वत्सीसाध्वीभवेरिति ॥ कांतेत्रैलोक्यकांतेते स्थिराभक्तिर्गुणार्णवे ॥ ४२ ॥ आ-
र्येनप्राकृतास्त्रीस्या मितिसीताभ्यभाषत ॥ सीतामाश्लिष्यबाष्पाक्षी कौसल्यारामब्रवीत् ॥
॥ ४३ ॥ पुत्रसीतांचसौमित्रिं स्वंचपाहिवनेष्विति ॥ परिभावीनमेमात त्रैलोक्येससुरासुरे ॥
॥ ४४ ॥ शीघ्रमेष्यामिचैताभ्यां प्रसीदेत्यब्रवीत्प्रभुः ॥ रामोर्धसप्तशतकं मातृणामभ्यवंदत ॥
॥ ४५ ॥ संवादःक्षम्यतांमातः साध्वनुज्ञाप्यतामिति ॥ क्रौंचीनामिवदेवीनां करुणेक्रंदितेसति ॥
॥ ४६ ॥ रामलक्ष्मणजानक्यो राजानंचाभ्यवादयन् ॥ परिक्रम्यमहीपालं धर्मशिक्षणलक्षणाः ४७
कौसल्यांचसुमित्रांच क्रमेणैवाभ्यवादयन् ॥ सुमित्रोचेप्ररुदिता वंदमानंस्वनंदनं ॥ ४८ ॥ पुत्र-
सत्पुत्रवत्यस्मि त्वयापुत्रेणसाधुना ॥ तरुणींरमणींत्यक्ता मांचयास्यसिराघवं ॥ ४९ ॥ ॥

॥ ४४ ॥ अर्धसप्तशतकार्धसपंचाशत्त्रिशतमित्यर्थः ॥ ४५ ॥ क्रौंचीनांक्रौंचपक्षिस्त्रीणां करुणेदाक्षिण्यकरे ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥

॥ ५० ॥ ५१ ॥ ईंगितज्ञःअभिप्रायज्ञः ॥ करेणुंकरिणीं ॥ ५२ ॥ तदारामःसुमनसां देवानां सुमनोरथं शोभनाभिप्रायनामकंरथं दशरथस्यरथंचातं युगमपिद्वयमपि युगपदेवएकवारमेव अध्यास्तआरुरोहेत्यन्वयः । कीदृशंरुच्यातेजसाततंव्याप्तं दशमुखाक्रमणे दशमुखस्यरावणस्य आक्रमणेतिरस्कारे प्रसिद्धं अन्यत्रदशदिङ्मुखपरिवर्तने प्रसिद्धमित्यर्थः । अत्यायतं अतिविशालं उभयमपितादृशमेव यदारामस्तं रथमारुरोह तदादेवाःप्रसन्नमनोरथा

तातरामःससीतस्ते जगन्नाथःपरागतिः ॥ एतावदुक्त्वासौमित्रिं सुमित्राराममब्रवीत् ॥ ५० ॥ तातानुजस्तवप्रेष्यो लक्ष्मणःपाल्यतामिति ॥ एवमेवेतिदेवेशे ब्रुवाणेभास्वररंथं ॥ ५१ ॥ इंगितज्ञउपानिन्ये सुमंत्रोदेशकालवित् ॥ सानुजोरथमारुह्य सीतामारोपयत्प्रभुः ॥ करंकरेणसंगृह्य करेणुंकरिराडिव ॥ ५२ ॥ अध्यास्ततद्युगपदेव युगंचयोग्यंरुच्याततं दशमुखाक्रमणेप्रसिद्धं ॥ अत्यायतंसुमनसां सुमनोरथंचदिव्यं तदादशरथस्यरथंसरामः ॥ ५३ ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके सप्तमःसर्गः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

श्री ॥ चोदितोऽचोदयद्भूम्ना तंरथंसारथिर्यदा ॥ सबालवृद्धवनिताः प्रजास्तमनुदुद्रुवुः ॥ १ ॥ तृषार्ताइवतोयौघं भवार्ताइवमाधवं ॥ भयार्ताइवपातारं शोकार्तारामम्नवगुः ॥ २ ॥ सारथेस्थीयतांकिंचि च्छनैर्वानीयतांरथं ॥ रामाननेंदुंपश्यामो द्रक्ष्यामोतंकदापुनः ॥ ३ ॥ धन्यासिदेविसीतेत्वं धन्योसित्वंचलक्ष्मण ॥ श्रेयःस्वर्गापवर्गाभ्यां यद्वास्याद्रामदर्शनं ॥ ४ ॥ जनेषुप्ररुदत्स्वेवं राजास्त्रीभिःसमावृतः ॥ रामंपुनर्दिदृक्षेह मित्युक्त्वापुनराद्रवत् ॥ ५ ॥ ॥ ॥ ॥

भवन्नित्यर्थः ॥ ५३ ॥ ॥ इत्ययोध्याकांडे टीकायां सप्तमःसर्गः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ श्री ॥ भूम्नारामेण ॥ १ ॥ भवार्ताःसंसारार्ताः ॥ २ ॥ ३ ॥ वांयुवयोः ॥ ४ ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दशाअवस्था ॥ ६ ॥ ७ ॥ राघवःरामः अभितःपरितः विक्लवःपरवशः ॥ ८ ॥ नाश्रौषंशुश्रुतवान्नाभूवंसंगमे पुनरागत्यसंगसमये ॥ ९ ॥ १० ॥ ११ ॥



धावतोःस्खलतोर्भूयो बाष्पैरंधीकृताक्षयोः ॥ मातापित्रोःप्रवयसो र्देशाकंनकृपांनयेत् ॥ ६ ॥ हा रामरामवत्सेति हासीतेलक्ष्मणेतिच ॥ मातापित्रोःसमाक्रंदस्त्रौलोक्यकरुणोभवत् ॥ ७ ॥ तिष्ठ तिष्ठेतिराजेंद्रो याहियाहीतिराघवः ॥ सुमित्रमभितोब्रूतां सुमंत्रोविक्लवोभवत् ॥ ८ ॥ नाश्रौष-मितिराजेंद्रं सुमंत्रब्रूहिसंगमे ॥ इतिरामोदितःसूतो रथंनिन्येकृतांजलिः ॥ ९ ॥ यंपुनर्दृष्टुमन्विच्छे न्नतंदूरमनुव्रजेत् ॥ नृपएवंवसिष्ठाद्यै र्वारितोऽध्वन्युपाविशत् ॥ १० ॥ प्राणिदेहादिवप्राणे सेतुबंधादिवांभसि ॥ रामेनिर्गछतिपुरा त्सर्वमासीदमंगलं ॥ ११ ॥ स्थावराणांतिरश्चांच शो-कवान्हिमदीपयत् ॥ रामदेवस्यविरहो मानवानांतुकिंपुनः ॥ १२ ॥ शोचतःपततोराज्ञो मामेति सहसासती ॥ कौसल्यादक्षिणंबाहुं कैकेयीवाममग्रहीत् ॥ १३ ॥ कैकेयीमवलोक्याथ क्रुधोदश रथोब्रवीत् ॥ कर्मणाचंडिचंडेन चंडालित्वंनमांस्पृश ॥ १४ ॥ त्वयाछलादवछिन्नं राज्यंचेद्भरतो भजेत् ॥ नतेनदत्तमुदकं प्रेतस्यापिप्रियंमम ॥ १५ ॥ तस्यैवंब्रुवतोराज्ञो राममेवान्वगछतां ॥ स्वभावायतनेत्रस्य नेत्रेअत्यायतेतदा ॥ १६ ॥ चक्षुराद्यैरुपरतं रामेत्वविषयेसति ॥ रतमास्मि-न्मनोदृग्भ्यां भूपतेर्योगिनोयथा ॥ १७ ॥ ॥ ॥ ॥



तिरश्चांतिर्यक्प्राणिनां ॥ १२ ॥ १३ ॥ हेचंडिक्रूरेचंडेनकर्मणाचंडालि ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ललनाः स्त्रियः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ हेजात्यावाजिनः हेजात्याश्वाः ॥ २७ ॥ २८ ॥ २९ ॥ हं-

राममातुर्नयतुमां कौसल्यायानिवेशनं ॥ रामपादारविंदांके भूतलेस्वास्तिमेभवेत् ॥ १८ ॥ एवंनि-
गद्यसुचिरं विलप्यचमहीपतिः ॥ कौसल्यालयमापेदे दिवाकरइवांबुधिं ॥ १९ ॥ राजाराममिहा-
पश्यं श्रुक्रोशोद्बाहुरुच्चकैः ॥ हारामक्कासिसीतेत्वं लक्ष्मणेतिपुनःपुनः ॥ २० ॥ शयानःशयनेतत्र
मग्नःशोकमहार्णवे ॥ रामलीलांस्मरन्नेव सकलंकालमत्यगात् ॥ २१ ॥ अनुयातुमशक्यत्वा ल्लल-
नाःसहबालकैः ॥ स्मरंत्योराममुद्बाष्पा न्यवर्ततगृहान्प्रति ॥ २२ ॥ हानाथक्कप्रयासित्वं सीतयेत्यु
रुरोदनाः ॥ अन्वधावन्समंपौरैः सर्वाःप्रकृतयःप्रभुं ॥ २३ ॥ आधावतोरुद्धकंठान् प्रांजलीनश्रु
लोचनान् ॥ जनांस्तान्मेघगंभीरं प्रोवाचकरुणाकरः ॥ २४ ॥ निवर्तध्वंचवर्तध्वं भरतस्यानुशास
ने॥ समेभक्तोनुजोराजा तन्मेशुश्रूषणंप्रजाः॥ २५॥ इत्युक्ताअपितेसर्वे तमेवान्वद्रवन्द्रुतं॥ विप्रा
मार्गालसाःप्रोचु स्त्रयीवेदांतपारगाः॥२६॥ हेजात्यावाजिनोस्माकं स्वामीनानीयतांवनं॥ पुरमानी
यतामेनं व्रजंतिशरणंप्रजाः॥२७॥ पदातीनांद्विजातीना मितिश्रुत्वार्तभाषितं॥ अवतीर्यरथाद्रामो
ययौमंदंदयानिधिः॥२८॥ विप्राःप्रांजलयःप्रोचू रामंराजीवलोचनं॥ निवर्तस्वपुरंवत्स पालयास्मा
न्कृपालय ॥ २९ ॥ पश्येमान्प्रणतान्भूमौ हंसशुक्लशिरोरुहान् ॥ मुनीन्भागवतश्रेष्ठान् वाज
पेयादियाजिनः ॥ ३० ॥ ॥ ॥ ॥ ॥

सशुक्लशिरोरुहान् पलितान् वृत्थानित्यर्थः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३१ ॥ स्तंबपदेनगुल्ममुच्यते पादपाः जात्यापादपाःवृक्षाः ॥ ३२ ॥ तिर्यंचःतिर्यक्प्राणिनः ॥ ३३ ॥ ३४ ॥ सरस्वतींवाचं गीर्वाग्वाणीसरस्वतीत्य
मरः । सरस्वतीनदींयास्माभिरयोध्यागमनसमयेदृष्टा ॥ ३५ ॥ ३६ ॥ यवसंतृणाद्याहारं ॥ ३७ ॥ अध्यासयामास आस्थितोभवत् पादावनेजनंपादप्रक्षाल-

पश्याग्नीननुयातान्स्वान् वेदांश्चांगानिचाधुना ॥ पश्येदंब्राह्मणकुलं पर्याकुलमनाकुलं ॥ ३१ ॥ नानास्तंबलतोपेता रुध्यपादाहिपादपाः ॥ अनुयातुमशक्तास्त्वा मनुशोचंतिशोभन ॥ ३२ ॥ तिर्यंचःकीटपर्यंता हंतेमेमृगपक्षिणः ॥ भक्तवत्सलदृश्यंतां खिन्नाभक्ताश्चराचाः ॥ ३३ ॥ एकछत्रोचितोलोके त्वमछत्रोहिगछसि ॥ हंतत्वांवाजपेयोत्थैः श्वेतछत्रैरुपास्महे ॥ ३४ ॥ प्रययौभगवांस्तूष्णीं शृण्वंस्तेषांसरस्वतीं ॥ संध्यायांप्राप्तवांनाम्ना तमसांचसरस्वतीं ॥ ३५ ॥ फलमूलोदकैर्वृत्ति रघ्यप्राप्तागृहंस्मरंन् ॥ नोत्कंठांकुरुताततेति रामःसौमित्रिमब्रवीन् ॥ ३६ ॥ रामाज्ञया सुमंत्रोश्वान् विमुच्ययवसंददौ ॥ ससौमित्रिःशिवांशय्यां चक्रेचमृदुलैर्दलैः ॥ ३७ ॥ अनंतशय्यस्तांशय्या मध्यासामाससीतया ॥ सौमित्रिस्तुतयोस्तूर्णं चक्रेपादावनेजनं ॥ ३८ ॥ सतस्मिंस्तमसातीरे विमलगोकुलाकुले ॥ संध्यामुपास्याशिश्येत्र पर्यंकेसतियासमं ॥ ३९ ॥ सौमित्रिश्च सुमंत्रश्च देवदेव्योरदूरतः ॥ मनोरमानूरामगुणान् वर्णयंतौस्मातिष्ठतः ॥ ४० ॥ रामोर्धरात्रउत्थाय सौमित्रिमिदमब्रवीत् ॥ पश्यपौरानिमान्सुप्तान् वनेषुभवनेष्विव ॥ ४१ ॥

नं ॥ ३८ ॥ ३९ ॥ ४० ॥ भवनेष्विवगृहेष्विव ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ उदीचींउत्तरांदिशं ॥ ४४ ॥४५॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ भुजंगाभंसर्पसमं ॥५०॥ ५१ ॥५२ ॥गुहःगुहनामा ॥ ५३ ॥ ५४ ॥

पुत्रमित्रकलत्राणि क्षेत्रवित्तगृहाणिच ॥ त्यक्त्वामद्भक्तिसंपूर्णा मांयोगिनइवान्वगुः ॥ ४२ ॥
अस्मिन्यामेवयंयामो सुप्तेष्वेतेषुसत्वरं ॥ दुःसहोविरहोह्येषां किंवालक्ष्मणमन्यसे ॥ ४३ ॥
इत्युक्त्वासूतमूचेसौ पौरव्यामोहनायहि ॥ नयोदीचींरथंक्षिप्रं निवर्तस्वपुनास्त्विति ॥ ४४ ॥
सुमंत्रोथतथाकृत्वा रथंभूम्नेन्यवेदयत् ॥ आरुरोहरथंरामः ससीतालक्ष्मणस्ततः ॥ ४५ ॥
रथमारुह्यतरसा तमसामतितीर्यसः ॥ तेनैवरात्रिशेषेण दीर्घमध्वानमत्यगात् ॥ ४६ ॥
प्रभातेसतिपौरास्ते मन्वानानगरंगतं ॥ रामंलोकाभिरामंतं प्रहृष्टानगरंययुः ॥ ४७ ॥ अतिग
छन्बहुग्रामान् कौसलान्कोसलेश्वरः ॥ वेदस्मृतींनामनदीं गोमतींचात्यवर्तत ॥ ४८ ॥ दक्षि
णाभिमुखंयांतं दक्षिणंसरयूनदीं ॥ तरंतंकोसलाद्यास्तं सर्वेजानपदाययुः ॥ ४९ ॥ दीनानश्रुमु
खान्दृष्ट्वा भक्तांस्तान्विरहासहान् ॥ भूमाभुजंभुजंगाभ मुद्यम्येदमभाषत ॥ ५० ॥ वेदाहंभवतां
भक्तिं भवनंप्रातिगम्यतां ॥ इत्युक्तास्तेययुर्नत्वा वर्णयंतोगुणार्णवं ॥ ५१ ॥ द्विजसंघैःसदासे
व्यां भजतामघघातिनीं ॥ गङ्गांपवित्रपथगां गंगारामस्त्वयीमिव ॥ ५२ ॥ ससीतंसानुजामात्य
मिंगुलीवृक्षमूलगं ॥ प्रणनामप्रभुंप्राप्य निषादाधिपतिर्गुहः ॥ ५३ ॥ तवेदंसपुरंराज्यं देवदासा
वयंतव ॥ निवसात्रैवनाथेति गुहोराघवमब्रवीत् ॥ ५४ ॥ ॥ ॥ ॥ ॥

॥ ५५ ॥ पर्णपर्यंकयातयोः पर्णमयशय्यायांस्थितयोः ॥ ५६ ॥ ५७ ॥ ५८ ॥ दूयतेपरितप्यते धीर्बुद्धिः ॥ ५९ ॥ ६० ॥ व्यतीयायगता
॥ ६१ मनाक्किंचितस्पृष्टं तुल्यंसमकालं यथाभवतितथा । सूर्यपक्षेकिरणेनरश्मिनेत्यर्थः ॥ ६२ ॥ इत्ययोध्याकांड टीकायां अष्टमःसर्गः ॥ ८ ॥



वनवासेनदेवस्य भक्तःखिन्नोमुहुर्गुहः ॥ सांत्वितस्तेनयवसं रामोश्वभ्योददौतदा ॥ ५५ ॥ देवदे
व्योःससौमित्रिः पर्णपर्यंकयातयोः पादावक्षालयत्धन्यो रवावस्तमुपेयुषि ॥ ५६ ॥ संध्यायांसम
तीतायां देवदेव्योःशयानयोः ॥ तिष्ठंतंलक्ष्मणंप्रेक्ष्य गुहउचेधनुर्धरं ॥ ५७ ॥ वीरविश्रम्यतां
किंचि त्किंकरोभवतामहं ॥ आर्ययोःपालनेयुक्त इत्युक्तोलक्ष्मणोब्रवीत् ॥ ५८ ॥ वीक्ष्येमंपर्णप
र्यंकं प्रासादेऽनर्घ्यशय्ययोः ॥ आर्ययोर्दूयतेमेधी गुहाकिंगूहयामिते ॥ ५९ ॥ हारामेतिविलोटंता
वनाथौस्थविरौभुवि ॥ पितरौस्मरतोमेंग निद्राविद्राविताशुचा ॥ ६० ॥ गुहसौमित्रिसूताना
मित्थंरामप्रसंगिनां ॥ जाग्रतामेकभक्तानां साव्यतीयायशर्वरी ॥ ६१ ॥ करेणताम्रेणमनोहरेण
स्पृष्टंमनाक्सुस्मितमुल्ललास ॥ रामेणदेव्यावदनारविंदं सूर्येणसांध्यंतरुणारविंदं ॥ ६२ ॥ इति
श्रीसंग्रहरामायणे अयोध्याकांडे रामांके नारायणपंडिताचार्यकृतौ ८ सर्गः ॥ ॥ ॥
श्री ॥ रामाज्ञयाथसौमित्रिः प्लवायाचोदयद्गुहं॥ गुहश्चोपानयन्नावं स्वरित्रांकिंकरैर्दृढां ॥ १ ॥ रा-
घवोनिरघंसूतं सुमंत्रंप्रत्यमंत्रयत् ॥ याहिसौम्याधुनायोध्यां पाहितातंशुचार्दितं ॥ २ ॥ ॥



॥ श्री ॥ प्लवाय प्लवंनावमानेतुमित्यर्थः स्वरित्रांदृढारित्रोपेतां नावंप्रेरयितुमंतव्लक्षविशेषेणबद्धोदंडोरित्रमित्युच्यते अरित्रंकेनिपातनामित्यमरः ॥ १ ॥ २ ॥

नावमन्यध्वं अवज्ञातांनकुरुध्वं तनुध्वंकुरुध्वं ॥ ३ ॥ ४ ॥ ५ ॥ जह्यात्परित्यजेत् असून्प्राणान् ॥ ६ ॥ कलितांजलिःबद्धांजलिः ॥ ७ ॥ निर्वीरां पतिसुतरहितां अवीरानिष्पतिसुतेत्यमरः । रथधुरंरथव्यापारं ॥ ८ ॥ ९ ॥ त्वयियातेसति कैकेयीमांवनेरतंस्थितं प्रत्येष्यतिप्रत्ययंप्राप्स्यति विश्वासं

कैकेयींनावमन्यध्वं तनुध्वंभरतंनृपं ॥ पितुराज्ञांकुरुध्वंमे सर्वथैवाप्रियंमम॥३॥तातंसांत्वयसांत्वज्ञ ममदीनांचमातरं ॥ वसिष्ठादींश्चसर्वांस्त्वं नानुशोचंतुमामिति ॥ ४ ॥ एवमुक्तेभगवता लक्ष्मणःकुपितोब्रवीत् ॥ राजाकृतार्थःकैकेय्या रामंनानुस्मरेदिति ॥ ५ ॥ इत्युक्तोभगवानूचे सूतमेवं नृपंवद ॥ श्रुत्वाक्रोधोक्तमस्येदं पिताजह्यादसूनिति ॥ ६ ॥ याहीतिचोदयंतंतं सुमंत्रःकलितांजलिः ॥ मुक्तकंठोरुरोदोच्चै स्तंनिगृह्येदमब्रवीत् ॥ ७ ॥ हतवीरामिवचमूं निर्वीरामिवसुंदरीं ॥ त्वद्विहीनांरथधुरं कथंनेष्यामितेपुरं ॥ ८ ॥ पितरौकिंनुवक्ष्यामि पौरांश्चपरिपृछतः ॥ आर्यदेवदयालोत्वं तवसेवांप्रशाधिमे ॥ ९ ॥ इत्युक्तऊचेभगवां स्त्वयियातेवनेरतं ॥ मांप्रत्येष्यतिकैकेयी सेवेयंमेभवेदिति ॥ १० ॥ सांत्वयित्वातथासूतं रामदेवनचोदितः ॥ वटक्षीरंजटाःकर्तुं उपानिन्येगुहोबहु ॥ ११ ॥ लक्ष्मणस्यात्मनश्चापि जटाश्चक्रेजगद्गुरुः ॥ जटाभिस्तौविरेजाते नरनारायणाविव ॥ १२ ॥ गुहसूतावनुज्ञाप्य विनीतावनुनीयच ॥ विचित्रारित्रसंपन्नां नावंप्रापद्यामयः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

गमिष्यति रामोवनंप्रतिगतः संदेहोनात्रेतिविश्वासवतीत्यर्थः । इयंकैकेयीनिश्चयकरणरूपा ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ ॥ ॥

॥ १४ ॥ तारकैः दाशैः ॥ १५ ॥ हेविष्णुपदिगंगे ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ न्यग्रोधमूलंवटमूलं २० ॥ २१ ॥ २२ ॥ अत्रवटमूले मृणालादन



देवदेवाज्ञयादेवीं नावमारोप्यवीर्यवान् ॥ लक्ष्मणःस्वयमारूढः पश्चाल्लक्ष्मणपूर्वजः ॥ १४ ॥
तारकैस्तार्यमाणासा देवीदेवांतिकेस्थिता ॥ तांगंगामवलोक्याथ मंगलांगीदमब्रवीत् ॥ १५ ॥
हेविष्णुपदिधन्यात्वं ब्रह्मलोकादुपागता ॥ देववनान्निवृत्तेत्वां पूज्ययिष्यामिजान्हवि ॥ १६ ॥
इत्युक्तवत्यांवैदेह्यां पारावारंप्लवोगमत् ॥ अवरुह्यप्लवात्तस्मा द्रामोलक्ष्मणमब्रवीत् ॥ १७ ॥ अग्र
तोगच्छसौमित्रे सीतात्वामनुगच्छतु ॥ अनुयास्याम्यनायासी त्वांवैसीतांचपालयन् ॥ १८ ॥ इत्ये
वंव्रजतोःस्वैरं रामरामानुजन्मनोः ॥ सुमध्यमाययौमध्ये करेणुःकारिणोरिव ॥ १९ ॥ तेगत्वादीर्घ
मध्वानं प्राविशंनद्भुतंवनं ॥ न्यग्रोधमूलमासाद्य तत्रवासमकल्पयन् ॥ २० ॥ सीतालक्ष्मणयो
रामो दर्शयामासपद्मिनीं ॥ सुदर्शनांनामततः पद्मान्यादत्तलक्ष्मणः ॥ २१ ॥ पादपद्मोपमंपत्युः
पद्ममादायमैथिली ॥ विललासांतिकेभर्तुः सुंदरीवेंदिरास्वयं ॥ २२ ॥ तेत्रयोत्रत्रिरात्रांते मृणा
लादनतर्पिताः ॥ अवसंस्तत्रतांरात्रिं नानासंकथनैःसुखं ॥ २३ ॥ प्रभाकरेप्रभातेथ प्रतस्थुस्ते
ततोवनात् ॥ बहून्बहुविधान्देशान् पश्यंतःशीघ्रगामिनः ॥ २४ ॥ अल्पावशेषेदिवसे रामो
जायानुजान्वितः ॥ संगमंगतवान्पुण्यं गंगायमुनयोःप्रभुः ॥ २५ ॥ ॥ ॥ ॥

तर्पिताः पद्ममूलभक्षणात्संतुष्टाः मृणालंबिसमब्जादीसमरः ॥ २३ ॥ २४ ॥ गंगायमुनयोः संगमंप्रयागमित्यर्थः ॥ २६ ॥ ॥ ॥ ॥

तस्यैवरामस्यैववचनात् ॥ २६ ॥ तंरामंज्ञात्वा ॥ २७ ॥ २८ ॥ तन्वानःकुर्वाणः ॥ २९ ॥ ३० ॥ चित्रकूटंपर्वतं ॥ ३१ ॥ ३२ ॥ सप्तसप्तेःसूर्यस्य अश्वालिमिव अश्वसमूहमिववेगउपमेयं ॥ ३३ नलवेतमान् वेतसगुल्मविशेषान् संघाटंनदीतरणानुकूलं वेणुसंगवस्थविशेषं वेत्रबंधनैः वेत्रपाशीलतास्त

ऋषिर्बृहस्पतिसुतो भरद्वाजोजगत्प्रभुं ॥ तस्यैववचनाज्ज्ञात्वा पूजयामासभक्तिमान् ॥ २६ ॥
तंसजायानुजंदेव मर्घ्यमूलफलादिभिः ॥ परिपूज्यजगत्पूज्य मासीनंऋषिरब्रवीत् ॥ २७ ॥ उत्त
मश्लोकसुचिरा त्त्वांदिदृक्षामहेवयं ॥ त्वद्दर्शनांतःसंतापः संततोपिहिदेहिनां ॥ २८ ॥ इदंक्षेमकरंक्षे
त्रं क्षेत्रज्ञस्वैरमावस ॥ तन्वानोत्तममानंद मस्माकंक्षेत्रवासिनां ॥ २९ ॥ इत्युक्तोभगवानूचे प्रे
क्षकाभिजनाइह ॥ ससीतंमांसंव्रजेयु रेकांतंमावदेरिति ॥ ३० ॥ कपालशिरआदीनां सिध्दिभू
मिंतपस्विनां ॥ ततस्त्रियोजनाभ्यासे चित्रकूटंद्विजोब्रवीत् ॥ ३१ ॥ तस्यांरात्र्यांव्यतीतायां रा
मोजायानुजान्वितः ॥ अभिनंद्यमुनींद्रंच पश्चिमाभिमुखोययौ ॥ ३२ ॥ यामुनाद्रिमथप्राप्य यमु
नांप्रभुरैक्षत ॥ सप्तसप्तेरिवाश्वालिं सत्वरंश्यामलश्रियं ॥ ३३ ॥ खंडयित्वाथखड्गेन लक्ष्मणो
नलवेतसान् ॥ रामाज्ञयाव्यधात्ततुं संघाटंवेत्रबंधनैः ॥ ३४ ॥ रामोगृहीत्वावैदेहीं किंचिल्लज्जा
स्मिताननां ॥ आरोपयत्तंसंघाटं भूषणान्यायुधानिच ॥ ३५ ॥ राघवौयस्तुर्वीरौ संघाटंपरिगृह्य
तं ॥ कालिंद्यादक्षिणंतीरं दक्षिणौरामलक्ष्मणौ ॥ ३६ ॥ ॥ ॥ ॥ ॥

त्रतत्रयस्त्रेत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बहुपुष्करे बहुपद्मयुक्ते श्यामंश्यामनामर्कं ॥ ३७ ॥ ३८ ॥ गव्यूतिमात्रं क्रोशद्वयमात्रं गव्यूतिस्त्रीक्रोशयुगमित्यमरः ॥ ३९ ॥ शंकराभ्यांसुखकराभ्यां ॥ ४० ॥ अमन्वत निरूपितवंतः ॥ ४१ ॥ सार्वकामिकंसर्वकामितार्थप्रदं ऐक्षतदर्शयामास ॥ ४२ ॥ ४३ ॥ कृत्वाखात्वाखननंकृत्वेत्यर्थः ॥ मार्तिकैः

यमुनावनमभ्येत्य तटाकेबहुपुष्करे ॥ किंचिद्दिश्रम्ययातास्ते श्यामंन्यग्रोधमाययुः ॥ ३७ ॥ या पयामासभगवा नग्रतोभरताग्रजं ॥ रामःस्वयंपृष्टतोया ज्जानकीमध्यतोययौ ॥ ३८ ॥ गव्यूति मात्रंगत्वाते ततोपियमुनातटे ॥ हत्वामृगानुपादाय तांनिशामवसन्निह ॥ ३९ ॥ श्रांतंभुवस्थले सुप्तं लक्ष्मणंलक्ष्मणाग्रजः ॥ कराभ्यांशंकराभ्यांतं परिमृज्योदबोधयत् ॥ ४० ॥ ततस्तेप्रस्थि ताःप्रात श्चित्रकूटंगिरिंगताः ॥ तत्राश्रमंश्रमोपेता अनुरूपममन्वत ॥ ४१ ॥ मंदाकिनीपरिगतं मंदानिलहिमंवनं ॥ देवीदेवोभिनंद्यात्र सार्वकामिकमैक्षत ॥ ४२ ॥ शालेविशालेचक्राते पादपै र्गजपातितैः ॥ लतावितानैराबध्य पर्णैरास्तीर्यराघवौ ॥ ४३ ॥ अशोधयत्स्थलंकृत्वा लक्ष्मणः पर्णशालयोः ॥ देवीशालेअलंचक्रे मार्तिकैरुपलेपनैः ॥ ४४ ॥ रामानुजोरामगिरा हत्वाकृष्णमृ गंवने ॥ जनयित्वाग्निमचिरा च्छ्रपयित्वान्यवेदयत् ॥ ४५ ॥ सीतापतिःससीतोथ स्नात्वाविहित माचरन् ॥ जुहावहविषोभागं बर्हिरिध्मादिभिःक्रमात् ॥ ४६ ॥ निवेद्यवासुदेवाय देवायस्वात्म नेहविः ॥ पितृभ्योथपवित्रेषु निवापंचजलंददौ ॥ ४७ ॥ ॥ ॥ ॥ ॥

॥ ४४ ॥

मृत्तिकामादायकृतैः ॥ ४४ ॥ श्रपयित्वापाकंकृत्वा ॥ ४५ ॥ बर्हिरिध्मादिभिः दर्भसमिधादिभिर्द्रव्यैः ॥ ४६ ॥ निवापंपितृतर्पणरूपं । पितृदानंनि वापस्यादित्यमरः । कृष्णमृगमांसरूपंहविः ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पंचयज्ञान् स्वाध्यायपाठहोमातिथिपूजापितृतर्पणबलिहरणात्मकान् पंचयज्ञान् । पाठोहोमश्चातिथीनांसपर्यातर्पणंबलिः । एतेपंचमहायज्ञाब्रम्हयज्ञादि-
नामकाइत्यमरः ॥ ४८ ॥ उछेषंभुक्तशेषं उपाददेस्वीकृतवती ॥ ४९ ॥ ५० ॥ मालिन्युदारसलिलैः गंगायाःपरिशुद्धैर्जलैः समीरणोवायुः ॥५१॥
इत्ययोध्याकांड टीकायां ९ सर्गः ॥ ॥ श्री ॥ रामदेवविरहानलदूनाः रामदेवविरहाग्निसंतप्ताः अस्यरामस्यजनकोदशरथः ॥ १ ॥ पिद्धासिपिहि-

पंचयज्ञान्सयज्ञेशो विधायैवंसलक्ष्मणः ॥ हविष्यंबुभुजेदिव्यं देव्यापात्रेसमर्पितं ॥ ४८ ॥ प-
रिवेषंसुवेषाथ भर्तृदेवरयोरिह ॥ विधायभर्तुरुछेषं कांताकांतमुपाददे ॥४९॥ पर्णशालांविशालां
तां रामोराजीवलोचनः ॥ वैकुंठइववैकुंठं प्राविशत्प्रिययासमं ॥ ५० ॥ नानाफलप्रसवपत्रगणो
पहारं मालिन्युदारसलिलैरुपसर्पणंच ॥ आलोक्यलक्ष्मणसमीरणयोःस्वसेवां रामश्चरामरमणी
चमुदंदधाते॥५१॥इति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके नारायण पं० कृ० नवमःसर्गः९
॥ श्री ॥ रामदेवविरहानलदूना स्तद्गुणान्जगुरथामृततुल्यान् ॥ नागराःसवनिताःशिशुवृद्धा
मातरोस्यजनकःस्वजनाश्च ॥ १ ॥ रामरूपमखिलेंद्रियरम्यं दर्शयन्विहसितामृतसारं ॥ सद्यएवपि
दधासिदशांनो हाविधेतवदयाक्वनुयाता ॥ २ ॥ पूर्तमिष्टमुदितंविदितंवा यद्यदस्तिहशुभंविहि
तंनः ॥ तेनतुष्टिमुपगम्यपरात्मा रामदर्शनसुखंप्रदिशेन्नः ॥ ३ ॥ अत्रसन्निहितमात्मकटाक्षं भा
ग्यदेव्यगमयद्वनवीथिं ॥ तेनतत्रविससंतिसमस्त श्रीपदानिरघुनाथपदानि ॥ ४ ॥ ॥

तंतिरोहितमदृश्यंकरोषि अदृश्यंकृतवानसीत्यर्थः ॥ २ ॥ वापीकूपतटाकबंधनादिकंपूर्तमित्युच्यते ॥ इष्टंयागः उदितंसात्विकहितार्थमुक्तंवचनं विदितं
भगवत्तत्वपरिज्ञानं विहितंकृतं तेनपूर्तादिना ॥ ३ ॥ अत्रायोध्यायां आत्मकटाक्षं स्वापांगं भाग्यदेवीश्रीः अगमयत् प्रापयामास । तेनकारणेनतत्रव-
नवीथ्यां समस्तश्रीपदानि समस्तश्रीनिवासभूतानि ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मार्गेजेनमार्गमध्येजातेन यंमार्गेजंतृणगुल्मगणं ॥५॥ विरजस्कानिर्मलापावनीभवतीत्येकंपदं।शुद्धाभवतीत्यर्थः ॥ वनराजिः वनपंक्तिःयांवनराजिं नि
मार्ष्टिसंस्पृशति ॥६॥ यास्तुनदीपुएषःरामः यत्पदेयस्यरामस्यपदे सपदिएकवारं ॥७॥ बंधुरं जटावलयिनं जटामंडलोपेतं ॥ ८ ॥ तर्कयंतिऊहयाति स-
रतिंरतिनाम्न्याभार्ययासहितं । रतिनाथंकामं मधुसखं वसंतसखं ॥ ९ ॥ रघुसंततिकेतुः रघुवंशश्रेष्ठः अतुलाअनुपमा शोच्यःशोकार्हः ॥ १० ॥ स्या-

किंनुतेनसुकृतंकृतमासी न्मार्गजेनतृणगुल्मगणेन ॥ ब्रह्मरुद्रमुकुटोपरिवेश्यं यंपरिस्पृशतिरामप
दाब्जं ॥ ५ ॥ रामपादरजसाविरजस्का पावनीभवतिसावनराजिः ॥ यांकरेणकरुणाकरआरा दिंदिरा
करसखेनानिमार्ष्टि ॥ ६ ॥ तानदीर्नभजतेभुवनेको यासुमज्जतिजगद्धतिरेषः ॥ यत्पदेसपदिसंगममात्रा
ज्जान्हवीहरशिरोमणिरासीत् ॥ ७ ॥ चारुचीरमचिराद्दुपयातं प्रेष्ठबंधुमिवबंधुरमारात् ॥ तंजटावलयि
नंकिलदृष्ट्वा पूजयंतिमुनयःकृतकृत्याः ॥ ८ ॥ चापपाणिमवलोक्यससीता लक्ष्मणंभुवनसुंदरमेनं ॥ त
र्कयंतिसरतिंरतिनाथं काननेमधुसखंमुनिवध्वः ॥ ९ ॥ यत्रयातिरघुसंततिकेतु स्तत्रसंपदतुलानवि
पत्तिः ॥ सौख्यमूर्तिरितिनैवसशोच्य स्तद्वियोगजनतैवहिशोच्या ॥ १० ॥ किंधनैःप्रियजनैरथकिंवा किं
सुतैःकिमपरैरपिहृद्यैः ॥ स्यामरामगुणकीर्तनतृप्ता यावदायुरपितच्चरणाप्त्यै ॥ ११ ॥ इत्थमुत्थि
तविरागविवेका स्तेजनाहृदिजनार्दनमाप्य ॥ योगिवत्सकलकालमवश्यं निन्यिरेसफलमेवहि
धन्याः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



म रामयावदायुरपितावत्पर्यंतमिति ॥ ११ ॥ उत्थितविरागविवेकाः विरागोवैराग्यं विवेकोज्ञानं संजातवैराग्यज्ञानवंतइत्यर्थः । योगिवत् योगिजनव
त् निन्यिरेनीतवंतः गमयामासुरित्यर्थः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

द्रवथ द्रवणंकुरुथ अद्यइदानीं ॥ १३ ॥ कल्पंकल्पकालसमं ॥ १४ ॥ तंरथं तत्ररथे ॥ १५ ॥ १६ ॥ १७ ॥ उदंतंवृत्तांतं वार्ताप्रवृत्तिर्वृत्तांतउदंतस्या-
दित्यमरः । अंबुइव अंबुयथावर्षीतसकलोहतकंर तावत्तद्वत् सम्रुमंत्रः रामवाचमप्युवाचेत्यन्वयः । वार्षिकः वर्षाकालीनः अंबुदः अंबु वर्षन् ज-

रामरम्यहसितामृतसीते लक्ष्मणक्वनुवनेद्रवथाद्य ॥ हाहतोस्मिविरहादितिराजा सुस्वरंसविवि-
धंविललाप ॥ १३ ॥ एकमेकमपिरात्रिविशेषं कल्पकल्पमनयत्पृथिवीशः ॥ क्लेशएवपरमंतपआ
सी द्रामसंस्मृतिबलाद्धतराज्ञः ॥ १४ ॥ तंरथंसमधिरुह्यसुमंत्रः शोकशोषितमनाःपुरमायात् ॥
तंपरीत्यजनतानगरस्था तत्ररामममनवेक्ष्यरुरोद ॥ १५ ॥ राघवस्यननुमंत्रिवरस्त्वं त्यक्तवानसि
वनेक्वनुरामं ॥ दुःसहासितिगिरंपरिशृण्वन् बाष्पवान्नृपगृहंप्रविवेश ॥ १६ ॥ रामदूतमवलोक्य
सुमंत्रं मूर्छितोनरपतिःसमूहूर्तं ॥ वल्लभाशतवृतोथससंज्ञः पृष्टवान्सपदिराघववृत्तं ॥ १७ ॥
राघवस्यरमणीयमुदंतं कीर्तयन्सजनतापमुदास ॥ वार्षिकोंबुदइवांबुसुमंत्रो रामवाचमपितावदु-
वाच ॥ १८ ॥ नंदइष्यतिनरेंद्रभवंतं नंदनःसमयमेनमतीत्य ॥ त्वांसदापरिचरंननुरागा त्साधु
शास्तुभरतःकिलराज्यं ॥ १९ ॥ वंदतेभुवनवंद्यपदस्त्वां सुंदरीचमिथिलेंद्रसुतासा ॥ लक्ष्मणश्च
परितप्तमनास्ते हेलनेनमहिलाविहितेन ॥ २० ॥ ॥ ॥ ॥ ॥ ॥

नतापमिव जनतापंयथानाशयतितद्वत् रामवार्तामुक्त्वाजनतापमुदासेतिप्रथमान्वयः ॥ पश्चाद्दशपदान्वयः ॥ १८ ॥ समयंसंकेतं चतुर्दशमुवर्षपुवनवास
लक्षणं शास्तुकिलरक्षतुकिलपालयत्वित्यर्थः ॥ १९ ॥ हेलनेन अवज्ञया महिलाविहितेन स्त्रीकृतेन कैकेय्याकृतेनेत्यर्थः ॥ २० ॥ ॥ ॥

उपचर्यशुश्रूषयित्वा दशरथशुश्रूषांकृत्वेत्यर्थः । मुदेसंतोषाय मुत्प्रीतिःप्रमदोहर्षइत्यमरः ॥ २१ ॥ अंबुजिनीभिः पद्मिनीभिः पद्माकरैःसहेतिशेषः वनं ताम्यतिस्मग्लानिंगच्छतिस्म तमुग्लानावितिधातुः । खिन्नमभवदित्यर्थः । हेमानददशरथराज विपिनेवनेशेषे शयनंकरोषि शीङ्स्वप्नइतिधातुः पितरौमातापितरौ मातापितरौपितरावित्यमरः ॥ २२ ॥ २३ ॥ भयंनोनास्ति ॥ २४ ॥ सौमनस्यंप्रसन्नत्वं राममानसंरामदेवचित्तं । इताशरणंगता मलहीनं

राममातरुपचर्यसदात्वं रामतातमखिलंत्यजशोकं ॥ रामएष्यतिमुदेतवसत्यं रम्यएषननुराम-
नियोगः ॥ २१ ॥ ताम्यतिस्मवनमंबुजिनीभिः कस्यरामविरहेणनशोकः ॥ स्याच्चराचरगतिस्त
वसूनु मांनदेतिनिजगादसुमंत्रः ॥ २२ ॥ रामवत्सविपिनेकनुशेषे कुत्रतन्विपरिताम्यसिसीते॥
क्वासिलक्ष्मणवतेतिरुदंतौ स्माहरामपितरावथसूतः ॥ २३ ॥ हेनृदेवनरदेवविनतापो राघवेनिज
सुखामृतपूर्णे॥ नोभयंस्वबलधारितलोके सर्वसद्गुणनिधौनहिदोषः॥ २४ ॥ नप्रताम्यतिनसीद
तिसीता सौमनस्यमपिनैवजहाति ॥ राममानसमितामलहीनं पद्मपालिरिवहंतहसंती ॥ २५॥
रामपादमुपसेव्यकृतार्थौ लक्ष्मणःपुरुषलक्षणदक्षः ॥ शोच्यतानखलुतेषुततः स्यान्निर्वृययाविति-
निगद्यसुमंत्रः ॥ २६ ॥ हाहतास्मिनरदेवबताहं मत्सुतस्यविरहानलदूना ॥ त्वंरमस्वममकांत
सपत्न्ये त्यत्ररामजननीविललाप ॥ २७ ॥ देविमैवमभिधेहिसतित्वं माक्षतंमममनोथचभिंधि॥
राममातरुपसंस्पृशदोर्भ्यां मांबतेतिनरदेवउवाच ॥ २८ ॥ ॥ ॥ ॥ ॥

निर्मलं राममानसं मनोहररामामानसरोवरं इतागता पद्मपालिरिव पद्मपङ्क्तिरिव हसंतीविकसिता ॥ २५ ॥ २६ ॥ २७ ॥ हेदेविकौसल्ये एवंमाभिधेहिमावद पूर्वमेवक्षतंममनः अथचपुनरपिनभिंधिनविदारयदोर्भ्यांपाणिभ्यां ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बहुशोकोन्मत्तया बहुशोकेनोन्मत्तया भ्रांतया बहुदुःखवशयेत्यर्थः ॥ २९ ॥ नक्तंरात्रौअभ्यधितउवाच तौ कौसल्यादशरथौ ॥ ३० ॥ कटुरश्मिःसु-
र्यःयंरामं कटुतीक्ष्णंयथाभवतितथा नोस्पृशतिनस्पृशति यत्ररामे आनमति आसमंतान्नमस्कारंकरोति ॥ ३१ ॥ ३२ ॥ ३३ ॥ सलक्ष्मणः सुमित्रासां
त्वितेन सुमित्राप्रोक्तसांत्ववचनेन उषासेउषःकाले निद्राभस्मना निद्रैवभस्मनिद्राभस्मतेन उपगूढःतिरोहितः क्षणमात्रं क्षणपर्यंतं तदानिद्रासमागमदि-

वल्लभप्रलपितंबहुशोको न्मत्तयाननुमयानविवेकात् ॥ हाक्षमस्वसुजनेतिगदंती तत्ररामजननी-
प्रणनाम ॥ २९ ॥ पंचकल्पसदृशाःप्रभुपित्रोः पंचरामरहितादिवसास्ते ॥ पंचमेन्हिविगथेथसु
मित्रा नक्तमभ्यधिततौविलपंतौ ॥ ३० ॥ नोकटुस्पृशतियंकटुरश्मि र्यत्रवातउतवातिनतीक्ष्णं ॥
विश्वमानमतियंतवरामं नैवशोच्यइतिशोभननीतिः ॥ ३१ ॥ आपदंसमपनेष्यतिदेवः संपदंध्रु
वमुपेष्यतिदेवः ॥ यद्यपास्यतिरविस्तिमिरौघं यद्यसावुदयमेतिसुतेजाः ॥ ३२ ॥ जानकीजग-
तिधन्यतमसा विंदि रैवननुसुंदरपत्नी॥ नानुशोकपदमेवमवश्यं लक्ष्मणःसहितयोःप्रियदासः ॥
॥ ३३ ॥ शांतयोरितिशुभेनसुमित्रा सांत्वितेनबतराघवपित्रोः ॥ शोकवन्हिरथचोषसिनिद्रा भ-
स्मनाक्षणमभूदुपगूढः ॥ ३४ ॥ षष्ठएवदिवसेथनिशीथे शोकशोषितमनानरदेवः ॥ संस्मरन्
स्वकृतदुष्कृतवीर्यं राममातरमवेक्ष्यजगाद ॥ ३५ ॥ ईश्वरःखलुशुभाशुभमूलं भावयेदिहसुखा-
सुखभोगं ॥ अत्रजन्मनिपरत्रपुनर्वा तन्वितत्रहिनिदर्शनमेतत् ॥ ३६ ॥ ॥ ॥

त्यर्थः ॥ ३४ ॥ निशीथमध्यरात्रे अर्धरात्रनिशीथौद्वाविसमरः । स्वकृतदुष्कृतवीर्यं स्वेनकृतंयत् दुष्कृतंपापंतस्यवीर्यंसामर्थ्यं ॥ ३५ ॥ भावयेत संपा
दयेत् निदर्शनंदृष्टांतः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शब्दवेधपटनायतः शब्दःश्रूयतेतत्स्थलं प्रत्यगत्वास्थितस्थलादेव दूरतएववद्धुंयः समर्थःसधानुष्कः शब्दवेधपटुरित्युच्यते तादृशेनमयामृगयायां वन-मृगहननसमये उषसिउषःकालेद्विपबुध्यागजोयामितिबुध्या कुंभनिमज्जनध्वनिंश्रुत्वाभ्रांतेनेत्यर्थः द्राक्क्षिप्रंसूदितःहतः ॥ ३७ ॥ अनुतापंपश्चातापयु-क्तं विषण्णं भीतं करुणयाकृपया कारुण्यंकरुणाघृणेत्यमरः । नविदुषइत्येकंपदं नजानतः अज्ञानादेतत्कर्मकृतवतस्ते द्विजहत्याब्राह्मणहत्यानस्यादभ-वेत् ॥ ३८ ॥ अंधयोः अंधकयोःस्थविरयोः वृद्धयोःमुनिपित्रोः मयाहतस्यमुनेर्मातापित्रोरेकसुतयोःमयाहतोयः सएकएवसुतोययोस्तौतथोक्तौतयोः

शब्दवेधपटुनामृगयायां तिष्ठतोषसिवनाद्विपबुध्या ॥ कुंभमंभसिनिमज्जितवान् द्राक्सूदितोननु मयामुनिसूनुः ॥ ३७ ॥ सानुतापमवलोक्यविषण्णं मांतदाकरुणयाऋषिसूनुः ॥ स्यान्नतेनविदुषोद्विजहत्या राघवेतिनिगदन्दिवमाप ॥ ३८ ॥ अंधयोःस्थविरयोर्मुनिपित्रोः पार्श्वमेकसुतयोरहमाप्य ॥ आर्जवंपरमवेत्यशुचार्तः प्रावदंबतमुदंतमुदंतं ॥ ३९ ॥ आवयोस्त्वयिहितातनिविष्टं जीवितंचसुकृतंचगतस्त्वं ॥ यज्ञदत्तनयनोद्रुतमित्थं तत्तपस्विमिथुनंविललाप ॥ ४० ॥ त्वंचपुत्रविरहात्त्यजदेहं पार्थिवेतिसऋषिर्ममशप्त्वा ॥ तापसस्तनयतापपरीतः स्वर्गमार्गमगमत्सहपत्न्या ॥ ४१ ॥ दुष्कृतंननुकृतंतदिदंमे तत्फलंमरणमेवनचान्यत् ॥ भेषजंममसुतस्यमुखेंदोर्दर्शनामृतमुपागतमृत्योः ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आर्जवंऋजुत्वं परमधिकंअवेत्यज्ञात्वा शुचार्तोहं मुदंतंमुदःसंतोषस्य अंतरवमानंयत्रसमुदंतः तादृशंउदंतंवृत्तांतं सुतहननादिवार्तां प्रावदंअब्रुवमित्य-न्वयः ॥ ३९ निविष्टंसंस्थितंत्वंतुगतः मरणंगतोसि हेयज्ञदत्तपुत्रनौआवां द्रुतंनय तत्रसमीपं प्रत्येवनय अत्रनत्यज इत्थंएवमादि प्रकारेण ॥ ४० ॥ ॥ ४१ ॥ हेमातिकौसल्येतत्फलंतस्यदुष्कृतस्यफलं उपागतमृत्योः समीपस्थमृत्योः ममसुतस्यरामस्य दर्शनामृतंभेषजमौषधं अतस्तंस्मरामीत्यध्याहृतेना-न्वयः ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विलसितंवहुविलासीपेतं ॥ ४३ ॥ द्विरदराजसपत्नंऐरावतप्रतिपक्षं तस्मादप्यातिविलासादि मद्गगमनशक्तिमंतामित्यर्थः । पुनरवेक्षणनूत्नंपुनरवेक्षणेपिसंदर्शनेपिनूत्नं नूतनभूतमित्यर्थः ॥ ४४ ॥ अचिरद्युतिचीरं तटित्समानचीरवस्त्रं ॥ ४५ ॥ इदमीक्षणमिदंनयनं ॥ ४६ ॥ परितापलवोपिसंतापलेशोपि ॥ ४७ ॥ राजमौलिमाणिंराजगणचूडामाणिं अद्भुतमौलिं अत्यद्भुतकिरीटं वीरासनंसिंहासनं ॥ ४८ ॥ उद्ध्वांतरगताय जन्मांतरंप्राप्तवते

श्यामलंसुललितंविमलांगं लोकमंगलदचारुतराक्षं ॥ आव्रजंतमवलोक्यहिलोको धन्यतांनयति मेतनयंतं ॥ ४३ ॥ पादपद्मगुणानिर्जितपद्मं यात्रयाद्विरदराजसपत्नं ॥ प्रेक्षतेभुवनभूषणरत्नं पुण्यवान्पुनरवेक्षणनूत्नं ॥ ४४ ॥ वीरवर्यमचिरद्युतिचीरं दीर्घबाहुमिषुकार्मुकपाणिं ॥ आयतो रसमवेक्ष्यसुतंमे कस्यतृप्यतिमनोनयनंवा ॥ ४५ ॥ कंबुकंठमरुणांबुजमाल्यं प्रोल्लसन्मकरकुंडलगंडं ॥ विद्रुमाधरमहोमम पुत्रंद्रक्ष्यतीक्षणमिदंतुकदानु ॥ ४६ ॥ अर्धचंद्रमिवतस्यललाटं चंद्रसुंदरकलामिवहासं ॥ पूर्णचंद्रमिवतस्यमुखाब्जं पश्यतःक्वपरितापलवोपि ॥ ४७ राजमौलिमाणिमद्भुतमौलिं सीतयासहपरासनमाप्तं ॥ लक्ष्मणाचालितचामरमारा द्दीक्षतेममसुतंपुरि धन्यः ॥ ४८ ॥ ज्ञानयज्ञनिजधर्मगुणैर्मे तुष्टिमेतियदिनामविधाता ॥ रामदर्शनसुखंप्रतिदद्या दुद्ध्वांतरगतायचमह्यं ॥ ४९ ॥ इत्यमुष्यसविलापविशेषः शेषतामुपजगामसमाधेः ॥ येनरामपदवेद्यमुदारं ब्रह्मनंदनधियापिसदध्यौ ॥ ५० ॥ वैष्णवंपदमवापसराजा राजहंसइवनिर्मलरूपः तच्छरीरमपहायकृतार्थो वृक्षनीडमिवभीतिसनीडं ॥ ५१ ॥ ॥ ॥ ॥

॥ ४९ ॥ शेषतां अंगतां तत्रहेतुः । येनेति ॥ ५० ॥ वैष्णवंपदं विष्णुलोकं हंसपक्षेतु वैष्णवंपदमित्याकाशमुच्यते राजहंसः भीतिसनीडं भययुक्तं ॥ वृक्षनीडं वृक्षेविद्यमानं नीडाख्यस्वगृहं अपहायेवत्यतकेत्रेत्यन्वयः ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

माहिषीकौसल्याक्षितिभर्तुःभूपस्य ॥ ५२ ॥ आहरन्आनीतवंतः कानकेपुकनकमयेपुं सुवर्णकृतेषु कल्पेउषःकालसमये एतत् अघंराजमरणरूपंदुष्कर्म अप्रतिबुध्यअज्ञात्वा ॥ ५३ ॥ पादसेवनकृतः पादसेवांकुर्वाणाः परेतंमृतंउपलभ्यज्ञात्वा प्रहरंत्यःताडयंत्यः ॥ ५४ ॥ अंगलतांशरीराख्यलतां ससुमित्रासुमित्रयासहिता ॥ ५५ ॥ त्यजसित्यक्तवानसि संरामंपरिहायापित्यक्त्वापि मेत्हृदयंनदीर्णंनविदारितमभूत् ॥ कर्कशंकठिणं कुलिशात्वज्रात्

रामकीर्तनरसामृततृप्तं सुप्तमासदयितंप्रतितर्क्य ॥ राममेवहृदयेनदधाना स्वापमापमहिषीक्षितिभर्तुः ॥ ५२ ॥ आहरन्परिजनाजनभर्तुः कानकेपुकरकेषुजलानि ॥ बंदिनःप्रतिववंदिरेएनं कल्पमेतदघ्यमप्रतिबुध्य ॥ ५३ ॥ पादशैत्यमवगम्याहिभर्तुः पादसेवनकृतोनृपनार्यः ॥ आत्मकांतमुपलभ्यपरेतं चुक्रुशुर्निजतनुंप्रहरंत्यः ॥ ५४ ॥तत्ररामजननीप्रतिबुध्धा प्राणनाथमवलोक्यपरासुं ॥ व्याललापमृदुलांगलतांस्वां ताडयंत्यतितरांससुमित्रा ॥ ५५ ॥ हापतेननुसुतप्रणयीत्वं स्वांतनुंत्यजसिरामवियोगे ॥ त्वांचतंचपरिहायनदीर्णं कर्कशंहिकुलिशात्धृदयंमे ॥ ५६ ॥ नंदनेनरमणेनचहीनां निंदितांजगतिधिग्धिगवीरां ॥ हाविधातरुपयापयपारं मानृशंसइतिनामलभेथाः ॥ ५७ ॥ राज्यमागतमिदंत्वयिदैवा त्सर्वमेवखलुकैकयपुत्र ॥ भुंक्ष्वसांप्रतमकंटकमेतत्त्वत्सपत्नाविलयोखिलमासीत् ॥५८ ॥ इत्यहोविलपितंभुविपन्नं लोटितंचबहुताडितमंगे ॥ स्त्रीशतैःसहहिरामजनन्या तत्रकस्यकरुणानबभूव ॥ ५९ ॥ ॥ ॥ ॥ ॥

॥ ५६ ॥ पतिपुत्राभ्यांरहितत्वादेवावीरां अविरानिष्पातिसुतेत्यमरः । पारंअवसानं ॥ ५७ ॥ आगतंउपगतं सांप्रतंइदानीं ॥ ५८ ॥ विलपितं विलापःकृतः पन्नंपतितं ॥ ५९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अधितैलद्रोणि तैलपूर्णमंजूषायांनिक्षेपयित्वा ॥ ६० ॥ स्मेरंमंदस्मितोपेतं मणिघृणिकनत्कुंडलोल्लासिगंडं माणिकिरणोज्ज्वलन्मकर कुंडलविलसितगंडं व तमित्यर्थः । उदितंस्मरणेनतथाआविर्भूतं सांत्वार्थंवा शोकोनकायइत्यादि सांत्ववचनानिवक्तुमिव समुपाश्लिष्य मनसैवालोच्यालिंगनं कृत्वा शोकं

स्त्रीगणंतमपसार्यवसिष्ठ स्तांचरामजननीमपयाप्य॥ देशकालविदसावधितैल द्रोणिपार्थिवतनुं
प्ररक्ष॥ ६० ॥ रामंरम्यंमरकतमणिश्यामलंकोमलांगं स्मेरंवीरंमणिघृणिकनत्कुंडलोल्लासिगंडं॥
कौसल्यास्वंतनयमुदितंचित्तपद्मेदयालुं सांत्वार्थंवासपदिसमुपाश्लिष्यशोकंमुमोच ॥ ६१ ॥ इ
ति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके नारायणपंडिताचार्यकृतौ दशमःसर्गः ॥ १० ॥

॥ श्री ॥ वैनतेयोदयेप्राप्ते वैनतेयध्वजप्रियाः ॥ ब्राह्मणाराजभर्तारः सभांप्रापुःससंकटाः ॥ १ ॥
मार्कंडेयोवामदेवो मौद्गल्यःकश्यपोमुनिः ॥ कात्यायनोगौतमश्च जाबालिरितिसद्गणाः ॥ २ ॥
पुरोहितंपुरोधाय वसिष्ठंसममंत्रयन् ॥ रामेवनंगतेराज्ञि स्वर्गतेकृत्यमत्रकिं ॥ ३ ॥ क्षित्यामरक्ष
कायांस्यु र्दोषाःसर्वभयंकराः॥ भरतःसानुजस्तस्मा दानीतव्योगिरिव्रजात् ॥ ४ ॥ वसिष्ठएवंनि
श्चित्य राजामात्यान्समादिशत् ॥ भोभोविजयसिद्धार्थ जयंताशोकगछत ॥ ५ ॥ आयातुभर
तस्तूर्णं मदाज्ञेतिनिवेद्यतां ॥ अथरामविवासश्च नोच्यतांशोककारणं ॥ ६ ॥ ॥

पतिमरणादिनिमित्तंशोकं मुमोच विनाशयामासेत्यर्थः ॥ ६१ ॥ इत्ययोध्याकांड टीकायां दशमःसर्गः ॥ १० ॥ ॥ श्री ॥ वैनतेयोदये अरु णोदये वैनतेयध्वजप्रियाः गरुडध्वजस्यहरेः प्रियाः ॥ १ ॥ २ ॥ पुरोधायपुरस्कृत्य ॥ ३ ॥ गिरीव्रजात्केकयपुरात् ॥ ४ ॥ ५ ॥ ६ ॥ ॥

पाथेयंशंबलं अयापयत् प्रेषयामास ॥ ७ ॥ प्रत्यङ्मुखाःपश्चिमाभिमुखाः ॥ ८ ॥ ९ ॥ १० ॥ मुक्तमूर्धजंविकीर्णकचभारं ॥ ११ ॥ असकृत्बहुवारं
कार्ष्णायसे कृष्णायःकृते ॥ १२ ॥ १३ ॥ अत्यधिकं अत्ययानंतरांविद्यमानं दशरथमरणानंतरमपि विद्यमानसंस्कारादिकमित्यर्थः ॥ आव्हान मा

वासोरत्नधनाकल्पा दीयंतांकैकयायच ॥ कथयित्वेतिपाथेयं दत्वादूतानयापयत् ॥ ७ वसिष्ठेन
गरिष्ठेन त्वरितंप्रेषितास्ततः ॥ तेहास्तिनपुरेगंगां तीर्वाप्रत्यङ्मुखाययुः ॥ ८ ॥ अतीत्यपांचा
लकुरू निक्षुमत्यादिकानदीः ॥ बाल्हीकानतिगम्यापुः केकयान्सप्तमेदिने ॥ ९ ॥ यांरात्रिंतत्रतेया
ता स्तामेवभरतोप्यथ ॥ दुःस्वप्नानवलोक्याभू च्छोकाकुलितमानसः ॥ १० ॥ सागरंशुष्कमद्रा
क्षी च्चंद्रंचपतितंभुवि ॥ रक्तमाल्यंस्वपितरं गोमयेमुक्तमूर्धजं ॥ ११ ॥ पिबंतंतैलमसकृ त्धसंतं
खरवाहनं ॥ स्थितंकार्ष्णायसेपीठे कृष्णवस्त्रंसमैक्षत ॥ १२ ॥ दुःस्वप्नेनाकुलःप्रातः प्राप्तान्
दूतपदेनतान् ॥ सर्वान्कुशलिनोऽपृच्छ द्भरतोभयविव्हलः ॥ १३ ॥ सर्वान्कुशलिनःप्रोचु र्दूतास्ते
पुनरब्रुवन् ॥ कृत्यमत्याधिकंकर्तुं माव्हानंत्वत्पुरोधसः ॥ १४ ॥ मातामहंमातुलंच गुरुंचापृच्छ्य
सत्वरः ॥ धनंचमातुलप्रत्तं सैन्यंचादाययातवान् ॥ १५ ॥ शुतुद्रिवेदधामादिं नदीस्तीर्त्वाथस
त्वरः ॥ देशानतीत्यविविधान् सप्तमेऽन्हिपुरंययौ ॥ १६ ॥ अप्रत्दृष्टजनांपश्य न्नप्रत्दृष्टमनाः
पुरीं ॥ भरतोभयसंभ्रांतो मातुरंतःपुरंययौ ॥ १७ ॥ ॥ ॥ ॥ ॥

न्मब्रुवन् नपुनर्दशरथमरणादिकं प्रोचुरित्यभिप्रायः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥ ॥

॥ १८ ॥ वंदेयं अभिवादयेयं ॥ १९ ॥ २० ॥ २१ ॥ आपदे बहुलसंकटाय ॥ २२ ॥ २३ ॥ भवापदः संसारक्लेशाः ॥ २४ ॥ चरमंअवसानेविद्य
मानं व्याहृतंवचनं किंकीदृशंमरणसमयेकिमुक्तवानित्यर्थः ॥ २५ ॥ सिद्धार्थंसाधिताभिप्रायं आगतंपुनर्नगरमागतं उत्तरं ततउपर्यवसानेविद्यमानं ॥

कैकेयीसुतमालोक्य चिरप्रोषितमागतं॥ उथ्थायाश्लिष्यपप्रछ बंधूनांकुशलंमुदा ॥ १८ ॥ भरत
स्तान्कुशलिनः प्रोच्यपप्रछमातरं ॥ कुत्रास्तेमेपितातस्यवंदेयंचरणाविति ॥ १९ ॥ तातस्तेस्व
र्गतस्तातो यज्वाविपुलदक्षिणः॥ इतिमात्रोक्तिबाणेन भरतोमूर्छितोपतत्॥ २० ॥ कैकेय्योत्थापि
तःसंज्ञां संप्राप्यपुरुषर्षभः ॥ रुदन्बाष्पांबुपूर्णाक्षो विलप्येदंवचोब्रवीत् ॥ २१ ॥ अभिषेक्ष्यति
मेतातो नूनंराममममाग्रजं ॥ इत्येवंहर्षितःप्राप्तो मंदभाग्योहमापदे ॥ २२ ॥ ज्येष्ठायसर्वश्रेष्ठा
य रामायस्वामिनेमम ॥ कृपाकरायगुरवे ब्रूहिमांदासमागतं ॥ २३ ॥ भवापदोपिनश्यंति यत्पा
दांबुजसेवया ॥ तस्यरामस्यनाथस्य कुर्यांपादाभिवंदनं ॥ २४ ॥ पितादैत्यविदारीमे मारितःके
नहेतुना ॥ चरमंव्याहृतंतस्य किंचतत्कथ्यतामिति ॥ २५ ॥ रामंससीतंद्रक्ष्यंति धन्याःसिद्धा
र्थमागतं ॥ हारामेत्युत्तरंवाक्यं तस्येत्यंबाततोब्रवीत् ॥ २६ ॥ ममनाथोजगन्नाथः ससीतःकुत्र
वर्तते ॥ इतिपप्रछभरतो महादुःखाग्निशंकया ॥ २७ ॥ रामःससीतसौमित्रि श्चीरीवनमितोग
तः ॥ इत्युवाचाप्रियंमत्वा कैकेयीतस्याविप्रियं ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥

॥ २६ ॥ २७ ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विवासःवनवासः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ प्रवास्य निष्काल्य व्यधाःअकरोः ॥ ३५ ॥ भ्रूणवधा बालहत्या ॥ ३६ ॥ ३७ ॥



विवासःश्रीनिवासस्य कस्माद्धेतोरजायत ॥ अनवद्यस्यतस्येति पप्रच्छभरतोथतां ॥ २९ ॥ अ
त्याकुलतरंपुत्रं कैकेयीवाक्यमब्रवीत् ॥ सत्यंरामोनवद्यात्मा चंद्रवद्रंजयन्प्रजाः ॥ ३० ॥ तस्यो
द्यतोभिषेकोत्र कृतवत्यास्मितेहितं ॥ रामस्यतुवनेवासं राज्येत्वदभिषेचनं ॥ ३१ ॥ आत्माज्ञया
वनंयाते सीतासौमित्रिसंयुते ॥ रामेहारामरामेति राजाशोकाद्दिवंगतः ॥ ३२ ॥ जुगुप्सितमिदं
कर्म त्वयिस्नेहाददिदंकृतं ॥ रक्षराज्यंस्वधर्मेण यत्नंमेसफलंकुरु ॥ ३३ ॥ जाज्वल्यमानेशोकाग्ना
वितिवाक्येनपातितः ॥ तातप्यमानोभरतः कैकेयीमिदमब्रवीत् ॥ ३४ ॥ हत्वामेपितरंघोरे प्रवा
स्यचममेभ्वरं ॥ दुष्टेव्यधामहद्दुःखं विषंक्षीरमिवेक्षसे ॥ ३५ ॥ ब्रह्मभ्रूणवधाभ्यांच दोषौल
क्षगुणोल्बणौ ॥ कृत्वात्वदर्थमित्युक्ता मांतुभस्मीकरोषिहि ॥ ३६ ॥ पापिष्टेराजनिधनं रामप्रव्र
जनंचते ॥ राज्यभोगायमेनैव तस्यस्युःसाक्षिणःसुराः ॥ ३७ ॥ त्वद्देहादुदभूद्देहो योयंदूषणभूष
णे ॥ इमंतुसंत्यजाम्यद्य माभून्मेदेवहेलनं ॥ ३८ ॥ सहस्रपुत्रासुरभिः खिन्नास्मृत्वाकृशौसुतौ ॥
एकपुत्राचकौसल्या तद्वियोगंसहेताकिं ॥ ३९ ॥ नत्वमश्वपतेःपुत्री पुत्रीत्वंरक्षसोध्रुवं ॥ ययाना
थोजगन्नाथ स्त्यक्तःकांतश्चसूदितः ॥ ४० ॥ ॥ ॥ ॥



उदभूत् आवीरभुत् देवहेलनंदेवतावज्ञा ॥ ३८ ॥ खिन्नाखेदवत्यभवत् ॥ ३९ ॥ रक्षसःराक्षसस्य ॥ ४० ॥ ॥ ॥ ॥

लक्ष्मणानुजः शत्रुघ्नः ज्येष्ठंभरतं ॥ ४१ ॥ ४२ ॥ प्रद्वारि महाद्वारातिरिक्ते कस्मिंश्चिद्द्वारविशेषे ॥ ४३ ॥ ४४ ॥ कुब्जाबंधुजने कुब्जायाःबंधुजनःकु ब्जाबंधुजनः तस्मिन्याते सति ॥ ४५ ॥ रेणुनापांसुना ॥ ४६ ॥ ४७ ॥ अमंथरांअतिकष्टां नश्वरींनाशशीलवतीं ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

तस्यार्तंगिरमाश्रुत्य भृशार्तोलक्ष्मणानुजः ॥ ज्येष्ठंपातितमुत्थाप्य क्षुभितोवाक्यमब्रवीत् ॥ ४१॥
कथंलोकैकनाथेन राज्यंत्यक्तंस्त्रियोगिरा ॥ कथंवालक्ष्मणोधीरो यांतंराममंनरुद्धवान् ॥ ४२ ॥ए
वंब्रुवाणस्तांकुब्जां कैकेयीभेदकारिणीं ॥ श्रुत्वाददर्शप्रद्वारि सर्वाभरणभूषितां ॥ ४३ ॥ शत्रुघ्नः
शत्रुदर्पघ्नः श्चूडेसंगृह्यतांखलां ॥ चकर्षामर्षताम्राक्षः स्मरंतस्याःकुमंत्रितं ॥ ४४ ॥ कुब्जाबंधुजने
याते कौसल्याशरणार्थिनि ॥ पुनश्चकर्षकैकेयि हाहतास्मीतिवादिनीं ॥ ४५ ॥ रेणुनापूरयत्तस्याः
क्रोशंत्यामुखकोटरं ॥ घोरांगामेघगंभीरा मब्रवीच्चांतकोपमः ॥ ४६ ॥ तातंनोघातयित्वात्वं स्वा
मिनंचाविवास्यनः ॥ कथंजीवासिदुर्वृत्ते दुर्वृत्तंसमुपाश्रिता ॥ ४७ ॥ अद्यनेष्याम्यहंमृत्युं मंथरेत्वा
ममंथरां ॥ ईश्वरीतवकैकयी नश्वरींत्वांतुपश्यतु ॥ ४८ ॥ कर्षंतमितितांपापां शत्रुघ्नंभरतोब्रवीत् ॥
मयैववध्यातातेयं कैकेयीमंथरायुता ॥ ४९ ॥ राजर्षिधर्मोरामोमां स्त्रीघातीतिपरित्यजेत् ॥ त
त्पादपांसुलोभेन ध्रुवमेतांसहावहे ॥ ५० ॥ पाशेनपशुवद्बद्ध्वा विवशान्स्ववशःप्रभुः ॥ कथंत्य
स्मान्कृतांतोयं वत्सतस्मात्सहावहे ॥ ५१ ॥ एवमुक्त्वासभरतः सानुजःप्रस्थितोद्रुतं ॥ कौसल्यां
चसुमित्रांच ववंदेभयकंपितः ॥ ५२ ॥ ॥ ॥ ॥

प्रस्थितस्ततोयातः ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामभ्रातृव्यशंकया रामस्यशत्रुरयमितिशंकया ॥ ५३ ॥ ५४ ॥ ५५ ॥ अकल्पःसमर्थः ॥ ५६ ॥ ५७ ॥ गुरुद्रुहांगुरुद्रोहिणां ॥ ५८ ॥ ५९ ॥ ६० ॥

राममातातमाश्लिष्य रामविश्लेषशंकितः ॥ रामभक्तमुवाचाथ रामभ्रातृव्यशंकया ॥५३॥ वत्स
राज्यंचिरंभुंक्ष्व मात्रातेप्रतिपादितं ॥ घातयित्वाहितेतातं कालयित्वातवाग्रजं ॥ ५४ ॥ मांचत
त्रनयत्वेषा त्वंवामांनयपुत्रक ॥ ससुमित्राथवायायां स्वयमेवसुतांतिकं ॥ ५५ ॥ कौसल्यायाअ
कल्पोसौ सोढुमेतदुदीरितं ॥ हामातारीतितत्पादे पतित्वेदमभाषत ॥ ५६ ॥ मांशुद्धभावमज्ञा
त्वा मातर्मात्वंनिराकुरु ॥ रामपादैकदासोहं सत्यमेतद्ब्रवीमिते ॥ ५७ ॥ गुरुद्रुहांचमूर्खाणां
महापातकिनामपि ॥ लोकान्मातरहंयाया मार्यश्चेन्यन्मतोगतः ॥ ५८ ॥ देवीतिशपथैस्तुष्टा भ
रतंप्रत्यभाषत ॥ शुद्धस्वभावंजानामि त्वांरामस्यानुजंसुत ॥ ५९ ॥ त्वंसंस्कृत्यपितुर्देहं राज्यं
धर्मेणपालय ॥ चतुर्दशेवत्सरेथ रामेणसहरंस्यसे ॥ ६० ॥ आर्जवेनप्रसीदंत्या राममात्रेत्युदाहृतः॥
रामदेवेतिविलपं स्तांरात्रिंभरतोनयत् ॥ ६१ ॥ तस्मिन्पुरेजनपदेनिखिलप्रजानां शोकोपिशो
कभयशोषणमूलमासीत् ॥ रामस्मृतिश्रवणकीर्तनसंप्रयोगात्सर्वापदांप्रशमनोहिहरेःप्रसंगः॥६२॥
इति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके पंडिताचार्यकृतौ एकादशःसर्गः ॥ ११ ॥ ॥

॥ ६१ ॥ शोकभयशोषणमूलः शोकभयविनाशकारणभूतः ॥ ६२ ॥ इत्ययोध्याकांड टीकायां एकादशःसर्गः ॥ ११ ॥ ॥ ॥

श्री ॥ १ ॥ अनुतिष्ठकुरुष्व उपतिष्ठसेवस्व अधितिष्ठअध्यारोह ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ न्याय्यांयुक्तियुक्तां ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ भूरि-

॥ श्री ॥ प्रभातेभरतंदृष्ट्वा विलपंतंशुचाकुलं ॥ वृतंप्रकृतिभिस्तत्र वसिष्ठोमुनिरब्रवीत् ॥ १ ॥
उत्तिष्ठशीघ्रमायुष्मन्ननुतिष्ठपितृक्रियां ॥ उपतिष्ठद्विजान्वृद्धा नधितिष्ठवरासनं ॥ २ ॥ काला
त्मनःपरेशस्य लीलेयंलोककालिनी ॥ नपुष्यंतिनशुष्यंति पंडिताःसुखदुःखयोः ॥ ३ ॥ इत्युक्त
ऊचेभरतो बाष्पंसंमृज्यपाणिना ॥ अपंडितोस्मिशोच्योस्मि विनाराममहंगुरो ॥ ४ ॥ साम्रा
ज्यान्मेशतगुणं वनेरामांघ्रिसेवनं ॥ अमृतान्मेशतगुणं रामास्येंदोरवेक्षणं ॥ ५ ॥ जगतामेक-
नाथेमे नाथेरामेविराजति ॥ ब्रह्मनंदनमांनाथं नब्रुवंतिभवादृशाः ॥ ६ ॥ न्याय्यामुदारांकरुणां
वाणींरामानुजन्मनः ॥ श्रुत्वाश्रूण्यमुचंस्तृप्ता गुणैरस्यमहाजनाः ॥ ७ ॥ तैलद्रोण्यामथन्यस्तां
कौसल्यायानिवेशने ॥ प्रेक्ष्योत्धृतांपितृतनुं शुशोचभरतःपुनः ॥ ८ ॥ चतुर्दशशतस्त्रीभिः स-
मंराजपरिग्रहैः ॥ मातॄर्विलोक्यक्रोशंती विललापपुनश्श्वसः ॥ ९ ॥ दृष्ट्वावसिष्ठजाबाली रुदंतं-
समवोचतां ॥ अप्राकृतःप्राकृतव त्किंविरोषिनृपात्मज ॥ १० ॥ भूरिसुखभोगतःस्वर्गे बंधुशोके-
र्निपातितः ॥ नानुशोच्यस्ततःप्राज्ञैः पुण्यवान्स्वर्गतिंगतः ॥ ११ ॥ इत्युक्तोबाढमित्युक्त्वा बंदि
नःप्रेक्ष्यवंदकान् ॥ नाहंराजेतिनिर्भर्त्स्य शत्रुघ्नंभरतोब्रवीत् ॥ १२ ॥ ॥ ॥

सुखःबहुलदक्षिणः ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामराजवियोगेन रामस्यराज्ञश्चवियोगेन राज्यश्रीःराज्यलक्ष्मीः विधवास्वामिरहिता यया कैकेय्या कारणभूतया ॥ १३ ॥ १४ ॥ १५ ॥ नरैश्चितांपुरुषैः संयोजितां कृतामित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ विगाह्यस्नात्वा पौरजानपदाअपि उदकांजलिंददुरित्यन्वयः ॥ २० ॥ अत्रएतस्मिन्नव



पश्यशत्रुघ्नकैकेयीं दुर्नीतिंलोकनिंदितां ॥ रामराजवियोगेन राज्यश्रीर्विधवायया ॥ १३ ॥ इति ब्रुवाणोभरतो सभायांमंत्रिभिःसह ॥ मंत्रयित्वायथान्यायं चक्रेतस्यौर्ध्वदैहिकं ॥ १४ ॥ राजदेहमथारोप्य शिबिकांराजभृतिभिः ॥ नृपात्मजावनयतां विशदंसरयूतटं ॥ १५ ॥ चंदनागरुकाष्ठाद्यै श्चितांतत्रनरैश्चितां ॥ अलंकृतंराजदेहं तावारोपयतामथ ॥ १६ ॥ अथाश्वमेधिकानग्नीन्प्रणीयोद्दीप्यतेद्विजाः ॥ पात्राणिचयथास्थानं विन्यस्यजुहुवुर्घृतं ॥ १७ ॥ ततोभरतशत्रुघ्नौ पुरोहितमतेनतौ ॥ चक्रातेपितृसंस्कारं विघ्नंतौशोकमुत्थितं ॥ १८ ॥ तौविलापंविहायाथ दध्यतूरामसोदरौ ॥ विवेकाक्षालितेचित्ते ज्योतिर्नारायणाह्वयं ॥ १९ ॥ सरयूसरितंप्राप्य राघवावुदकांजलिं ॥ विगाह्यापित्रेददतुः पौराजानपदाअपि ॥ २० ॥ राजारामेणचत्यक्तां भरतःप्रेक्ष्यतां पुरीं ॥ नैच्छत्प्रवेष्टुंश्रेयोत्र मेनेप्रायोपवेशनं ॥ २१ ॥ विप्रस्तंधर्मपालाख्यो राजामात्योन्वबोधयत् ॥ प्रविवेशपुरींकृच्छ्रा दयोध्यांभरतस्ततः ॥ २२ अथाशौचात्ययेवीर श्चक्रेश्राद्धानिभक्तिमान् ॥ प्रादाद्द्विजेभ्योग्रामाग्र्यान् धनंजीवधनंबहु ॥ २३ ॥ ॥ ॥



सरे प्रायोपवेशनं अनशनव्रतं ॥ २१ ॥ २२ ॥ आशौचात्ययेसूतकापगमे ॥ २३ ॥ ॥ ॥ ॥ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ खनकैः खननकारिभिः अचीकरत् सम्यगतिमहत्तत्रत्यान् वृक्षादिकान् छित्वासुखेनैवगंतुंयोग्यंकारयामासेत्यर्थः ॥

अराजकमिदंराज्यं राजनंदननश्यति ॥ अभिषिच्यस्वर्हतेति प्रोचुःप्रकृतयोथतं ॥ २४ ॥ इ-
त्युक्तऊचेभरतः सत्यमस्त्यभिषेचनं ॥ किंतुज्येष्ठस्यरामस्य गुणश्रेष्ठस्यसर्वतः ॥ २५ ॥ रा-
मार्थंतस्यशिष्योहं चरिष्यामिव्रतंवने ॥ सकामास्यान्नकैकेयी राज्याकामातुराखला ॥ २६ ॥
एवंब्रुवाणंभरतं सर्वेप्रोचुःप्रहर्षिताः ॥ रामभक्तस्यतेवत्स संपदःसंतुसाध्विति ॥ २७ ॥ रामपा-
दांतिकंगंतुं सहपौरैःससैनिकैः ॥ शिल्पिभिःखनकैश्चाथ मार्गंसोचीकरद्द्रुतं ॥ २८ ॥ समातृकं
चभरतं निर्यातंपरिवार्यते ॥ पौराःसर्वेप्रभुंजग्मु र्निम्नमापइवस्वयं ॥ २९ ॥ अयुतेभंलक्षहयं
सरथाष्टसहस्रकं ॥ ययावसंख्यपादातं सैन्यंरामदिदृक्षया ॥ ३० ॥ अबलाअपिबालाश्च वृद्धा
श्चकिमुतापरे ॥ अहंप्रागित्युपाजग्मू रामपाददिदृक्षया ॥ ३१ ॥ मेघश्याममेघघोषं मेघवत्तापहा
रिणं ॥ द्रक्ष्यामोराममित्युच्चैः प्रहृष्टाःप्राद्रवन्वनं ॥ ३२ ॥ गंगायांसैन्यमाश्वास्य रामंरामानुजः
स्मरन् ॥ वसिष्ठाद्यैःपरिवृत श्चकारपितृतर्पणं ॥ ३३ ॥ भरतःश्रीमदांधोयं रामंप्रत्यवतिष्ठते ॥
रोत्स्यामीमंरामभक्त्या गुहस्तत्रेत्यमन्यत ॥ ३४ ॥ गुहःसोपायनोदृष्ट्वा भरतंकृतसंकथः ॥ तं-
शुद्धबुद्धिंविज्ञाय पूजयामाससादरं ॥ ३५ ॥ ॥ ॥ ॥

॥ २८ ॥ निम्नंनिम्नस्थलं ॥ २९ ॥ अयुतेभंदशसहस्रगजयुक्तं ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ रोत्स्यामिनिरुद्धंकरिष्यामि आसीनंस्थितं ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ वन्यैःवनसंभूतैःफलादिभिः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ नियम्यआज्ञयास्थापयित्वा आराद्दूरे ॥



कुत्रस्थितंससीतेन वनेमेस्वामिनागुह ॥ किमत्रलक्ष्मणश्चक्र इत्यपृच्छदसौगुहं ॥ ३६ ॥ राम-
स्यवार्तामार्ताय भरतायोक्तवान्गुहः ॥ वनवासंचरामस्य सौमित्रेःपरिदेवनं ॥ ३७ ॥ सफलां-
बुमितांवृत्तिं जटावल्कलबंधनं ॥ श्रुत्वासर्वमिदंशोका द्भरतोमूर्छितोपतत् ॥ ३८ ॥ आर्तोधिकं
मुहूर्तेन संज्ञांप्राप्यविलाप्यच ॥ इंगुदीवृक्षमागम्य स्मरन्राममभाषत ॥ ३९ ॥ ईदृशःपर्णप-
र्यंकः फलमूलोपजीवनं ॥ जगन्नाथस्यनाथस्य कथंनुभवितापुनः ॥ ४० ॥ वन्यैर्जलैश्चवर्तिष्ये
शयिष्येस्थंडिलेष्वहं ॥ अद्यप्रभृतिगुर्वर्थं सत्यमेतत्प्रतिश्रुतं ॥ ४१ ॥ लक्ष्मणार्थंचशत्रुघ्नः का-
र्यमेवंकरिष्यति ॥ आर्याभ्यांनगरेस्थेयं दैवंतत्रानुमोदतां ॥ ४२ ॥ एवंरामकथामग्नो निशांता
मत्यवर्तयत् ॥ सशत्रुघ्नोथभरतो मातृभिःपरिवारितः ॥ ४३ ॥ प्रातःसंध्यामुपास्याथ गंगांसभ
रतोतरत् ॥ चतुरंगंचतत्सैन्यं प्लवैर्नौभिश्चतारकैः ॥ ४४ ॥ दाशैर्गुहनियुक्तैस्तां संतीर्यभरतोन
दीं ॥ गुहाभिहितमार्गेण जननीभिःसमंययौ ॥ ४५ ॥ प्रयागंप्राप्यतत्सैन्यं नियम्यारात्ससोद
रः ॥ भरतोथभरद्वाजं प्राप्तवानभ्यवंदत ॥ ४६ ॥ रामंराज्यात्परित्याज्य त्रैलोक्यस्यैकनायकं ॥ ॥ ५३ ॥
किंविधित्सेससैन्योथ त्वमित्याहस्मतंमुनिः ॥ ४७ ॥ ॥ ॥ ॥

॥ ४६ ॥ परित्याज्यबहिर्वासयित्वा विधित्सेकर्तुमिच्छसि ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ विवेकं इयंकाइयंकाइत्यादिसंदेहोमम तस्मादियंकौसल्याइयमित्यादि विभेदमित्यर्थः ॥ ५३ ॥ ५४ ॥ असूत-

अनुतप्तोस्मिदुष्टायाः कैकेय्याःकैतवान्मुने ॥ पुरंनेष्यामिमेनाथ मितितंभरतोब्रवीत् ॥ ४८ ॥
रामानुजोसिधन्योसि स्वस्तितेस्त्वित्यथाब्रुवन् ॥ ससैन्यंतंभरद्वाज आतिथ्यायन्यमंत्रयत् ।४९।
आहूयविश्वकर्मादीन् कारयन्सर्वसंपदः ॥ वासुदेवप्रसादेन स्वर्गभोगान्व्यधान्मुनिः ॥ ५० ॥
यद्यदिच्छतियोयत्र भरतानुव्रजोजनः ॥ तंतेनतर्पयामास रामभक्त्याद्विजर्षभः ॥ ५१ ॥ प्रभा-
तेभरतोगंतुं ववंदेतंमहामुनिं ॥ अवंदतक्रमेणाथ कौसल्याद्याश्चतास्त्रियः ॥ ५२ ॥ आसांविवे-
कमाचक्ष्व मातॄणांतेनृपात्मज ॥ भरद्वाजेनभरत इत्युक्तःप्रत्यभाषत ॥ ५३ ॥ यापूर्वंवंदितवती
देवीयंदेवतोपमा ॥ रामविश्लेषतोदीना राममातेतिविद्धितां ॥ ५४ ॥ तस्याउपांतेतिष्ठंति सु-
मित्रेयंतपोधन ॥ पुत्रौलक्ष्मणशत्रुघ्नौ वेषासूतशुभव्रता ॥ ५५ ॥ लज्जयाधोमुखीयात्र दृष्टाराम
प्रवासिनी ॥ कैकेयीममातेय मित्येवंभरतोब्रवीत् ॥ ५६ ॥ निमित्तमात्रंकैकेयी वनवासेजग-
त्प्रभोः ॥ देवकार्यार्थयातोय मितितंमुनिरब्रवीत् ॥ ५७ ॥ प्राप्यानुज्ञांभरद्वाजा च्छ्त्वारामाश्रमं
ततः ॥ सयथौयमुनांतीर्त्वा चित्रकूटंचसानुगः ॥ ५८ ॥ नियम्यारात्ससैन्यानि सहितःश्वशुरो
हितैः ॥ तद्धवेशाश्रमपदं रामंपश्यन्मुनीनिह ॥ ५९ ॥ ॥ ॥

सूतवती ॥ ५५ ॥ ५६ ॥ निमित्तमात्रंरामप्रवासकारणभूता ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कोविदारध्वजंभरतं ॥ ६० ॥ ६१ ॥ स्मितः स्मितयुक्तः ॥ ६२ ॥ ६३ ॥ हेमचित्रप्रहरणैः स्वर्णवर्णातिविचित्रायुधैः हेमनिर्मितचित्रसमैरायुधैरिति-
वा । तनुत्रैःकवचैः तनुत्रंवर्मदंशनमित्यमरः ॥ ६४ ॥ प्रागुदक्प्रवणेपूर्वदिशमुत्तरांप्रतिकिंचिन्नम्रे ॥ ६५ ॥ उटजपर्णशालायां ॥ ६६ ॥ ६७ ॥



दृष्ट्वासैन्यंरजोराजिं सालमारुह्यलक्ष्मणः ॥ कोविदारध्वजंप्राप्तं ज्ञात्वाकोपमुपाददे ॥ ६० ॥ कै-
केयीतनयंदृष्टं ससैन्यंप्रत्यवस्थितं ॥ अनुज्ञांदेहिमेहंतु मितिसौमित्रिरब्रवीत् ॥ ६१ ॥ शांतो-
नदृप्तोभरतः शांतस्त्वंभवलक्ष्मण ॥ अस्मान्द्रष्टुमवाप्तोसा वितिरामोब्रवीत्स्मितः ॥ ६२ ॥ भ
रतोभगवत्पार्श्वे मेतस्मिन्नंतरेगतः ॥ पर्णशालांविशालांता मपश्यत्त्रिदिवोपमां ॥ ६३ ॥ हेम-
चित्रैःप्रहरणै स्तनुत्रैश्चोपशोभितां ॥ अरिसंघैरनाधृष्यां मृगैःसिंहगुहामिव ॥ ६४ ॥ प्रागु-
दक्प्रवणेदेशे वेदवेदविदांगुरोः ॥ जाज्वल्यमानंज्वलनं भरतोमुहुरैक्षत ॥ ६५ ॥ तत्रोटजेज-
टामौलिं चारुचीरमवैक्षत ॥ ससीतालक्ष्मणंरामं परमानंदमंदिरं ॥ ६६ ॥ नतृप्यतिस्मतंदृ
ष्ट्वा भरतोनैतदद्भुतं ॥ अनंतकालंपश्यंतो यंनतृप्यंतियोगिनः ॥ ६७ ॥ पादपद्मेनिपतितं सं-
तप्तंमात्तहेलनात् ॥ आशिश्लेषाथभरतं भक्तंतंभक्तवत्सलः ॥ ६८ ॥ ससर्वज्ञोपिसर्वेशः पप्रच्छ
कुशलंपितुः ॥ अन्यांश्चविविधानर्थां ल्लोकवृत्तिंविडंबयन् ॥ ६९ ॥ प्रोवाचप्रांजलिर्दीनः प्ररुदन्
भरताग्रजं ॥ स्वर्गतोनःपितानाथ रामरामेतिकीर्तयन् ॥ ७० ॥ ॥ ॥

॥ ६८ ॥ ६९ ॥ ७० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥७१॥ ७२ ॥ ७३ ॥ इंगुदपिण्याकं इंगुदीवृक्षफलात्मकंपिंडं । स्वान्नैःस्वविहितान्नैः वनादिवासंग्राम्यान्नादिनभवतीतिधर्मंप्रदर्शयन्नित्यर्थः ॥ ७४ ॥

उदकंदीयतांतस्मै प्रियैर्दत्तंप्रियंभवेत् ॥ सर्वेषांसर्वतःश्रेष्ठ त्वयादत्तंतुकिंपुनः ॥७१॥ आकर्ण्य

राज्ञोमरणं सदासर्वप्रवर्तकः ॥ अशोकलेशोपिविभु र्विललापविडंबयन् ॥ ७२ ॥ सीतापतिरु

पागम्य सीतालक्ष्मणसंयुतः ॥ मंदाकिनींविगाह्यात्र जनकायोदकंददौ ॥७३॥ दर्भेष्विंगुदपि

ण्याकं पित्रेतान्युप्तवान्विभुः ॥ पितृदेवान्पुमान्स्वान्नैः पूजयेदितिदर्शयन् ॥ ७४ ॥ तत्रप्रकृत

यःसर्वाः सेनाःपौराश्चसत्वरं ॥ प्राप्यंलोकेशमालोक्य यांतिस्मकृतकृत्यतां ॥ ७५ ॥ कौसल्या

प्यथकल्याणी शोकेनपरिशोषिता ॥ समंराज्ञीभिरन्याभि र्देवंसंदृश्यनिर्वृता ॥ ७६ ॥ मातःस

प्रेमबाष्पास्ता जगृहुस्त्वंदत ॥ जानकीलक्ष्मणश्चाथ ताश्चाशीर्भिरपूजयन् ॥ ७७ ॥ ततःशो

काभिभूतांस्ता मतीत्यरजनींतदा ॥ भानुर्नभसिभातिस्म राघवोजनसंसदि ॥ ७८ ॥ किंनुवक्तये

षभरतः प्रतिवक्ष्यतिकिंप्रभुः ॥ इतिस्थितेजनेजोषं भरतोराममब्रवीत् ॥ ७९ ॥ अनुग्रहायनः

स्वामि न्स्वामयोध्यांवनाद्व्रज ॥ इमामनाथांधरणीं विश्वपालकपालय ॥ ८० ॥ इत्युक्तोभगवा

नूचे पितुराज्ञाकरावयं ॥ सत्थितायवसामोत्र त्वंपालयधरामिति ॥ ८१ ॥ प्रणामांजलिबाष्पा

णि कुर्वाणोभरतस्तदा ॥ क्रियासमभिहारेण रामंप्रोचेसगद्गदं ॥ ८२ ॥ ॥ ॥

॥ ७५ ॥ संदृश्यसम्यक्दृष्ट्वा निर्वृतासंतुष्टाभवत् ॥ ७६ ॥ ७७ ॥ ७८ ॥ जोषंतूष्णीं ॥ ७९ ॥ ८० ॥ ८१ ॥ क्रियासमभिहारेणपुनःपुनरित्यर्थः ८२

सर्वंकषासर्वानर्थकारिणी ॥ ८३ ॥ चिकर्तिपुखंडयितुमिछंतौ प्रतिभाममबुध्दिरेव ममैवालोच्य तवप्रीत्यास्पदत्वं स्त्रीवधे नभविष्यतीति तूष्णींस्थितामित्य
र्थः ॥ ८४ ॥ आत्मानंस्वस्वरूपमपि दिशेतद्दद्यात् ॥ ८५ ॥ ८६ ॥ ८७ ॥ योगिमृग्यंयोगिभिरन्वेषणीयं सेवेइतिलोडुत्तमपुरुषैकवचनं । संवितंकर



त्वांतुत्यक्त्वापार्तिंहत्वा दत्वामेपरितापितं ॥ कृत्वासर्वजगद्दुःखं मातासर्वंकषामम ॥ ८३ ॥ चिक
र्तिषूशिरस्तस्या भुजौमेखड्गलंपटौ ॥ प्रतिभावारितवती त्वत्प्रीतिक्षतिशंकिनी ॥ ८४ ॥ अयि
नाथजगन्नाथ भक्तस्यागःक्षमस्वमे ॥ भक्तवत्सलभक्तानां नन्वात्मानंदिशेद्भवान् ॥ ८५ ॥ स्त्री
षुनासत्यदोषोस्ति पितानोनाविवेदतत् ॥ राजर्षिर्नमयादूष्यो ममैवेदमघंमहत् ॥ ८६ ॥ भूर्दत्ता
भूभृतायन्मे दासस्तेर्पितवानहं ॥ लोकन्यायंचलोकेश तस्मात्तेराज्यपालनं ॥ ८७ ॥ नयास्य
सिपुरंचेत्त्वं नयास्यामीतिसर्वथा ॥ योगिमृग्यंपदाब्जंते सेवेसौमित्रिवत्सदा ॥ ८८ ॥ एवंब्रुवाणे
भरते सर्वाःप्रकृतयःप्रभुं ॥ मुनयोमातरश्चैव सबाष्पाक्षाययाचिरे ॥ ८९ ॥ भरतंभगवानूचे श
त्रुघ्नेनपुरींव्रज ॥ सलक्ष्मणःसतांप्रीत्यै व्रजेयंदंडकानिति ॥ ९० ॥ क्वगुर्वाज्ञासर्वगुरो धर्मःकोसंगि
नस्तव ॥ गछदेवपुरींशीघ्र मितिजाबालिरब्रवीत् ॥ ९१ ॥ गुरुदेवार्चनंधर्मो ननुदेवविनिश्चितः ॥
इतिक्रुध्दइवप्रोचे रामोलोकान्विडंबयन् ॥ ९२ ॥ अनुतिष्ठासिधर्मंचेद्राजन्राज्यमराजकं ॥ पू
र्वजैःपालितंपाल्य मितिब्रह्मसुतोब्रवीत् ॥ ९३ ॥ ॥ ॥ ॥

वाणीत्यर्थः ॥ प्रार्थ्यंप्रार्थनीयं ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ब्रम्हसुतोवसिष्ठः ॥ ९३ ॥ ॥ ॥

॥ ९४ ॥ उपवेक्ष्यामिउपवासंकरिष्यामि समीपएवस्थास्यामि नसर्वथागामिष्यामीत्यर्थः ॥ ९५ ॥ ९६ ॥ स्थंडिलमंडलेकुशानास्तीर्यइतिब्रुवाणमित्य

मुनीनामुतमातृणां पौराणामपियाचनं ॥ रामोनगणयत्येव भरतोदुःखितोब्रवीत् ॥ ९४ ॥ आ-
र्यंप्रत्युपवेक्ष्यामि यावन्मेसंप्रसीदति ॥ शयिष्येहंनिराहारः पुरंयावद्व्रजेत्प्रभुः ॥ ९५ ॥ सर्वथा
करणीयाचे द्वर्वाज्ञातेजगद्गुरो ॥ भवद्दासःकरोम्येनां भवांस्तुनगरींव्रजेत् ॥ ९६ ॥ इतिब्रुवाण-
मास्तीर्य कुशान्स्थंडिलमंडले ॥ स्मित्वाकारुणिकःप्रोचे भरतंभरताग्रजः ॥ ९७ ॥ चतुर्दशेव
त्सरेहं वत्सयास्यामिनःपुरीं ॥ सत्यमित्युदितोपीशं ययाचेभरतःपुनः ॥ ९८ ॥ एतस्मिन्नंतरे-
रामं संप्रापुःपरमर्षयः ॥ देवोपदेवैःसंमंत्र्य दशग्रीववधार्थिनः ॥ ९९ ॥ तेप्रोचुर्भरतंतत्र नेदा-
नींपुरमेत्ययं ॥ कृतकार्यविशेषस्तु पुरींरामोव्रजेदिति ॥ १०० ॥ भरतंराज्यकर्तारं लोटंतंधरणी
तले ॥ याचमानंपुनर्दृष्ट्वा वसिष्ठोराममब्रवीत् ॥ १०१ ॥ भक्तायभरतायत्वं देवदेहिस्वपादुके ॥
पादुकेनित्यमावंद्य पालयेद्भरतोभुवं ॥ १०२ ॥ वसिष्ठवाक्यमाकर्ण्य वैकुंठःपादुकेददौ ॥ सौव-
र्णेतेदधन्मूर्ध्नि प्रांजलिर्भरतोब्रवीत्॥ १०३ ॥ नगरंनप्रवेक्ष्यामि ॥ यावदागमनंतव ॥ प्रवेक्ष्या
म्यग्निमप्रेक्ष्य वत्सरेत्वांचतुर्दशे ॥ १०४ ॥ ॥ ॥ ॥

न्वयः । स्मित्वास्मितंकृत्वा ॥ ९७ ॥ यास्यामिआगमिष्यामि ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ तेप्रसिद्धेपादुके ॥ १०३ ॥ १०४ ॥

प्रतिश्रवौ द्वेप्रतिज्ञे॥ १०५॥ १०६॥ १०७॥ उपास्तसेवितवान्व्रतीफलाहारादिव्रतवान् ॥ १०८॥ शैलेंद्रेचित्रकूटेआश्रितंआस्थितं अवस्थानंकृतवंतमित्यर्थः॥ ॥१०९॥ व्यधितचकार अलिकेललाटे ललाटमधिकंगोधिरित्यमरः । कवरींकचभारं कबरीकेशपाशोथबमरः ॥ ११०॥ १११ ॥ वायसःकाकात्मकः॥

इतिप्रतिश्रवौकृत्वा प्रणम्यचजगत्प्रभुं ॥ मातृभिर्बाष्पनेत्राभि र्भरतःसानुगोययौ ॥ १०५ ॥ भरद्वाजंसमामंत्र्य भरतःस्त्वरितोगतः॥ गंगामतीत्यसंप्राप्तः स्वपुरींरहितांश्रिया ॥ १०६ ॥ प्रवेश्य मातॄर्नगरीं नंदिग्राममवापसः॥ सशत्रुघ्नोवसंस्तत्र पालयामासमेदिनीं ॥ १०७॥ रामस्यपादुकायु- ग्मं तत्रसिंहासनेर्पितं॥ सितातपत्रव्यजनै रुपास्तभरतोव्रती ॥ १०८॥ रममाणेनरामेण रमण्यारम णीयया॥ वनेषुपुष्पपूर्णेषु शैलेंद्रेसुखमास्थितं॥ १०९॥ तिलकंलोकतिलकः प्रियायाव्यधितालिके॥ पूरयासपुष्पैश्च कबरींकमलेक्षणः॥ ११० ॥ वनमालाविलसितौ लीलाकुवलयान्वितौ॥ आनंदेतांय थाकामं दंपतीतौवनेवने ॥ १११ ॥ सदाविनिद्रेदेवेशो योगनिद्रामुपेयुषि॥ कदाचिदाययौतत्र वाय सोवासवात्मजः ॥ ११२॥ आसुरंभावमाश्रित्य भासुरंजानकीस्तनं॥ तुंडेनचंडःपस्पर्श बलिभुग्ब लिमाद्यसः ॥ ११३ ॥ विभीषमाणोपियदा नमुमोचस्तनंबली ॥ तदातस्मैतृणंकिंचि त्पाक्षिणोप्रा- क्षिपत्प्रभुः ॥ ११४ ॥ तेनजाज्वल्यमानेन तृणेनासावनुद्रुतः॥ त्रिलोकींपर्यगात्काकः शरणार्थीभया तुरः ॥ ११५ ॥ रामायनमइत्युक्त्वा ब्रह्मरुद्रादिभिःसुरैः ॥ कालितःस्वालयात्काको रामविक्रम भीरुभिः ॥ ११६ ॥ ॥ ॥ ॥ ॥

॥ ११२ ॥ बलिंबाहिर्निक्षिप्तंबलिहरणान्नं अद्यभक्षयित्वा ॥ ११३ ॥ ११४ ॥ पर्यगात्पर्यटितवान् ॥ ११५ ॥ कालितःद्रावितोभूत् ॥ ११६ ॥ ॥

अविंदन् अलभमानः शरणंरक्षकंपुरुषं शरणंगृहरक्षित्रोरित्यमरः ॥ ११७ ॥ धरांतरचरःधरांतरचरनामकः ॥ ११८ ॥ अशातयत् पातयामास ॥ ॥ ११९ ॥ खलावलेपखंडनस्थिरावतारविभ्रमः खलानांदुष्टानांअवलेपोदर्पः दर्पोवलेपोवष्टंभइत्यमरः । तस्यखंडनेस्थिरःअवताराविभ्रमःअवतारविलासोयस्यसतथोक्तः । अवेक्षतेस्मऐक्षत् ॥ १२० ॥ सीतामुखाब्जस्मितभानुभानुः सीतामुखकमलविकासकरणेभानुभानुः सूर्यकिरणायितः सत्कैरवानंददचंद्रभानुः सज्जनाख्यकैरवकुसुमानंदकरणेचंद्रभानुः चंद्रज्योत्स्नायितः रक्षस्तृणौघक्षपणस्फुलिंगः राक्षसाख्यतृणसमूहभस्मीकरणेस्फुलिंगः अग्निकणायितः कटाक्षमोक्षःकटाक्षविलासः रराजविरेजे ॥ १२१ ॥ ॥ इत्ययोध्याकांडटीकायां विद्याभूषणार्यकृतौ द्वादशःसर्गः ॥ १२ ॥ अयोध्याकांडंसमाप्तं ॥ ॥ श्रीरामचंद्रार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥

नाविंदच्छरणंदीनः स्त्रैलोक्येससुरासुरे ॥ जिजीविषुर्जीवितार्थं तमेवशरणंययौ ॥ ११७ ॥ देवैर्दत्तवरःपक्षी धरांतरचरःपुरा ॥ दीनंमांपाहिदेवेति पपातहरिपादयोः ॥ ११८ ॥ नजघानदयालुस्तं तस्यनेत्रमशातयत् ॥ तदाप्रभृतिसर्वेपि काकाएकाक्षतांययुः ॥ ११९ ॥ खलावलेपखंडन स्थिरावतारविभ्रमः ॥ अवेक्षतेस्मजानकी मुखेंदुमिंदिरापतिः ॥ १२० ॥ सीतामुखाब्जस्मित भानुभानुः सत्कैरवानंददचंद्रभानुः ॥ रक्षस्तृणौघक्षपणस्फुलिंगो रराजरामस्यकटाक्षमोक्षः ॥ ॥ १२१ ॥ ॥ इति श्रीसंग्रहरामायणे अयोध्याकांडे रामांके नारायणपंडिताचार्यकृतौ द्वादशः सर्गः ॥ १२ ॥ ॥ अयोध्याकांडःसमाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ इति श्रीमत्संग्रहरामायणे अयोध्याकांडः समाप्तः ॥

# ॥ अथ श्रीसंग्रहरामायणे अरण्यकांड। प्रारंभः ॥

॥ श्रीगुरुभ्योनमः ॥ रावणोत्पत्यादिकंवक्तुं पीठिकांकरोति ॥ पुरापुलस्त्यइत्यादिना ॥ विलोभयंती: विलोभनंकुर्वती: एत्यस्वसमीपमागत्य ॥ १ ॥
अत्रअस्यसमीपे इदंएवंशापप्रदानं ॥ २ ॥ तंपुलस्त्यंतात्प्रियात्वंपुलस्त्यभार्यात्वं विश्रवसंविश्रवसनामकं ॥ ३ ॥ तस्माद्विश्रवसोमुनेः यःवैश्रवणः ॥ ४ ॥
हेतेःहेतिनामकस्यराक्षसस्य विधात्राब्रह्मणाविहितस्यनिर्मितस्य तस्याविद्युत्केशनामकस्यराक्षसस्य अस्यसुकेशनामकस्यराक्षसस्य सुमालिमाल्याव्हय

॥ श्रीगुरुभ्योनमः ॥ पुरापुलस्त्यःपरमेष्ठिपुत्र स्तन्वंस्तपोमेरुगिरेःसमीपे ॥ विलोभयंतीर्मुहु
रेत्यकन्या विलोक्यकिंचित्कुपितोबभाषे ॥ १ ॥ याकन्यकामामवलोकयेत सागर्भिणीस्यादिति
वाक्यबाणात् ॥ कन्यानभीताःपुनरत्रजग्मु र्विवेदनेदंतृणबिंदुपुत्री ॥ २ ॥ साशुद्धभावापिनरेंद्र
कन्या दृष्ट्वाकदाचिन्मुनिमापगर्भं ॥ प्रसाद्यतंप्राप्यचतत्प्रियात्वं सूतेस्मसाविश्रवसंकुमारं ॥ ३ ॥
तस्मात्सुतंवैश्रवणंचभार द्वाजस्यपुत्रीसुषुवेसुगात्री ॥ ब्रह्मप्रसादाद्दिगधीश्वरत्वं यःपुष्पकाख्यं
चविमानमाप ॥ ४ ॥ हेतेर्विधात्राविहितस्यविद्यु त्केशःसुतस्तस्यसुकेशआसीत् ॥ त्रयोत्रपुत्राः
किलमाल्यवांश्च सुमालिमाल्याव्हयकौचघोराः ॥ ५ ॥ ब्रह्माहितैर्ब्रह्मवरादवध्यै र्लंकालयैरुत्कट
पुत्रपूगैः ॥ त्रिभिस्त्रिलोकीक्षपणैःप्रभग्ना प्रापंतशर्वंशरणंसुरेंद्राः ॥ ६ ॥ तानब्रवीत्सुरिमतामिंदु
मौलि र्मयानवध्यारजनीचरास्ते ॥ विष्णुंशरण्यंशरणंप्रयामःस्वामीहिनःशर्मविधास्यतीति ॥ ७ ॥

कौ सुमालिमालीतिप्रख्यातौ ॥ ५ ॥ ब्रह्माहितैःब्राह्मणादीनामत्यंतवैरिभिः माल्यवान्सुमालिमालीचेतित्रिभिः त्रिलोकीक्षपणैः त्रैलोक्यनाशकरैः
प्रापंतमापुः ॥ ६ ॥ वध्याःहंतुंशक्याःशर्मसुखं ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥।८॥युयुत्सुः युद्धंकर्तुकामः सिंधुरेंद्राः गजेंद्राः ॥ ९ ॥ गोवर्षवान् बाणवर्षवान् अन्यत्रजलवर्षवानित्यर्थः। स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजलेगौरित्यमरः ॥ १० ॥ नेशुः नष्टाबभूवुः पिशिताशनाः राक्षसाः ॥ ११ ॥ अक्रांतसुरां निराकृतदेवसमूहां ततानचकार कृत्वाछित्वा ॥ १२ ॥ परानशत्रून् सुरा

दुग्धाब्धिशय्यंशरणंप्रपन्नाः प्रोचुःसुराःप्रांजलयःप्रणम्य ॥ सुकेशसूनून्दमयाधिनाथ लोकान्स पालान्परिपालयेति ॥ ८ ॥ समीक्ष्यदेवव्यसनंसदेवो युयुत्सुरायाद्विहगेंद्रवाहः ॥ तेराक्षसारुक्ष गणाअवापु स्तंसिंधुरेंद्राइवसिंहराजं ॥ ९ ॥ सशंखचक्रीविबभौविहंगे पिशंगवासाःप्रदिकृष्टशा र्ङ्गः ॥ गोवर्षवानिंदुरवादधानो गिरौतटित्वानिवसेंद्रचापः ॥ १० ॥ अवाप्यनेशुःशलभायथाग्निं यथाग्नयःपूर्णमहोमहाब्धिं ॥ यथाब्धयःसंप्रलयार्कतापं तथामहेशंपिशिताशनास्ते ॥ ११ ॥ मा लीबलीमाधवमभ्युपेत्य विक्रांतिमक्रांतसुरांततान ॥ अपातयत्तालसमस्यतस्य कृत्वाशिरःपक्कफ लंयथेशः ॥ १२ ॥ सुमालिनामाल्यवताचसाकं पराद्रुतान्वीक्ष्यपरान्परात्मा ॥ सुराम्हृताब्धिप रिभासुरस्तं मुखेंदुनानंदयदिंदिरेशः ॥ १३ ॥ ततःसुमालीसुरसूदनःस्या द्दौहित्रइत्युग्रमनोरथे न ॥ रसातलात्प्राप्यरसांनिनाय पुलस्त्यपुत्रांतिकमात्मपुत्रीं ॥ १४ ॥ लावण्यपण्येनमनोमहर्षेः क्रीत्वासुतानापचकैकसीसा ॥ दशाननंप्रागथकुंभकर्णं विभीषणंशूर्पनखीमुपांत्यां ॥ १५ ॥ ॥

मृताब्धि देवाख्यक्षीरसमुद्रं ॥ १३ ॥ सुरसूदनःदेवहंता दौहित्रःपुत्रीपुत्रः रसांप्राप्य भूमिंप्रत्यागत्य पुलस्त्यपुत्रांतिकं विश्रवसःसमीपं ॥ १४ ॥ कैकसीराक्षसी उपांत्यांविभीषणात्पूर्वं कुंभकर्णादनंतरजाताउपांत्याताां ॥ १५ ॥ ॥ ॥ ॥ ॥

अतनिष्ठवीर्याःबहुपराक्रमाः ॥ १६ ॥ उत्कृत्यसंछिद्य ॥ १७ ॥ चिकर्तिषुंखंडयितुमिछंतं धाताब्रम्हा ॥ १८ ॥ प्ररोहंपुनश्चोत्पत्तिं ॥ १९ ॥ ततः
विरिंचात् तपस्यन्तपःकुर्वन् ॥ २० ॥ देव्यासरस्वत्या भ्रंशितगीःव्यत्यस्तीकृतवाक् सुप्तिंनिद्रा ॥ २१ ॥ २२ ॥ मेघनादं मेघनादनामकं ॥ २३ ॥

विलोक्यधन्यंधनदंसपत्न्याः सुतंस्वमात्राप्रतिचोदितास्ते ॥ तपस्यतिष्ठन्नतनिष्ठवीर्याः सहोदरा-
दिव्यसमायुतंच ॥ १६ ॥ आहारहीनःसततंदशास्यः ससाहसादष्टसहस्रकांते ॥ एकैकमुत्कृत्य
शिरःशरीरा ज्ज्वाज्वमानेज्वलनेजुहाव ॥ १७॥ पूर्णेसमानांदशमेसहस्रे चिकर्तिषुंतंदशमंशिरश्च ॥
मामेतिधाताविनिवार्यतात वरंवृणीष्वेतिहसन्जगाद ॥ १८॥ सुरासुरैरप्यहियक्षरक्षः पतत्रिभिः
कैश्चिदवध्यभावं ॥ ददौप्ररोहंचहुताननानां सवीरवर्यायवरंविरिंचः ॥ १९ ॥ एकेनपादेनसदैव
तिष्ठन् दधन्मुकुंदंहृदयारविंदे ॥ तपस्तपस्यन्हरिधर्मनिष्ठो विभीषणःप्रापवरंवरीयान् ॥ २० ॥
द्वंद्वाख्यदुःखंसहमानउग्रः सकुंभकर्णस्तपसाचिरेण॥देव्यातदाभ्रंशितगीःसुरार्थं सुप्तिश्चिरायास्तु
ममेत्यवोचत् ॥ २१ ॥ तथेत्युदाहृत्यगतेब्जयोनौ सभ्रातृकोसौविचरन्दशास्यः ॥ नीत्याप्रहस्त
स्यसुमालिनश्च लंकालयोभूत्धनदंप्रकाल्य ॥ २२ ॥ मंडोदरीनाममयस्यपुत्री बभूवभार्यादशकंध
रस्य ॥ यामेघनादंसुषुवेसुरारिं वीचीमहाब्धेरिवकालकूटं ॥ २३॥ निद्रांविनिद्रांसमियायविद्यु ज्जि
व्हापतिस्तत्रसकुंभकर्णः ॥ गंधर्वपुत्रींसरमामवाप्य विभीषणोभागवतोत्ररेमे ॥ २४ ॥ ॥

विनिद्रांबहुलां विद्युज्जिव्हापतिः विद्युज्जिव्हानामिकायाः भर्ता सरमांसरनामामिकां ॥ २४ ॥ ॥ ॥ ॥

॥ २५ ॥ पर्वतेंद्रंकैलासं तदंघ्रिभग्नः रुद्रांघ्रिणापर्वतेनिपीडिते स्वयमधस्तात्पर्वतंवहन् तेनैवकारणेनभग्नःसन् रवणादाक्रोशकरणात् रावणत्वादाक्रोशहे तुत्वात् ॥ २६ ॥ देवमायांलक्ष्म्यवतारभूतां त्वन्मृतयेतवमरणार्थं पुनःस्यामवतीर्णास्यां ॥ २७ ॥ वंश्यःवंशेअवतीर्णः अनरण्येन अनरण्यनामकेनरा

गोब्राह्मणानांवधबद्धदीक्षो जेष्यंस्त्रिलोकींधनदंविजित्य ॥ सयक्षलक्षाणिबहूनिहत्वा दशाननः
पुष्पकमाजहार ॥ २५ ॥ गर्वेणशर्वस्यसपर्वतेंद्र मुद्धर्तुकामोथतदंघ्रिभग्नः ॥ स्वाद्रावणाख्यंरव
णादवाप घोरःप्रजानामपिरावणत्वात् ॥ २६ ॥ हिमालयेवीक्ष्यसदेवमायां कन्यांपरांवेदवतींप्र
गृह्य ॥ शप्तस्तयात्वन्मृतयेपुनःस्या मित्थंज्वलंतंज्वलनंविशंत्या ॥ २७ ॥ मरुत्तदुष्यंतमुखान्म
हीशान् पराजितोस्मीतिसवादयित्वा हंताहरिस्तेममवंश्यइत्थं शप्तोनरण्येननिषूदयंस्तं ॥ २८ ॥
युध्वासमसप्ताहमपास्यकालं रसातलेनागकुलंविजित्य ॥ निवातवर्माख्यनिबद्धसख्यो जडीचका
राथजलेशपुत्रान् ॥ २९ ॥ अक्षोहिणीभिःसहराक्षसानां सकुंभकर्णःससुतोदशास्यः ॥ मधुंपुरस्कृ
त्यमहच्चकार महेंद्रमुख्यैरमरैःसुयुद्धं ॥ ३० ॥ महेश्वरस्याथमखैर्महात्मा समेघनादोयुधिमेघवाहं ॥
बबंधनाम्नेंद्रजिदासतस्मा द्ब्रह्माज्ञयामुंचदमुंचकृछ्रात् ॥ ३१ ॥ विंशद्भुजःसोथसहस्रहस्तं प्रत्युज्ज
गर्जार्जुनमभ्युपेत्य ॥ विष्णोर्वरेणाप्रभविष्णुनैष बबंधतंब्रह्मवरादजेयं ॥ ३२ ॥ पुलस्त्यवाचापुनर
र्जुनेनमुक्तःसलीलामृगवद्दशास्यः ॥ तथाप्यनिर्विण्णमतिर्बबाधे लोकान्यथाक्षुद्रमृगान्मृगारिः ३३

ज्ञा ॥ २८ ॥ कालंयमं निवातवर्माख्यनिबद्धसख्यः निवातवर्मनामकैरसुरैःकृतमैत्रः ॥ २९ ॥ ३० ॥ मेघवाहंइंद्रं अमुंचइंद्रंच ॥ ३१ ॥ अर्जुनंकार्त-
वीर्यार्जुनं अप्रभविष्णुः प्रभवंपराभवं प्रापयितुमशक्यः ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥ ॥

सांध्यंकर्मसंध्यावंदनादिकर्म चतुःसिंधुषुचतुर्षुसमुद्रेषु वालीप्रतिदिनमपिसंध्योपास्त्यादिकंचतुःसमुद्रेष्वपि कुर्यामितिनियमवान् । कदाचित कार्सिगाश्रित समुद्रतीरेसंध्याकरणसमये युत्धार्थीनिरावणे समागतेसातितंतदैव कक्षेनिक्षिप्यततःअन्यसमुद्रतीरंप्रतिपपातेत्यर्थः । भाववलात् अनुग्रहातिशयबला त् विहंगभर्तागरुडः ॥ ३४ ॥ तस्यबलेः दौवारिकः द्वारपालत्वेनास्थितः ॥ ३५ ॥ त्रिकोटिरूपः अनेकरूपःअस्यवासुदेवस्यवायुश्च मुष्टिप्रहारंदत्वाराव

सांध्यंचतुःसिंधुषुकर्मकुर्वन् निक्षिप्यकक्षेविजिगीषुमेनं ॥ वालीहरेर्भावबलात्पपात विहंगभर्तेवभु जंगमाशु ॥ ३४ ॥ बलिंजिगीषुंकिलरावणंतं चिक्षेपदूरेयुतयोजनांते ॥ पदांगुलीमात्रतएवदे वो दौवारिकस्तस्यहरिर्दयालुः ॥ ३५ ॥ सवासुदेवःकपिलाभिधानो मुष्टिप्रहारान्निरपातयत्तं ॥ युयुत्सुमंभोधितटेदशास्यं त्रिकोटिरूपोस्यसुतश्चवायुः ॥ ३६ ॥ नरावणंहंतुमलंजगत्यां विष्णुं विनाकश्चननिश्चयोयं ॥ विनासहस्रांशुमलंघनीयं महांधकारंधुनुयात्कएव ॥ ३७ ॥ ववौनवा- तोतितरांपुरोस्य बभौनभानुःकटुकंकदाचित् ॥ नवन्हिरन्हायददाहहंत तद्भूविजृंभान्नियतंसम- स्तं ॥ ३८ ॥ सयक्षरक्षोमनुजाहिदैत्य गंधर्वनारीःसहदानवीभिः ॥ विभीषणेनैवनिवारितोपि ज हारहासत्कुलजांगनाश्च ॥ ३९ ॥ घनस्तनीनांतनुमध्यमानां शुकालपानांशुभलोचनानां ॥ चंद्रा ननानांनयनाननेभ्यः श्वासाश्रुभिर्वन्हिसमैर्बभूवे ॥ ४० ॥ हाताततहावल्लभहाविधात देहांतरंदेह्य चिरान्नइत्थं ॥ संक्रंदितंतत्पुरिसुंदरीणां नराशनानांचकृपांचकार ॥ ४१ ॥ ॥ ॥ ॥ ५९ ॥

णं पातयामासेत्यर्थः ॥ ३६ ॥ धुनुयात् नाशयेत् ॥ ३७ ॥ अन्हायशीघ्रं ॥ ३८ ॥ ३९ ॥ नयनाननेभ्यः निर्गतैरितिशेषः । बभूवेआविर्भूतमित्यर्थः ॥ ४० ॥ तत्पुरिरावणनगरे ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आश्लिष्टवत्यांहंतीत्याद्यन्वयः ॥ ४२ ॥ त्रिलोकीसरसींत्रैलोक्यनामकंसरः सत्पाद्मिनींसात्विकसमूहाख्यपद्माकरं क्षोभयते क्षुब्धंआलोडितंकुर्वते ॥४३॥ आतंकिनःभीतियुक्तान् ॥ ४४ ॥ अथसरामःखरमूखमूर्खकुलप्रमापनाख्यं खरदूषणादिराक्षसकुलवधनामकं भुवनरसकरंलोकानांसुखप्रदं । दशमुख-

संक्रंदतोर्हंतिशिशुंस्वपित्रो राश्लिष्टवत्यांतरुणंतरुण्यां ॥ गामाग्निहोत्रींयवसोपहूतां कोन्योन्नृशंसो दशवक्रतुल्यः ॥ ४२ ॥ एवंत्रिलोकींसरसींविगाह्य सत्पाद्मिनींक्षोभयतेखलाय ॥ मत्तायमांसाशिमतंजगाय चुकोपचंडःकिलरामसिंहः ॥ ४३ ॥ सचित्रकूटेवसतोमुनींद्रा नातंकिनोरावणकिंकरेभ्यः ॥ संभ्रांतचित्तान्द्रवतोविलोक्य दयांदयालुर्विपुलांचकार ॥ ४४ ॥ दशमुखवधनाट्यपूर्वरंगं खरमुखमूर्खकुलप्रमापणाख्यं ॥ भुवनरसकरंविधातुमाया द्रुतमथदंडकमंडलंसरामः ॥४५॥

इति श्रीसंग्रहरामायणे अरण्यकांडे रामांके पंडिताचार्यकृतौ प्रथमःसर्गः ॥ १ ॥ ॥

श्रीः ॥ महर्षिष्वपयातेषु चित्रकूटाद्विनिर्गतः ॥ ससीतालक्ष्मणःप्राया दत्रेराश्रममश्रमः ॥ १ ॥ जगतांपितरौपश्य न्नत्रिर्युक्तोनसूयया ॥ समाजयामासभृशं कृतार्थोभक्तिपूरितः ॥ २ ॥ पृष्टानसूययातत्र प्रोवाचपरमेश्वरी ॥ आत्मस्वयंवरकथां रामवीर्यप्रकाशनीं ॥ ३ ॥ अत्रिपत्न्या तदादत्तै स्रगाकल्पोपलेपनैः ॥ अलंकृताररराजालं देवीप्रकृतिशोभना ॥ ४ ॥ ॥

वधनाट्यपूर्वरंगंरावणवधाख्यनाट्यस्य पूर्वरंगंविधातुंकर्तुं कृत्वाम्रख्यापायितुं द्रुतंदंडकमंडलंआयात् चित्रकूटाद्राजगामेत्यन्वयः ॥ ४५ ॥ इत्यरण्यकांडटीकायां प्रथमःसर्गः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्री ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ॥ ॥ ॥

तस्यांरात्र्यांव्यतीताया माप्टछ्यमुनिपुंगवं ॥ प्राविशत्पुंडरीकाक्षो दंडकारण्यमंडलं ॥ ५ ॥
ज्ञानिनःकर्मिणश्चात्र वेदवेदांगपारगाः ॥ ब्राह्मणाब्रह्मणस्तातं प्रेक्षंतेस्मसहस्रशः ॥ ६ ॥ कम
लानुगतंदेवं कमलायतलोचनं ॥ बिंबोष्ठंकंबुकंठंतं दृष्ट्वाहृष्टामहर्षयः ॥७॥ सुकृतानांकृतानांनः
सर्वेषांफलमागतं ॥ रामसंदर्शनादित्थं मुनयोकथयन्मिथः ॥ ८ ॥ सपर्यांसुरवर्यस्य विधायवि
धिनाततः ॥ विप्राःप्रांजलयःप्रोचु र्भक्तिगद्गदभाषिणः ॥ ९ ॥ लोकनाथसनाथाःस्मो भवताक-
रुणावता ॥ संसारात्पालयँल्लोकान् रावणादपिपालय ॥ १० ॥ इतितैरर्चितस्तत्र तांनिशामव
सत्प्रभुः ॥ सदारसोदरःप्राया दुदारगुणवारिधिः ॥ ११ ॥ तत्रैवदंडकारण्ये सविवेशाश्रमांत-
रं ॥ जीर्णांगंशरभंगाख्यं तत्रप्रैक्षततापसं ॥ १२ ॥ वानप्रस्थोसमर्थोसा वग्निहोत्रप्रवर्तने ॥
देहंजिहासुःसंपूज्य रामंदृष्टोब्रवीदिदं ॥ १३ ॥ पुण्यश्लोकप्रसीदत्वं रामराजीवलोचन ॥ मुहूर्तं
स्थीयतामत्र भूयानयमनुग्रहः ॥१४॥ इत्युक्त्वाज्वलयित्वाग्निं हुत्वादेहंप्रभोःपुरः ॥ मंत्रपूतंहविरिव
प्रययौसहरेःपदं ॥१५॥ मंगलंशरभंगस्य कृत्वामंगलकीर्तनः ॥ विजगाहेतिगहनं तत्रैवविपिनांतरं ॥
॥१६॥ विराधंदृष्टवान्वीरो मुनिमांसाशिनंवने ॥ अष्टौसिंहान्विनिर्भिद्य शूलेनाक्रम्यचस्थितं ॥१७॥

॥ १८ ॥ १९ ॥ २० ॥ अत्तुं भक्षयितुं ॥ २१ ॥ विरामंमरणं ॥ २२ ॥ २३ ॥ उर्वशीसंगमागसः उर्वशीसंगमाख्यापराधात् तद्दत्तः तेनवैश्रवणेनदत्तः ॥ २४ ॥ २५ ॥ २६ ॥ अश्मकुट्टकाः पाषाणेनैवस्वकार्यनिर्वाहकर्तारः ॥ २७ ॥ दंतोलूखलिनः उलूखलेषुयवहननादिकंकर्मक्रियते तद्दंतैरेवयैः क्रियते तेतथोक्ताः खेशयाः आकाशे विश्रमादिकंकृत्वास्थिताः तच्चयोगशक्त्येतिज्ञातव्यं अर्चिताः पूजिताः पंचतपसः पंचाग्निमध्येतपःकुर्वाणाः दशतपोव्र

शंभोर्वरादवध्योसौ राक्षसोरूक्षविग्रहः॥ उपद्रुत्यक्षणात्सीता मादायाकाशमापतत्॥ १८॥ क्रूरक्रियंक्रूरवाचं क्रूरंदृष्ट्वाथराक्षसं॥ शरैःशरीरंसौमित्रि स्तस्यशीघ्रमदारयत्॥ १९॥ अविचिंत्यशरांछूलं राक्षसः क्षिप्रमाक्षिपत्॥ लक्ष्मणायाथतद्रामः शराभ्यांसमशातयत्॥ २०॥ स्वांसंमारोपयत्सोऽत्तुं राघवौराक्षसः क्षणात्॥ भ्रातरौखड्गिनौतस्य खंडयामासतुर्भुजौ॥ २१॥ सरामशरसंविद्धो विराममवशोव्रजन्॥ प्रांजलिःकंजपत्राक्षं संस्मृतिर्वाक्यमब्रवीत्॥ २२॥ जयरामरमाकांत जानेत्वांभक्तवत्सल॥ तुंबुरुस्तवदासोहं राक्षसींयोनिमागतः॥ २३॥ शप्तोवित्तेश्वरेणाह मुर्वशीसंगमागसः॥ शापमोक्षश्चतद्दत्त स्त्वत्प्रसादोयमागतः॥ २४॥ इतिरामप्रसादेन गंधर्वःस्वर्गतिंगतः॥ रामानुजोरामवाक्या त्तद्देहंबिलगंव्यधात्॥ ॥ २५॥ नानाश्रमपदेभ्योथ मुनयोराक्षसार्दिताः॥ शरण्यंसर्वभूतानां शार्ङ्गिणंशरणंययुः॥ २६॥ वैखानसावालखिल्या पृश्नयोरश्मिपाअपि॥ वारिपावायुपाःपत्र भोजनाअश्मकुट्टकाः॥ २७॥ दंतोलूखलिनोदांताः खेशयाःस्थंडिलेशयाः॥ अर्चिताःपंचतपसा परेदशतपोव्रताः ॥ २८ ॥ ॥ ॥

ताः शमादिदशतपोव्रतयुक्ताः दानादिदशतपोव्रतवंतश्चेत्यर्थः । आनृशंस्यं क्षमासत्यमहिंसादममार्जवं । प्रीतिःप्रसादोमाधुर्यमक्रोधश्चयमादश । दानमिज्यातपोध्यानंस्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौमौनंचनियमादशसंस्मृता । इतिश्लोकद्वयोक्तरीत्यादशतपोव्रतयुक्ताइतिभावः ॥ २८ ॥ ॥ ॥

तस्यांरात्र्यांव्यतीताया माप्टछ्यमुनिपुंगवं ॥ प्राविशत्पुंडरीकाक्षो दंडकारण्यमंडलं ॥ ५ ॥
ज्ञानिनःकर्मिणश्चात्र वेदवेदांगपारगाः ॥ ब्राह्मणाब्रह्मणस्तातं प्रेक्षंतेस्मसहस्रशः ॥ ६ ॥ कम
लानुगतंदेवं कमलायतलोचनं ॥ बिंबोष्ठंकंबुकंठंतं दृष्ट्वाहृष्टामहर्षयः ॥ ७ ॥ सुकृतानांकृतानांनः
सर्वेषांफलमागतं ॥ रामसंदर्शनादित्थं मुनयोकथयन्मिथः ॥ ८ ॥ सपर्यांसुरवर्यस्य विधायवि
धिनाततः ॥ विप्राःप्रांजलयःप्रोचु र्भक्तिगद्गदभाषिणः ॥ ९ ॥ लोकनाथसनाथाःस्मो भवताक-
रुणावता ॥ संसारात्पालयँल्लोकान् रावणादपिपालय ॥ १० ॥ इतितैरर्चितस्तत्र तांनिशामव
सत्प्रभुः ॥ सदारसोदरःप्राया दुदारगुणवारिधिः ॥ ११ ॥ तत्रैवदंडकारण्ये सविवेशाश्रमांत-
रं ॥ जीर्णांगंशरभंगाख्यं तत्रप्रैक्षततापसं ॥ १२ ॥ वानप्रस्थोसमर्थोसा वग्निहोत्रप्रवर्तने ॥
देहंजिहासुःसंपूज्य रामंदृष्टोब्रवीदिदं ॥ १३ ॥ पुण्यश्लोकप्रसीदत्वं रामराजीवलोचन ॥ मुहूर्तं
स्थीयतामत्र भूयानयमनुग्रहः ॥ १४ ॥ इत्युक्त्वाज्वलयित्वाग्निं हुत्वादेहंप्रभोःपुरः ॥ मंत्रपूतंहविरिव
प्रययौसहरेःपदं ॥ १५ ॥ मंगलंशरभंगस्य कृत्वामंगलकीर्तनः ॥ विजगाहेतिगहनं तत्रैवविपिनांतरं ॥
॥ १६ ॥ विराधंदृष्टवान्वीरो मुनिमांसाशिनंवने ॥ अष्टौसिंहान्विनिर्भिद्य शूलेनाक्रम्यचास्थितं ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ अत्तुं भक्षयितुं ॥ २१ ॥ विरामंमरणं ॥ २२ ॥ २३ ॥ उर्वशीसंगमागसः उर्वशीसंगमाख्यापराधात् तद्दत्तः तेनवैश्रवणेनद-
त्तः ॥ २४ ॥ २५ ॥ २६ ॥ अश्मकुट्टकाः पाषाणेनैवस्वकार्यनिर्वाहकर्तारः ॥ २७ ॥ दंतोलूखलिनः उलूखलेषुयवहननादिकंकर्मक्रियते तद्दंतैरेवयैः
क्रियते तेतथोक्ताः खेशयाः आकाशे विश्रमादिकंकृत्वास्थिताः तच्चयोगशक्त्येतिज्ञातव्यं अर्चिताः पूजिताः पंचतपसः पंचाग्निमध्येतपः कुर्वाणाः दशतपोव्र

शंभोर्वरादवध्योसौ राक्षसोरूक्षविग्रहः॥ उपद्रुत्यक्षणात्सीता मादायाकाशमापतत्॥ १८॥ क्रूरक्रियंक्रूर वाचं क्रूरंदृष्ट्वाथराक्षसं॥ शरैःशरीरंसौमित्रि स्तस्यशीघ्रमदारयत्॥ १९॥ अविचिंत्यशरांछूलं राक्षसः क्षिप्रमाक्षिपत्॥ लक्ष्मणायाथतद्रामः शराभ्यांसमशातयत्॥ २०॥ स्वांसंमारोपयत्सोऽत्तुं राघवौराक्षसः क्षणात्॥ भ्रातरौखड्गिनौतस्य खंडयामासतुर्भुजौ॥ २१॥ सरामशरसंविद्धो विराममवशोव्रजन्॥ प्रांजलिःकंजपत्राक्षं संस्मृतिर्वाक्यमब्रवीत्॥ २२॥ जयरामरमाकांत जानेत्वांभक्तवत्सल॥ तुंबुरुस्तवदासोहं राक्षसींयोनिमागतः॥ २३॥ शप्तोवित्तेश्वरेणाह मुर्वशीसंगमागसः॥ शापमोक्षश्चतद्दत्त स्त्वत्प्रसादोयमागतः॥ २४॥ इतिरामप्रसादेन गंधर्वःस्वगतिंगतः॥ रामानुजोरामवाक्यात्तद्देहंबिलगंव्यधात्॥
॥ २५॥ नानाश्रमपदेभ्योथ मुनयोराक्षसार्दिताः॥ शरण्यंसर्वभूतानां शार्ङ्गिणंशरणंययुः॥ २६॥ वैखानसावालखिल्या पृश्नयोरश्मिपाअपि॥ वारिपावायुपाःपत्र भोजनाअश्मकुट्टकाः॥ २७॥ दंतोलूखलिनो दांताः खेशयाःस्थंडिलेशयाः॥ अर्चिताःपंचतपसा परेदशतपोव्रताः ॥ २८ ॥ ॥ ॥

ताः शमादिदशतपोव्रतयुक्ताः दानादिदशतपोव्रतवंतश्चेत्यर्थः। आनृशंस्यं क्षमासत्यमहिंसादममार्जवं। प्रीतिःप्रसादोमाधुर्यमक्रोधश्चशमादश। दानमिज्या
तपोध्यानंस्वाध्यायोपस्थनिग्रहौ। व्रतोपवासोमौनंचनियमादशसंस्मृता। इतिश्लोकद्वयोक्तरीत्यादशतपोव्रतयुक्ताइतिभावः ॥ २८ ॥ ॥ ॥

न्यङ्मूर्धानःअधःशिरस्त्वेनस्थिताः ॥ १९ ॥ क्षामाःतपसाकृशाः ॥ ३० ॥ ३१ ॥ ३२ ॥ मिहिरःसूर्यः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

वृक्षाग्रासक्तपादाग्रा न्यङ्मूर्धास्तत्तपस्विनः ॥ सर्वेसर्वेश्वरंब्रह्म ध्यायंतोवेदपारगाः ॥ २९ ॥ जा
ज्वल्यमानास्तपसा ज्वलनादित्यवर्चसः ॥ अश्रुपूर्णेक्षणाःक्षामाः प्रणम्याहुस्स्मराघवं ॥ ३० ॥
लोकैकनाथश्रीनाथ त्वयिपृथ्वीगतेप्यहो ॥ राक्षसैर्भक्षितास्स्मोत्र रावणोजःसमाश्रयैः ॥ ३१ ॥
मंदाकिनीतीरजुषां पंपातीरजुषांसतां ॥ प्रत्याश्रमंपश्यदेहान् रामराक्षसभक्षितान् ॥ ३२ ॥
करुणाकरतस्मात्वं करुणांकुरुसाधुषु ॥ हरराक्षससंदोहं तिमिरंमिहिरोयथा ॥ ३३ ॥ इत्यर्थि-
तोब्रवीद्देवो मेघगंभीरयागिरा ॥ खलान्निर्गलयिष्यामि भयंवोमाभवेदिति ॥ ३४ ॥ महर्षिभि
र्युतोरामः सुतीक्ष्णस्याश्रमंययौ ॥ तांनिशांसहवैदेह्या तेनसंपूजितोवसत् ॥ ३५ ॥ गछतोमु
निभिःसार्धं लक्ष्मणेनचकाननं ॥ जानकीजानकीभर्त्रो र्लीलावादोन्ववर्तत ॥ ३६ ॥ तापसस्त्य
क्तराज्यस्त्वं न्यस्तदंडोसिराघव ॥ कथंरक्षोवधोधर्म स्तवेत्यूचेहिविस्मिता ॥ ३७ ॥ दहनंद
हनस्येव राज्ञोदुर्जननिग्रहः ॥ सर्वावस्थासुधर्मस्या दितिरामोभ्यभाषत ॥ ३८ ॥ अग्रतःप्रय-
यौरामो मध्यतःसासुमध्यमा ॥ लक्ष्मणःपृष्ठतस्तेषां पृष्ठतस्तेमहर्षयः ॥ ३९ ॥ सरःपंचाप्स
रोनाम प्रापुस्तेयत्ररेमिरे ॥ पंचाग्न्याप्सरसोदृश्या मुनिनामंडकर्णिना ॥ ४० ॥ ॥

दहनंभस्मीकरणं दहनस्यवन्हेः ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४१ ॥ नवसमाःनवसंवत्सरान् ॥ ४२ ॥ ४३ ॥ ४४ ॥ यापितं प्रेषितं ॥ ४५ ॥ ४६ ॥ ४७ ॥ अप्रीयतप्रीतोभूत् ॥ पततां पक्षिणां ॥ ४८ ॥
॥ ४९ ॥ वैनतेयात्मजयुतः विनतापुत्रस्यारुणस्यात्मजेन जटायुषायुतःयुक्तः अरात्समीपे आराद्दूरसमीपयोरित्यमरः । यापंचवटीमयानासिकाग्रामेगो-

मासंकुत्रचिदेकंद्वौ कचित्त्रिचतुरोप्रभुः ॥ पंचषानथसप्ताष्टा नाश्रमेष्ववसत्सुखं ॥ ४१ ॥ सुंद
रीमिंदिरामेनां स्वानंदीसाधुनंदयन् ॥ ससौमित्रिर्नवसमा निन्येमुनिजनोत्सुकः ॥ ४२ ॥ प्रोचे
नुजमथप्राप्य सोगस्त्यभ्रातुराश्रमं ॥ अगस्त्यस्यतपोवीर्यं वातापील्वलसूदनं ॥ ४३ ॥ अग-
स्त्यस्यस्वभक्तस्य प्रीत्यैप्रापाश्रमंप्रभुः ॥ सदारसोदरंदेवं संपूज्यासावभाषत ॥ ४४ ॥ कोदंडं
कालदंडाभं त्वद्दोर्दंडैकमंडनं ॥ वैष्णवंविष्णुमूर्तेत्वं गृहाणेंद्रेणयापितं ॥ ४५ ॥ इत्युक्त्वाशार्ङ्गिणे
शार्ङ्गं प्रददौकुंभसंभवः ॥ इषुधीअक्षयेषूच खड्गंचखलखंडनं ॥ ४६ ॥ तानिसंगृह्यभगवा
न्महर्षेरनुगृह्यच ॥ अगस्त्योदितमार्गेण ययौपंचवटींप्रति ॥ ४७ ॥ अप्रीयतप्रभुंप्रेक्ष्य जटायुः
पततांपतिः ॥ सखादशरथस्याग्रे दासोस्मीतिननामच ॥ ४८ ॥ विनतायांदक्षपुत्र्यां मारीचा
त्कश्यपात्पुरा ॥ संजातादरुणाज्जन्म स्वस्योवाचविहंगमः ॥ ४९ ॥ वैनतेयात्मजयुतो वैनतेय-
ध्वजस्तदा ॥ प्रापपंचवटींरम्या माराद्गोदावरीयुतां ॥ ५० ॥ सालतालतमालांश्च नागपुन्नाग
चंपकान् ॥ चंदनान्स्यंदनांश्चूतान् खर्जूरार्जुनकिंशुकान् ॥ ५१ ॥ ॥ ॥ ॥

दावरीतीरेदृष्टा प्रणताचात्यादरेणतस्मादरादितिसमीपइत्युक्तंसाधु ॥ ५० ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥

पार्थिवान् वृक्षान् ॥ ५२ ॥ ५३ ॥ निवेद्यदेशीयंनिवेद्यसदृशं नैकंबहुविधं अर्पयतइतिद्वितीयाबहुवचनं ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ त्रिभिस्तापैः आध्यात्मिकाधिभौतिकाधिदैविकाख्यैः त्रिभिस्तापैरध्यास्तअध्युवास विमलत्वादिगुणवतीं योगभाजांयोगिनां मनीषामिवबुद्धिमिव ॥ ५८ ॥ इति द्वितीयःसर्गः ॥ २ ॥ ॥ श्री ॥ सार्धाः अर्धेनसहिताः मासषट्कमर्धंत्रयोदशवर्षपरिपूर्त्यर्थं यदाभविष्यतितादृशाःत्रयोदशसमाइत्यर्थः। कथंलभ्यत इत्याशंकानकार्या एवमनंगीकारेबाधकसद्भावात् तथाहि द्वादशेकिलमासेमांप्रत्यतेदशमोह्ययमिति उपरिहनूमंतंप्रतिसीतावाक्यं चतुर्दशवत्सरगमन समनं

बकुलान्वंजुलाशोकान् पाटलानपरानपि ॥ प्रैक्षतानम्रशिरसः पार्थिवान्पार्थिवाधिपः ॥ ५२ ॥ पल्लवैःपवनोत्धूतैः कुर्वाणानंजलीनिव ॥ निष्पतद्भिर्मुहुःपुष्पैः कुर्वाणांश्चांजलीनपि ॥ ५३ ॥ फलंनि वेद्यदेशीयं नैकमर्पयतःपृथक् ॥ आत्मनःस्तवनायैव कलकोकिलनिःस्वनान् ॥ ५४ ॥ चालिता न्पवमानेन प्रहर्षादिवनृत्यतः ॥ अभ्यनंदन्मुकुंदस्तान् भक्ताभान्भक्तवत्सलः ॥ ५५ ॥ समेस्थले पर्णशाला मनुकूलजलाशये ॥ रामवाक्याच्चकाराथ लक्ष्मणश्चारुलक्षणः ॥ ५६ ॥ ससौष्टवांसत्वरि तां सप्रहर्षमवेक्ष्यतां ॥ शुश्रूषांलक्ष्मणगुरु र्लक्ष्मणंपरिरब्धवान् ॥ ५७ ॥ तांपर्णशालांविमलांविशा लां तापैस्त्रिभिर्नानुगतांकदापि ॥ अध्यास्तरम्यांरमयासमेतो रामोमनीषामिवयोगभाजां ॥ ५८ ॥ इति द्वि०सर्गः ॥ २ ॥ श्रीः ॥ वैकुंठस्येववैकुंठे वनेनिवसतःसुखं ॥ सार्धास्त्रयोदशसमा रामस्यैवंसमागमन् १

तरमेवरामःस्वपुरीमयोध्यांप्रति नागमिष्यतिचेदाग्निमवेशमेवकुर्यामितिचभरतस्यप्रतिज्ञा। तत्रयदिसार्धत्रयोदशसमाइत्यत्र षण्मासाधिकत्रयोदशसमाइत्यत्रा ॥ ६२ ॥
वशेषेणपरस्परंविरोधःस्यात् तदुभयविरोधशांत्यर्थं सार्धास्त्रयोदशसमाइति पदार्थघटनार्थंचउक्तएवार्थउपपद्यतइतिनकोपिक्षुद्रोपद्रवः आसमंतात् सम्यक् ऋद्धमभिवृद्धमानंदादिकं अर्धंतनसहिताः सार्धाइतिवा । यद्वा समाधाः सहिताः लोकदृष्ट्यासीतयासहिताःत्रयोदशसमाइतिवा । एवंसुखंनैवउपगमन्निः त्यर्थः सर्वदासर्वैश्वर्यायुक्तत्वेन क्लेशादिदोषराहिताइतिभावः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २ ॥ हिमानीपीडितं हिमसमूहपीडितं हिमानीहिमसंहतिरित्यमरः ॥ ३ ॥ मांनप्रतिबाधतइत्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ परचक्रे

उत्थायकालेकल्याणं देवंगोदावरींगतं ॥ सीताकृत्वाग्रतोबिभ्र त्कलशंलक्ष्मणोन्वगात् ॥ २ ॥
ऋतौहेमंतआलोक्य हिमानीपीडितंजगत् ॥ प्रांजलिःकंजनाभंस सौमित्रिर्वाक्यमब्रवीत् ॥ ३ ॥
श्रीह्यानिदाहिमानीयं जनानांजाड्यकारणं ॥ नमांत्वत्पादपार्श्वस्थ मियंचप्रतिबाधते ॥ ४ ॥ इ
दानींस्थंडिलांनून मुथ्थायसरयूंगतः ॥ त्वत्संगमार्थीभरतः साहिधन्यतमोभुवि ॥ ५ ॥ कथंकथ
यकैकेयी भूत्वादशरथप्रिया ॥ सुत्वाचभरतंसाधुं त्वदर्थंकृतवत्यहो ॥ ६ ॥ इत्युक्तऊचेभगवा
न्कार्योनोरक्षसांवधः ॥ तस्माद्वनप्रवेशोच सानिमित्तमभूदिति ॥ ७ ॥ स्वात्मशालामुपागम्य
कृतपौर्वाण्हिकक्रियः ॥ सानंदःसीतयासाक मास्तेस्मजगदीश्वरः ॥ ८ ॥ एतस्मिन्नंतरेपापा सं
प्राप्तारावणानुजा ॥ पतिमन्विष्यधावंती त्रिलोकान्रावणाज्ञया ॥ ९ ॥ परचक्रेणखचिते निहृ
तेनिजभर्तरि ॥ प्रमादाद्राक्षसेंद्रेण ततःसाव्यचिनोत्पतिं ॥ १० ॥ त्रैलोक्यसुंदरंरामं प्रेक्ष्यत्रै
लोक्यदुर्भगा ॥ शूर्पणख्यब्रवीदारा दार्तास्मरशराहता ॥ ११ ॥ कांतकामयमानांमां कांतांवह
तवोचितां ॥ अल्पायासीतयाकिंते नन्वहंरावणानुजा ॥ १२ ॥ इत्युक्तऊचेभगवान् पश्यन्सी
तामुखांबुजं ॥ अस्यांसक्तोस्मिभद्रेहं मद्भ्रातातेभवेदिति ॥ १३ ॥ ॥ ॥

णशत्रुसैन्येन खचितेमिश्रीभूतेराक्षसेंद्रेणरावणेन व्यचिनोत् निमार्गयामास ॥ १० ॥ ११ ॥ वहउद्वाहोभवेत्यर्थः भ्रातिरितियावत् ॥ १२ ॥ १३ ॥

॥ १४ ॥ कामनीयाकामयितुंयोग्या मनोहरेतिवा ॥ १५ ॥ १६ ॥ अदामिभक्षयामि ॥ १७ ॥ चकर्तचिच्छेद ॥ १८ ॥ १९ ॥ कंकपत्राःबाणाः ॥ २० ॥ २१ ॥ २२ ॥ दत्तमरिभयंयेनतद्दत्तारिभयं चामीकरेणसुवर्णेनउज्वलमितितथोक्तं ॥ २३ ब्रह्मद्रुहःब्राम्हणादिद्रोहकर्तॄन् वत्स्यामिहानि-

राक्षसीलक्ष्मणंप्राप्य प्रोचेमन्मथमोहिता ॥ तरुणत्वमदारोसि ममभर्ताभवेरिति ॥ १४ ॥ अहंशुश्रूषुरार्यस्य गच्छार्यैवरवर्णिनि ॥ त्वांविनाकमनीयाका स्यादित्थंलक्ष्मणोब्रवीत् ॥ १५ ॥ तयोरिमांहास्यकथा मजानंतीस्मरार्दिता ॥ राक्षसीविकृताकारा पुनाराममुपागमत् ॥ १६ ॥ त्वमेवममकांतोसि सपत्नीयंस्थितामम अदाम्येनामितिक्रूरा सीतामभ्यद्रवद्द्रुतं ॥ १७॥ राघवस्यमतंज्ञात्वा लाघवाद्राघवानुजः ॥ चकर्तकर्णौनासांच राक्षस्याःखड्गधारया ॥ १८ ॥ विस्वरंप्ररुदंतीसा स्रातारुधिरधारया ॥ जगामशरणंघोरा भ्रातरौखरदूषणौ ॥ १९ ॥ कस्यपास्यंतिरुधिरं कंकपत्रामभाधुना ॥ अजिताविजिताकेन त्वमित्यूचेखरोथतां ॥ २० ॥ तरुणौतरुणीयुक्तौ वैरिणौमेवनांतरे ॥ तयोःपिबेयंरक्तौघ मितिराक्षस्यवोचत ॥ २१ ॥ खरःखरानादिदेश चतुर्दशनिशाचरान् ॥ तेतयासार्धमाजग्मु र्यत्ररामोरमासखः ॥ २२ ॥ आदत्तदत्तारिभयं चापंचामीकरोज्ज्वलं॥ आलोक्यलोकनाथस्तान् वचनंचेदमब्रवीत् ॥२३॥ ब्रह्मद्रुहोवोवत्स्यामि यदिमेतिष्ठताग्रतः ॥ इत्युक्त्वाआक्षिपंतिस्म राक्षसारूक्षलक्षणाः ॥ २४ ॥ ॥ ॥

न्यामि ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २५ ॥ २६ ॥ शेषेशयनंकृत्वातिष्ठसि ॥ २७ ॥ २८ ॥ कार्तस्वरमयंसुवर्णात्मकं ॥ २९ ॥ प्रखरसंरंभात् अतिबहुलकोपात् ॥ ३० ॥ ३१ ॥

शस्त्रास्त्रवृष्टिंदुर्धर्षौ शरैश्छित्वाचरक्षसां ॥ चतुर्दशशरांस्तीक्ष्णान् रुग्मपुंखानमुंचत ॥ २५ ॥ शरास्तेथशरीराणि नृशरीराशिनांक्षणात् ॥ भित्वाधरातलेमज्जन् राक्षसान्निरयेशुचौ ॥ २६ ॥ दुःखाच्छूर्पणखीगत्वा रुरोदखरसन्निधौ ॥ क्लीबोसित्वंमनुष्याभ्यां भीतःशेषेगृहेष्विति ॥ २७ ॥ अंजनाद्रिशरीराणां रक्षसांभीमकर्मणां ॥ चतुर्दशसहस्राणि प्रातिष्ठंतखराज्ञया ॥ २८ ॥ खरो-द्रिशिखरप्रख्यं कार्तस्वरमयंरथं ॥ आरुह्यरक्षसांमध्ये ययौदूषणसंयुतः ॥ २९ ॥ दिव्यान्भौमांश्चशारीरा नुत्पातानभिवीक्ष्यच ॥ खरप्रखरसंरंभा दनादृत्यैवतान्ययौ ॥ ३० ॥ एतस्मिन्नंतरेरामः सौमित्रिंप्रत्यभाषत ॥ निमित्तैर्विविधैर्युद्धंनो लक्ष्मणंप्रत्युपस्थितं ॥ ३१ ॥ एषबाहुस्फुरतिमे चापंचेदंविचेष्टते ॥ बिलेस्मिंस्तिष्ठवैदेह्या सार्धंशरधनुर्धरः ॥ ३२ ॥ एवमुक्तोभगवता तथाचक्रेसलक्ष्मणः ॥ रामोप्यनाकुलस्तस्थौ सवर्मोत्धृतकार्मुकः ॥ ३३ ॥ रक्षोगणःप्रक्षुभिता गत्वाभग्नजवोभवत् ॥ आलोकसीमांरामस्य वेलामिवमहोदधिः ॥ ३४ ॥ अमर्षितःखरःप्राया त्परितस्तमथापरे ॥ श्येनगामीपृथुग्रीवो यज्ञशत्रुर्महाविषः ॥ ३५ ॥ दुर्जयःकरवीराक्षः पुरुषःकालकामुकः ॥ मेघमालीमहाबाहु र्महास्योलोहितांबरः ॥ ३६ ॥ ॥ ॥

॥ ३२ ॥ ३३ ॥ आलोकसीमांदर्शनाख्यावधिं ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥

द्वादशैतेमहावीर्याः प्रेरयंतश्चमूंययुः ॥ अहंपूर्वमहंपूर्व मितिमत्ताःसहस्रशः ॥ ३७ ॥ महाकपालाः स्थूलाक्षः प्रमाथीत्रिशिरास्तथा ॥ चत्वारएतेसेनाग्रे वीरादूषणमन्वयुः ॥ ३८ ॥ धनुर्विष्फारयामास दृष्ट्वातान्दुष्टसूदनः ॥ इषुध्योरिषवस्तस्य जाज्वल्यंतेस्मवन्हिवत् ॥ ३९ ॥ देवोपदेवमुनयो रामराक्षससंगरं ॥ दिदृक्षमाणागगनं विमानाग्र्यैरपूरयन् ॥ ४० ॥ रामोयमृजुरेकाकी बहवोमायिनःपरे ॥ कथंनुस्वस्तितस्येति केचिदत्रावचक्षिरे ॥ ४१ ॥ यद्भ्रूविभ्रममात्रेण विभ्रंश्येद्भुवनत्रयं ॥ तस्याकिंराक्षसबलं रामस्येत्यपरेवदन् ॥ ४२ ॥ सरक्षसांशस्त्रवृष्टिं निरस्यनिशितैःशरैः ॥ तानथद्रावयामास क्षणेनकमलेक्षणः ॥ ४३ ॥ दूषणोङ्झितमापाथ दूषणोविश्वभूषणं ॥ साचसेनांजगन्नाथ मसेनंप्रत्यपद्यत ॥ ४४ ॥ सालतालाशिलावर्षान् राक्षसान्विमुखान्व्यधात् ॥ दूषणंचाभियुत्यंतं सायकैर्लोकनायकः ॥ ४५ ॥ पुनरुच्चलतस्तस्य दूषणस्यारिभीषणः ॥ ध्वजंवाहांस्त्रिवेणुंस सारथिंचाक्षिणोच्छरैः ॥ ४६ ॥ अछकीर्तिरथछित्वा सर्वाण्यस्यायुधानिच ॥ तेनमुक्तांगदांगुर्वीं लीलयादारयच्छरैः ॥ ४७ ॥ रामेणाष्टेषुभिर्विद्धः परिघंपरिगृह्यसः ॥ हतोसीत्यभ्यधाच्चंडो दंडपाणिरिवांतकः ॥ ४८ ॥ ॥ ॥ ॥

॥ ४९ ॥ दिवः आकाशात् अपतत् दूषणेनिपतितेराघवे जयशब्दोनमः शब्दःपुष्पवर्षश्चापतत् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ निखिलान् मखान्नान् देवान् प्रमदयन् संतोषयन् विशिखनामशिखी बाणाख्यज्वालपुंजवान् रामानलः रामनामकोवन्हिः एवंचतुर्दशसहस्रपलाशराशिंचतुर्दशसहस्रपरिमितराक्षससमू

आपतंतंसमालोक्य पत्रिभ्यांपत्रिकेतनः ॥ राघवोलाघवात्तस्य छित्वाबाहून्यपातयत् ॥ ४९ ॥ दिवोपतन्निपतिते दूषणेविश्वभूषणे ॥ जयशब्दोनमःशब्दः पुष्पवर्षश्चराघवे ॥ ५० ॥ जघान राघवोबाणै र्व्याकुलंरक्षसांकुलं ॥ अवशिष्टंततःशिष्टं परितस्मपलायिते ॥ ५१ ॥ महाकपालः स्थूलाक्षः प्रमाथीचोद्यतायुधाः ॥ अभ्ययूराक्षसारामं तांजघानशरैःप्रभुः ॥ ५२ ॥ तुल्यंशरशतेनेशः शतंहंतिसराक्षसान् ॥ सहस्रेणसहस्रंच लीलयालोकवल्लभः ॥ ५३ ॥ एवंचतुर्दशसहस्र पलाशिराशिं रामानलोविशिखनामशिखीप्रदह्य ॥ मुख्यंखराख्यपशुमप्युपयातमारा त्प्रत्यैक्षतप्रमदयन्निखिलान्मखान्नान् ॥ ५४ ॥ इति श्रीसंग्रहरामायणे अरण्यकांडे रामांके तृतीयःसर्गः ३

श्रीः ॥ निवार्यंत्रिशिरावीरो राघवाभिमुखंखरं ॥ ननादराममभ्येत्य रामोधनुरघोषयत् ॥ १ ॥ त्रिशिराश्चीछरांस्तीक्ष्णा नुन्मुंचन्मधुघातिने ॥ त्रिशिरोवक्षसिक्रुध्दो रामोमुंचच्चतुर्दश ॥ २ ॥ सूताश्वध्वजविध्वंसं कृत्वात्रिशिरसंप्रभुः ॥ ह्रदयेचाष्टभिर्विध्वा शरैर्मूर्ध्नोछिनत्त्रिभिः ॥ ३ ॥ राक्षसःक्षयमालक्ष्य राक्षसाधिपतिःखरः ॥ रामंसंप्राप्यनाराचै र्नभश्चक्रेनिरंतरं ॥ ४ ॥ ॥

हं प्रदह्य भस्मीकृत्य आरादुपयातंमुख्यंप्रधानभूतं खराख्यपशुमपि प्रत्यैक्षत प्रतीक्ष्य स्थितो भूदित्यन्वयः ॥ ५४ ॥ इति तृतीयः सर्गः ॥ ३ ॥ श्रीः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

॥ ५ ॥ धनुःशार्ङ्गातिरिक्तमन्यदेकं वर्मचान्यदेकं ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

नमोनिर्विवरंचक्रे रामोपिपारितःखरं ॥ शरैरेवदिशछन्ना स्तदद्भुतमभून्महत् ॥ ५ ॥ धनुश्छित्वा
छिनद्वर्म भूमः सप्तशरैःखरः ॥ रामोविकवचोरेजे विधूमइवपावकः ॥ ६ ॥ शत्रुघ्नंदिव्यमछेद्यं
शार्ङ्गशार्ङ्गीप्रगृह्यसः ॥ ध्वजंखरस्यचिछेद खरोमुंचच्चतुःशरान् ॥ ७ ॥ एकेनमूर्ध्निविव्याध खरं
रामोथपत्रिणा ॥ द्वाभ्यांभुजौत्रिभिर्देहं लीलयाप्रहसन्निव ॥ ८ ॥ युगाश्वसूताक्षधनु स्त्रिवेणुंचा
क्षिणोच्छरैः ॥ खरंचैकेनविव्याध देवोदेवान्प्रहर्षयन् ॥ ९ ॥ मुनीनांन्यस्तदंडानां दंडकारण्यवा
सिनां ॥ इदंतेभक्षणफलं पश्येत्यूचेखरंहरिः ॥ १० ॥ विकत्थनंनशूराणां रक्षोहत्याप्रतिक्रियां ॥
अनयागदयाकुर्या मितिरामंखरोब्रवीत् ॥ ११ ॥ तेनमुक्तांगदांरामः शरैर्भित्वाभ्यभाषत ॥ भग्नं
तेबलसर्वस्वं क्लीबोसिब्रह्महन्निति ॥ १२ ॥ आद्रवत्तालमुत्पाट्य खरवन्मुखरःखरः ॥ विव्याधेषु
सहस्रेण सालंसंचूर्ण्यराघवः ॥ १३ ॥ गैरिकार्द्रमिवाद्रिंतं रुधिरार्द्रमभिद्रुतं ॥ शरेणापातयच्छा
र्ङ्गी वज्रेणैवाथवज्रभृत् ॥ १४ ॥ खरोनरकमापेदे राघवोधवलंयशः ॥ देवसंघोमनस्वास्थ्यं मुनि
संघःस्वमाश्रमं ॥ १५ ॥ पूजितोदेवदेवीनां पुष्पैर्नेत्रैश्चशोभनैः ॥ ऋषीणांपरमाशीर्भिः प्रविवे
शाश्रमंप्रभुः ॥ १६ ॥ गिरिदुर्गाद्विनिष्क्रम्य सौमित्रिःसहसीतया ॥ ववंदेपरमानंदो मुनींद्रैःप
रिवारितं ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पर्याप्तंपरिपूर्णं ॥ १८ ॥ पराक्रंदपराआक्रोशंकुर्वाणा राक्षसीशूर्पणखी ॥ १९ ॥ क्षयेगृहं निवेशःशरणंक्षयइत्यमरः ॥ २० ॥ २१ ॥ मत्तःमदयुक्तःप्र
मत्तःप्रमादवान् ॥ २२ ॥ विरूपितवान् विरूपांकृतवान् कारितवानितिवा । शेषेतूर्णातिष्ठसि ॥ २३ ॥ २४ ॥ २५ ॥ यामेनएकयाममात्रेण ॥ २६ ॥

आर्यपुत्रजगन्नाथ पर्याप्तंतेमहद्यशः ॥ मुनीनारक्षयेत्युक्त्वा परिरेभेपतिंसती ॥ १८ ॥ पराक्रंद पराद्दष्ट्वा राक्षसीरक्षसांवधं ॥ लंकामभ्यद्रवत्क्रुद्धा कृत्तिकेवभयंकरी ॥ १९ ॥ ददर्शसादशग्रीवं विमुखंधर्ममार्गतः ॥ मानोन्नतंविमानस्थ मक्षयंचक्षयेरतं ॥ २० ॥ दीनापदेनिपतिता रावणंरावणानुजा ॥ उवाचवाचंपरुषां राक्षसंकोपयंत्यलं ॥ २१ ॥ मत्तःप्रमत्तःकामीत्वं विजित्यापिजगत्त्रयं ॥ राजलक्षणहीनोसि भयंप्राप्तंनबुध्यसे ॥ २२ ॥ जनस्थानेवधीद्राम स्त्रिशिरःखरदूषणान् ॥ साविरूपितवान्मांच त्वंशेषेस्मृतकोपमः ॥ २३ ॥ स्वसुरित्थंवचःश्रुत्वा दंडाहतइवोरगः ॥ क्रुद्धोदशास्यःपप्रच्छ कोयंरामोवदेरिति ॥ २४ ॥ करौभयेनधुन्वाना प्रोचेशूर्पणखीवचः ॥ रूपेणानुपमो रामो राजादशरथिःकिल ॥ २५ ॥ चतुर्दशसहस्राणि रक्षसांयोन्यपातयत् ॥ धनुर्द्वितीयोयामेन तद्वीर्यंकेनबुध्यते ॥ २६ ॥ लक्ष्मणाख्योनुजस्तस्य येनांगाहंविरूपिता ॥ रामस्यरामासीताख्या मन्येतामुचितांतव ॥ २७ ॥ यंसंस्पृशंतिसाकांता सीतासर्वांगशोभना ॥ सुधाधारेवनैवास्य देहधर्माजरादयः ॥ २८ ॥ ॥ ॥ ॥ ॥

॥ २७ ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २९ ॥ अविकंपनः अविकंपननामकोरावणमंत्रीकश्चित् उदंतंवृत्तांतं ॥ ३० ॥ नदीनदपतेःपश्चिमसमुद्रस्य ॥ ३१ ॥ तपस्यंतंतपःकुर्वंतं तमस्यंतंतमो गुणस्वभावयुक्तं तंतादृशं ॥ ३२ ॥ ३३ ॥ अनुधावतिअनुधावनंकृत्वागतवतिसति ॥ ३४ ॥ ३५ ॥ ईयुषःआगतस्य ॥ ३६ ॥ ३७ ॥ ३८ ॥ मा-



उत्तिष्ठपुरुषश्रेष्ठ व्याकुलंपाहिनःकुलं ॥ रामांतकादुपासन्ना दित्युक्त्वाविररामसा ॥ २९ ॥ राम वीर्यमनुस्मृत्य कंपितश्चाविकंपनः ॥ रावणायप्रणम्याथ तमेवोदंतमब्रवीत् ॥ ३० ॥ चिरंसांचिं त्यनिश्चित्य रावणोधिष्ठितोरथं ॥ तीरेनदीनदपते र्गोकर्णक्षेत्रमाप्तवान् ॥ ३१ ॥ तपस्यंतंतम-स्यंतं मारीचंतत्रदृष्टवान् ॥ विधिनापूजितस्तेन रावणोवाक्यमब्रवीत् ॥ ३२ ॥ मानवेनैवरामेण खराद्याःस्वजनाहताः ॥ तस्यजायांहरिष्यामि तत्रमित्रंभवांगमे ॥ ३३ ॥ त्वंसुवर्णमृगोभूत्वा त त्रसीतांविलोभय ॥ अनुधावतिरामेत्वां सीतांनेष्याम्यहंसुखं ॥ ३४ ॥ इत्युक्तऊचेमारीचो नरा मंत्रेत्थरावण ॥ यस्यैकसायकोहंतु मलंसासुरराक्षसान् ॥ ३५ ॥ ऊनषोडशवर्षस्य विश्वामित्रा-र्थमीयुषः ॥ सित्धाश्रमेत्वभूवंहि तैक्ष्ण्यंरामस्यपत्रिणः ॥ ३६ ॥ पुनश्चाहंगतोवैरी राक्षसाभ्यां-मृगाकृतिः ॥ दंडकेतौहतौतस्य शरैर्भग्नोहमागतः ॥ ३७ ॥ स्वपक्षक्षयकोपाच्च सीताकामाच्चमा स्मगाः ॥ रामंत्वंजीवनार्थीचे त्प्रोच्येतिविररामसः ॥ ३८ ॥ विपक्षभक्तंहन्म्यांत्वा माज्ञांमेनकरो षिचेत् ॥ इतिब्रुवन्निश्चकर्ष कोशात्खड्गंदशाननः ॥ ३९ ॥ ॥ ॥



स्मगाःसर्वथामागच्छ ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४० ॥ ४१ ॥ चतुर्णांशृंगाणांसमाहारश्चतुःशृंगीतयारौग्म्यास्वर्णमय्या ॥ ४२ ॥ मायास्मितंस्वेछयाकृतं मंदहासं ॥ ४३ ॥ तदारामाणांस्त्रीणांमध्ये परमारमालक्ष्म्याःस्वरूपभूता स्वरमणंरामंप्रति इदृशंवचनंबभाषे । विज्ञापितवतोत्यन्वयः । कीदृशंवचनमित्यतआह । रक्षइत्यादिना । रक्षोलक्षकुला-भिचारं राक्षसानामनेकलक्षकुलस्य मारणप्रयोगभूतंअखिलत्रैलोक्यसौख्याकरं समस्तत्रैलोक्यास्थितसज्जनस्य सुखोत्पत्तिस्थानभूतं भ्राम्यन्मंदमनीषिमंडलमनोमोहार्णवोद्घुर्णनं भ्राम्यंतःतत्वापरिज्ञानेन यत्किंचिद्भाष्यमाणाः येमंदमनीषिणोऽज्ञानिनो विपरीतज्ञानिनश्चतेषांमंडलस्यसमूहस्यमनसांयामो

मारीचोमरणाद्भीतः पापात्माचनिसर्गतः ॥ रावणेनसहारुह्य तंरथंदंडकान्ययौ ॥ ४० ॥ अवरुह्यरथात्तस्मा द्रावणेनाभिनंदितः ॥ मायामृगात्मामारीचो रम्येरामाश्रमेऽचरत् ॥ ४१ ॥ मुक्ताप्रवालप्रछंनो हेमबिंदुशतांचितः ॥ शृंगारितश्चतुःशृंग्या रौग्म्यामंदंच[illegible]रसः ॥ ४२ ॥ मायामृगंप्रेक्ष्यदेवी मायामानवधर्मिणी ॥ मायामनुष्यस्यविभो र्मायास्मितमभाषत ॥ ४३ ॥ रक्षोलक्षकुलाभिचारमखिलं त्रैलोक्यसौख्याकरंभ्राम्यन्मंदम नीषमंडलमनोमोहार्णवोत्घूर्णनं ॥ तत्वज्ञानजुषांविडंबनमहा नाट्याग्ररंगंवचोरामाणांपर मारमास्वरमणंरामंबभाषेतदा ॥ ४४ ॥ ॥

इति श्रीसंग्रहरामायणे अरण्यकांडे रामांके चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥

श्रीः ॥ क्रीडार्थंचित्रसारंगं देहीमंदेवदेवमे ॥ बृश्याआस्तरणायात्र विचित्रामस्यवात्वचं ॥ १ ॥

हार्णवः अज्ञानविपरीतज्ञानात्मकः समुद्रःतस्यउत्घूर्णनंअभिवृत्थिकरं तेषांचित्तंविशेषतोमोहयदित्यर्थः । तत्वज्ञानजुषां समीचीनज्ञानिनां विडंबनमहानाट्याग्ररंगं विडंबनाख्यंयन्महानाट्यं तस्याग्ररंगं आदिमरंगभूतमित्यन्वयः ॥ ४४ ॥ इत्यारण्यकांड टीकायां चतुर्थःसर्गः ॥ ४ ॥ ॥

श्रीः ॥ बृस्याःऋष्यासनस्य यतीनामासनंबृशीत्यमरः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

कलापवान् इषुधिमान् ॥ २ ॥ ३ ॥ आरमाप ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ सौहार्दस्नेहः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥



इत्युक्तोदेवआदाय चापचारुकलापवान् ॥ रक्षलक्ष्मणसीतांत्व मित्युक्त्वामृगमन्वगात् ॥ २ ॥ दूरंदुद्रावदुष्टात्मा मारीचोन्वीक्ष्यराघवं ॥ रामोपितमनुद्रुत्य मुमोचातकरंशरं ॥ ३ ॥ हालक्ष्मणेति विक्रुश्य रावणस्यार्थसिद्धये॥ विद्धःस्वरूपवान्पापो भुवमारममारच ॥ ४ ॥ सर्वज्ञाप्यथसर्वेशी कर्तुंरक्षःपरिक्षयं॥ आर्तनादंतमाकर्ण्य लक्ष्मणंप्रत्यवोचत ॥ ५ ॥ हालक्ष्मणेत्यार्तनादो नूनंराम स्यलक्ष्मण ॥ गच्छतूर्णंविजानीया इत्युक्तोलक्ष्मणोब्रवीत् ॥ ६ ॥ यद्भ्रूविभ्रममात्रेण सुरासुरनरादिकं॥ विश्वंस्थितिलयोत्पत्ती यांतितस्यचाकिंभयं॥ ७॥ नाथोनारायणात्मानो नशोच्योदेविराघवः ॥ मायामायाविनामेषा स्यान्नूनंपिशिताशिनां ॥ ८ ॥ इत्युक्ताभगवत्यूचे सौहार्दनास्तितेकथं ॥ वांछस्युपरतेदेवे त्वंक्रूरशठमामिति॥९॥ श्रुत्वेतिदुःश्रववाक्यं रुदन्नाचप्टलक्ष्मणः॥ धिग्धिङ्महापातकिनंमामेवंवचनास्पदं ॥ १० ॥ आर्यस्याज्ञाविमोक्षाय मार्यायालंघनाल्लघुः ॥ स्वस्तितेस्तुगमिष्यामि मातस्त्वांपातुशार्ङ्गभृत् ॥ ११ ॥ इत्युक्त्वान्वद्रवत्तूर्णं राघवंराघवानुजः ॥ देवीचदेवकार्यंत त्कुर्वाणास्वाश्रमेवसत् ॥ १२ ॥ राक्षसोभिक्षुवेषेण प्राप्तवान्राघवाश्रमं ॥ अकामयततांदेवीं श्रुतिंशूद्र इवाशुभः ॥ १३ ॥ कात्वंकांतेनवद्यांगि व्यक्तंदेवीनमानवी ॥ कस्मात्कांतारमापन्न सितितांरावणोब्रवीत्॥१४॥ राजादाशरथीरामो वनंपित्राज्ञयाऽव्रजेत्॥ तस्याहंदयितापत्नी सीतेत्थंप्रत्यभाषत १५

॥ १६ ॥ १७ ॥ १८ ॥ तिरोभूत् अदृश्याभूत् ॥ १९ ॥ २० ॥ प्रतिकृतिंप्रतिमां ॥ २१ ॥ लक्षयपश्य ॥ रामायदर्शयेतिवा ॥ २२ ॥ २३ ॥ २४ ॥

श्रुत्वादृष्ट्वाचरम्यांत्वां कामार्तोरावणोस्म्यहं ॥ त्रैलोक्येशस्यमेप्रेष्ठा भवेतिस्माहराक्षसः ॥ १६ ॥
अप्रमेयप्रभावंत्वं नरामंवेत्थराक्षस ॥ मत्कामाल्लप्स्यसेमृत्यु मितिसीतातमब्रवीत् ॥ १७ ॥
सेंद्रदेवविजिष्णोर्मे किंरामान्मानवाद्भयं ॥ इतिस्वंघोरमाकारं गृहीत्वारावणोऽभ्ययात् ॥ १८ ॥
अधृष्यशक्तिःशक्तापि विक्षेप्तुंराक्षसेश्वरं ॥ विश्वेश्वरीतिरोभूत्सा सृष्ट्वाप्रतिकृतिंनिजां ॥ १९ ॥
विज्ञायरामस्यमतं सीताकैलासमाययौ ॥ वंद्यमानाऽवसत्तत्र शिवयाचाशिवेनच ॥ २० ॥ तांजा
नकीप्रतिकृतिं मन्वानोजानकींखलः ॥ तूर्णंस्यंदनमारोप्य गगनेगतवानथ ॥ २१ ॥ करुणंवि-
ललापाथ छलसीतापुनःपुनः ॥ हारामरावणात्पाहि मांहालक्ष्मणलक्षय ॥ २२ ॥ इमामवस्थां
रामाय त्वंब्रूहिवनदेवते ॥ हाहाजटायोपक्षींद्र क्षिप्रंरामायवेद्यतां ॥ २३ ॥ इत्थंजटायुशब्दंतं
जटायुरभिशुश्रुवान् ॥ पर्वतादुत्पपाताथ पर्वताग्र्यइवापरः ॥ २४ ॥ नयमाराममहिषीं मायि-
जीवातिराक्षस ॥ शयिष्यसेरामबाणै रितिगृध्रोऽभ्यधादिमं ॥ २५ ॥ ततःप्रवदृतेयुद्धं पक्षिराक्ष
सराजयोः ॥ नखतुंडैश्चबाणैश्च परस्परवधैषिणोः ॥ २६ ॥ राक्षसःक्षतगात्रोथ नखतुंडैर्जटायु
षः ॥ मुमोचगृध्रराजाय दशाशुनिशितांछरान् ॥ २७ ॥ ॥ ॥ ॥ ॥

॥ २५ ॥ २६ ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नखरैःनखैः चवोब्रीनखरोस्त्रियामित्यमरः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ पंचास्यविक्रमान् सिंहवत्



पक्षाभ्यामाक्षिणोच्चापं सारथिंनखरैःखरैः ॥ रथंछत्रंचवाहांश्च विहंगोभंगमानयत् ॥ २८ ॥ खे-
चरैःस्तूयमानोसौ खेचरंवीक्ष्यरावणं ॥ आक्षिप्यपरुषैर्वाक्यै रारुरोहाथपृष्ठतः ॥ २९ ॥ पृष्ठपी
ठंचखानाथ नखैःपक्षीतुरक्षसः ॥ विमोचनायतन्वंग्याः केशांश्चास्योदपाटयत् ॥ ३० ॥ विमु-
च्यमृगशावाक्षीं राक्षसःपक्षिविक्षतः ॥ अभ्यापतत्पतगींद्रं तौमुहूर्तंन्ययुध्यतां ॥ ३१ ॥ तस्य-
श्रांतस्यवृद्धस्य षष्ठिवर्षसहस्त्रिणः ॥ पक्षौपादौचपार्श्वेच खड्गेनाखंडयत्खलः ॥ ३२ ॥ मंदचे
ष्टंनिपातितं राममित्रंपतत्रिणं ॥ मायासीतातमाश्लिष्य विललापशुकालपा ॥ ३३ ॥ हठेनखठि
णात्मास तामाकृष्यनिशाचरः ॥ गृहीत्वाकाशमाक्रम्य प्रययौवायुवेगवान् ॥ ३४ ॥ हृतायांर-
क्षसातस्यां चुक्षोभेदंचराचरं ॥ हिरण्याक्षेणदैत्येन क्षोण्यामिवगरीयसा ॥ ३५ ॥ लोकनाथ-
स्यकांतांमां कालपाशायितांतव ॥ मुंचमुंचेतिसातन्वी रुरोदकरुणंमुहुः ॥ ३६ ॥ पन्नगीमिव
लोठंतीं दीप्तांवन्हिशिखामिव ॥ अंकेलंकेश्वरोबिभ्र त्स्वमृत्यैतांनिनायसः ॥ ३७ ॥ वानरान्
गिरिशृंगेसा पंचपंचास्यविक्रमान् ॥ अवलोक्याक्षिपन्मध्ये तेषामात्मोत्तरीयकं ॥ ३८ ॥ अग्नि
वर्णान्निजाकल्पा न्पातयामासतत्रसा ॥ आत्मपूर्णस्यकोपाग्नेः शेषानिवसुमध्यमा ॥ ३९ ॥ ॥

राक्रमोपेतान् ॥ ३८ ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

जिघांसुःहंतुकामः ॥ ४० ॥ ४१ ॥ ४२॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ शिंशपामूलेचंदनागरुमूले ॥ ४७ ॥ एवंविधत्वात्तयोर्विरहःकथंस्यात् त-
योःशोकलेशःकुत्रस्यात् ताभ्यामिदमसुखंनाट्यवत् ॥ छद्मनाव्याजेनप्रकटितंदर्शितमेव दुःखित्वादिकं आत्मस्वरूपेनेत्यन्वयः ॥ ४८ ॥ इत्यारण्यकांड

हनुमान्वानरश्रेष्ठ स्तत्रभागवताग्रणीः ॥ जिघांसूरावणंगछ न्वारितोरविसूनुना ॥ ४० ॥ नगा न्नदीरनुव्रज्य नदीभर्तारमप्यथ ॥ लंकांलंकेश्वरःप्राप्य चिंतयामासपापधीः ॥ ४१ ॥ रक्षोवरा न्वरोत्सिक्ता नष्टौदुष्टःसमादिशत्॥ जनस्थानेहतस्थाने रामोविज्ञायतामिति ॥ ४२ ॥ प्रविश्यां तःपुरंतन्व्यै दर्शयामासरावणः ॥ सर्वसंपत्समृध्धंत द्वचनंचेदमब्रवीत् ॥ ४३ ॥ आगंतेदंकथं दुर्गं रामःकिंवात्रसाधयेत् ॥ निराशाभवरामेत्वं भार्यामेश्रीमतोभव ॥ ४४॥ इत्युक्तासाश्रुनेत्रोचे कुत्ररामोनयास्यति ॥ गुप्तंसुरासुरैश्चत्वां सूदयेद्भगवानिति ॥ ४५ ॥ ततोनिर्भर्त्सयन्क्रुध्धो रा-क्षसीभिश्चतर्जयन् ॥ तन्वीमशोकवनिकां यापयामासराक्षसः ॥ ४६ ॥ हंसीवटिट्टिभीभिःसा काकैरिवचकोकिला ॥ उवासाशिंशुपामूले राक्षसीभिर्वितर्जिता ॥ ४७ ॥ लक्ष्मीलक्ष्मीपतीताव मितगुणगणौसर्वदासर्वदेशे व्याप्तौनिर्दोषलेशौसकलतनुभृतांप्रेरकौलीलयैव ॥ सीतारामा भिधानौकथमथविरहःस्यात्तयोःशोकलेशः कुत्रस्याछद्मनेदंप्रकटितमसुखंनाट्यवन्नात्मरूपं ॥ ॥ ४८ ॥ इति श्रीसंग्रहरामायणे अरण्यकांडे पंचमःसर्गः ॥ ५ ॥ ॥ ॥

टीकायां पंचमःसर्गः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विचिकायमार्गयामास ॥ ९ ॥ धूतदुःखः निरस्तदुःखः ॥ १० ॥ जिघत्सुपिपासुवत् भोक्तृ-



श्रीः ॥ मारयित्वाथमारीचं स्वाश्रमाभिमुखोव्रजन् ऊचेदृष्ट्वाभिधावंतं लक्ष्मणंलक्ष्मणाग्रजः ॥
॥ १ ॥ मायिनारक्षसांस्थाने मुक्त्वासीतांत्वमागतः ॥ निमित्तान्यप्यभद्राणि पश्येत्युक्त्वाययौप्रभुः ॥
॥ २ ॥ अश्रमःस्वाश्रमंप्राप्य सोपश्यन्निवमैथिलीं ॥ शोकाद्विचिन्वान्निववा नटयामासकेवलं ॥ ३ ॥
शुद्धांमान्यांसदारक्ष्यां सीतामाज्ञांचमेसमं ॥ त्यक्तवान्मित्रसौमित्रे त्वमित्थंराघवोब्रवीत् ॥ ४ ॥
शोकान्निष्पन्नबाष्पांबु र्लक्ष्मणोप्यब्रवीच्छनैः ॥ हालक्ष्मणेतिशब्दान्मां देवीगच्छेत्यचोदयत् ॥ ५ ॥
पालकस्त्रिदशानांच देवदेवोनसंशयः ॥ नतस्यव्यसनंशंक्यं मयेत्युक्तेप्युवाचसा ॥ ६ ॥
पापतेपापरूपत्वा न्मानसंमयिसंगतं ॥ तस्मादुपेक्षसेराम मित्युक्तोहंविमोहितः ॥ ७ ॥
तेनवाक्यशरेणाहं विद्धोमृगइवाहतः ॥ इत्युक्त्वारुरोदोच्चै र्मुक्तकंठोथलक्ष्मणः ॥ ८ ॥
सर्वभूतानिपप्रच्छ सर्वत्रविचिकायच ॥ सर्वभूतांतरांसीतां सर्वविच्चविडंबयन् ॥ ९ ॥
विरुरोदविचुक्रोश विललापपुनःपुनः ॥ हासीतेक्वासिहंतेति धूतदुःखोपिदुःखिवत् ॥ १० ॥
श्रांतवत्क्वामिवदपि सांजिघत्सुपिपासुवत् ॥ निर्द्वंद्वदुःखोप्यद्वंद्व श्रेष्ठतेस्मातिरुष्टवत् ॥ ११ ॥
रजस्तमोमयैर्भावैः शोकाद्यैःप्रकृतेःपरः ॥ अस्पृष्टस्तत्रविस्पष्टं नैकंमानंप्रचक्षते ॥ १२ ॥



श्रांतवत् ॥ ११ ॥ रामःएवंविधइत्यत्रनैकंबहुविधंमानंप्रमाणंच प्रचक्षतेविंमद्धः तस्माद्रामेणेदंकृतंसर्वं विडंबनार्थमेवेत्यर्थः ॥ १२ ॥ ॥ ॥

॥ १३ ॥ सगरक्षीरप्रायिवत् विषसहितक्षीरपानकर्तृवत् ॥ १४ ॥ तेपुरुषाःसंपदांपदंस्थानभूताः ॥ १५ ॥ १६ ॥ विचिन्वानइव मार्गमाणइव ॥

सांत्वयामासकिलतं लक्ष्मणःशोककोपयोः ॥ यत्पादपांसुंसंस्मृत्य द्वंद्वांछिंदंतियोगिनः ॥ १३ ॥
एतैर्दोषैःसमंरामं मन्वानामंदचेतसः ॥ आपदंस्मप्रपद्यंते सगरक्षीरपायिवत् ॥ १४ ॥ स्वछा
येऽनुभवंतीमं रामंदोषान्विहायतान् ॥ त्यक्त्वानीरंयथाक्षीरं हंसास्तेसंपदांपदं ॥ १५ ॥ एवंबभौ
सदसतां विवेकायसराघवः ॥ रजतानांचशुक्तीनां विवेकायेवपावकः ॥ १६ ॥ संचरन्नंचनीयां
घ्रि विंचिन्वानइवप्रियां ॥ जनस्थानवनप्रांते जटायुषमवैक्षत ॥ १७ ॥ छिन्नपक्षपदंदृष्ट्वा पति
तंपर्वतोपमं ॥ सीतार्थैथययौतस्मिन् करुणांकरुणाकरः ॥ १८ ॥ आर्तोवार्तांविशालाक्ष्या नि
वेद्यजगदीशितुः ॥ चरणांबुरुहंदृष्ट्वा मरणंप्रापपक्षिराट् ॥ १९ ॥ भक्तायस्वगतिंदत्वा तस्मैतस्य
कलेवरं ॥ संस्कारयामासविभु र्लक्ष्मणेनयथाविधि ॥ २० ॥ गत्वागोदावरींवारि दत्वातस्मैपत
त्रिणे ॥ जनस्थानेनिशांनीत्वा पश्चिमांजग्मतुर्दिशं ॥ २१ ॥ तावतीत्याथगछंतौ गहनानिबहू
न्यपि ॥ अपश्यतांकुक्षिगास्यं कबंधंनामराक्षसं ॥ २२ ॥ योजनायतबाहुभ्यां सिंहव्यालमृगा-
न्बहून् ॥ आकृष्यनिक्षिपन्नास्ये राघवौचाग्रहीदयं ॥ २३ ॥ दक्षिणोदक्षिणंबाहु मक्षिणोत्खड्ग
धारया ॥ रामोरामानुजस्तस्य वामोवाममखंडयत् ॥ २४ ॥ ॥ ॥ ॥ ॥

॥ १७ ॥ करुणांययौकृपांचकार ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ वामःचतुरः सस्यशत्रुरितिवा ॥ २४ ॥ ॥ ॥ ॥

आमूलतःकृंतहस्तो रक्तोरुधिरधारया ॥ पतितःपरिपप्रछ वीराग्व्यौकौयुवामिति ॥ २५ ॥ सौमि
त्रिस्तमुवाचात्र रामोदाशरथिर्हरिः ॥ अयमस्यानुजश्चाहं कोवात्वंकथ्यतामिति ॥ २६ ॥ कबं
धःप्रत्युवाचाथ धन्योस्मिभवदीक्षया ॥ नमोरामजगन्नाथ शापमोक्षोयमागतः ॥ २७ ॥ दनुना
मास्मिगंधर्वः शापाद्रक्षस्त्वमागतः ॥ अवध्योब्रह्मवरतो वज्रपातेनकुंचितः ॥ २८ ॥ नारायण
प्रसीदेति तांतनुंविमुमोचसः ॥ रामाज्ञयाथसौमित्रि स्तद्देहमदहद्बिले ॥ २९ ॥ दनुस्वरूपीप्रो
वाच रामत्वद्भक्तिमान्कपिः ॥ सुग्रीवोहनुमद्युक्तः सीतान्वेष्टाभवेदिति ॥ ३० ॥ परिक्रम्यप्रण-
म्याथ दनुर्दनुजसूदनं ॥ स्वर्गंययौययौचेशौ दनुनोक्तेनवर्त्मना ॥ ३१ ॥ तौपंपाभिमुखंयातौ
पश्चांप्राचींदिशंतदा ॥ नीत्वानिशांशैलपृष्ठे प्रभातेजग्मतुःपुनः ॥ ३२ ॥ मतंगस्याश्रमंचित्रं
मत्तमातंगगामिनौ ॥ पंपायाःपश्चिमेतीरे वीरौविविशतुःशुभं ॥ ३३ ॥ आलोक्यलोकनाथंतं
सानुजंस्वाश्रमंगतं ॥ शबरीपूजयामास फलमूलैस्तपस्विनी ॥ ३४ ॥ आपितेकुशलंभद्रे नियमे
ष्वयमेषुच ॥ इतिपृष्टाभगवता तुष्टायोगिन्यभाषत ॥ ३५ ॥ पद्मनाभभवत्पाद पद्मसद्मनोलि
नां ॥ मुनींद्राणांप्रसादान्मे कुशलंकृपयातव ॥ ३६ ॥ ॥ ॥

मतंगवाक्यमुकुरे मतंगनामकमुनिवाक्याख्यदर्पणे दर्पणेमुकुरादर्शावित्यमरः । तद्वचनेनेत्यर्थः । मतंज्ञातं ॥ ३७ ॥ ३८ ॥ ३९ ॥ पंपांनदीं ॥ ४० ॥ परान्दुर्जनान् ॥ ४१ ॥ अनलसःआलस्यादिदोषरहितः हनुमतिमतिदूतींबुध्दिनामिकांदूतीं प्रेष्यांप्रेषयन्निति दूतीसंचारिकासमेइसमरः । मनसाहनूमं

मतंगवाक्यमुकुरे मतंरूपमिदंतव ॥ अपरोक्षमवेक्ष्येह परंब्रह्मगुणार्णवं ॥ ३७ ॥ अनुज्ञांदेहि यज्ञेश प्रसीदेत्याभिधायसा ॥ पश्यंतीशंविवेशाथ ज्वलितंज्वलनंसती ॥ ३८ ॥ अवैदिक्यैशब र्यैच दयालुःस्वगतिंददौ ॥ तस्याभक्त्याप्रशंप्रीतो भक्तिर्हिभवमोचनी ॥ ३९ ॥ सौमित्रिणासं कथयन् गछन्नछांसऐक्षत ॥ दासीमिवाछांबुवाहां पंपांपंकजमालिनीं ॥ ४० ॥ स्त्रीसंगिनामित्थ ममंगलावलिं प्रकाशयन्साधुषुमोहयन्परान् ॥ नित्यंनिजानंदरसानुभूतिमा न्निर्दुःखलेशोपिबभौ सुदुःखिवत् ॥ ४१ ॥ सहनिजसहजेनस्वैरमानंदमू र्तिर्व्यलसदनलसोसौतत्रपंपातटांते ॥ अनु पममनुरागंबिभ्रतींभक्तमुख्ये हनुमतिमतिदूतींप्रेषयन्रामदेवः ॥ ४२ ॥ इति श्रीसंग्रहरामाय णे अरण्यकांडे षष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥ ॥

तंस्मरन्नित्यर्थः ॥ ४२ ॥ इत्यारण्यकांड टीकायां षष्ठःसर्गः ॥ ६ ॥ अरण्यकांडःसमाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥



॥इति श्रीसंग्रहरामायणे अरण्यकांडः समाप्तः॥

॥ श्रीगुरुभ्योनमः ॥ हनुमदवतारादिकंवक्तुंपीठिकांकरोति । प्लवंगमानामित्यादिना ॥ प्लवंगमानांवानराणां आधिराज्यं अधिराजत्वंगतः ॥ १ ॥ सिंधुरंगजंतस्यगजस्य केसरिवत् सिंहवत् ॥ २ ॥ शंखपूर्वशबलं शंखशबलनामकं तंगजमित्यर्थः । तंकेसरिनामकंवानरराजं ॥ ३ ॥ हेभगवत्तमाःपूज्य



॥ श्रीगुरुभ्योनमः ॥ प्लवंगमानांगतआधिराज्यं प्लवंगमःकेसरिनामधेयः ॥ मेरावुवासांजनयासुगात्र्या शच्याशचीकांतइवद्युलोके ॥ १ ॥ हंतुंभरद्वाजमभिद्रवंतं सिंधोस्तटेसिंधुरमुन्मदांधं ॥ अवेक्ष्यदूरादपितस्यकुंभे सकेसरीकेसरिवत्पपात ॥ २ ॥ तंशंखपूर्वशबलंसहत्वा तीर्थंमुनीनामभयंचकार ॥ महर्षिसंघःसमवापहर्षं वरंवृणीष्वेतिचतंजगाद ॥ ३ ॥ यदिप्रसन्नाभगवत्तमामे सुतंवृणेसर्वगुणाभिरामं ॥ तस्मान्नमुख्योस्तुविनामुकुंद मेवंसवव्रेथवरंद्विजेभ्यः ॥ ४ ॥ ततःकदाचित्कमलायताक्षी स्नातासुवस्त्राभरणांजनासा॥रम्यातमारामयुपश्रयंती प्राणंप्रधानंललितंददर्श ॥ ५ ॥ संस्पर्शनंनस्तवतन्विभूत्यै प्रोच्येतिबालामतिवेललज्जां ॥ श्रीमद्भुजाभ्यांपरिरभ्यदेवो व्यधत्तगर्भंभुवनप्रगल्भं ॥ ६ ॥ असूतसूनुंतमसांविनाशं तमंजनासज्जनकंजबंधुं ॥ अनर्घ्यमाणिक्यमणिप्रकाशं प्राचीनदेवंजगदेकदीपं ॥ ७ ॥ प्राणात्मकेप्राणसुतेप्रजाते चूडामणौ भागवतोत्तमानां ॥ ननंदचेतःसुरसुंदरीणां गर्भःपपातासुरसुंदरीणां ॥ ८ ॥ ॥ ॥



तमाइतिऋषीन्प्रतिसंबोधनं । वृणेवरयामि ॥ ४ ॥ ५ ॥ भुवनप्रगल्भंलोकपुश्रेष्ठं ॥ ६ ॥ तमसांविनाशंविनाशकरं तेजोमूर्तिमित्यर्थः । प्राची प्राची दिङ्नामिकास्त्री ॥ ७ ॥ प्राणात्मकेसाक्षान्मुख्यप्राणस्वरूपे ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बुभुक्षितं बुभुक्षावंतं जननीमाता अंजना ॥ ९ ॥ उद्यद्दिनेशंबालसूर्यंग्रसितुंग्रासीकर्तुं तत्तेजसासूर्यतेजमालोहितंरक्तं ॥ १० ॥ हरिचक्रकल्पं हरेःसुदर्शनचक्रस्यप्रत्तसमानंतेजःसामर्थ्यं । ईदृक्एवंविधं यूनःयौवनावस्थांगतस्य अस्यतेजः अप्रमेयंअपरिमितंभविष्यतीतिसुकुतूहलोभूदित्यन्वयः ॥ ॥ ११ ॥ अन्याभिसक्तायराहुणासहसंगतायाग्निशवेइत्यन्वयः । नधर्मबुद्धिःधर्मबुद्धिरहितःमाद्यन्मदयुक्तःप्रमाद्येत् प्रमादवान्भवेत् ॥ १२ ॥ तेनवज्रे

संजातमात्रंशिशुमद्भुतांगं बुभुक्षितंतंबलिनंविलोक्य ॥ यावत्फलार्थंजननीजगाम तावत्सबालः
सहसोत्पपात ॥ ९ ॥ उद्यद्दिनेशंग्रसितुंप्रयांतं तत्तेजसालोहितमाशुराहुं ॥ प्रत्युद्ययौनाथमलं
विचिन्व न्निसर्गतोदुष्टजनासहोसौ ॥ १० ॥ तमुत्पतंतंहरिचक्रकल्पं विलोक्यलोकःसुकुतूहलो
भूत् ॥ सद्योस्यजातस्यसुतेजईदृ ग्यूनोप्रमेयंहिभविष्यतीति ॥ ११ ॥ राहुस्तुशक्रंशरणंजगाम
शक्रोपिवज्रंशिशवेमुमोच ॥ अन्याभिसक्तायनधर्मबुद्धि र्माद्यन्प्रमाद्येत्सुजनोपिनूनं ॥ १२ ॥
निस्ताडितोसौनिशितेनतेन शैलेंद्रशृंगेथशिशुःपपात ॥ प्राणाधिनाथःप्रणयात्स्वपोतं जग्राहकु
प्यन्कुलिशायुधाय ॥ १३ ॥ तेनागसाप्राणपतौसकोपे चेलुर्नलोकाःशिवशक्रमुख्याः ॥ प्राणंवि
नाप्राणिषुनोहिचेष्टा श्रेष्ठापराधाहिफलंतिसद्यः ॥ १४ ॥ यज्ञाननैवाध्ययनंनधर्मो नोश्वासविश्वा
सविधिःकुतोन्यः ॥ लोकप्रणेत्राःकुपितेनतेन प्रजाःप्रजापंशरणंप्रजग्मुः ॥ १५ ॥ ब्रह्माथकिंचित्कु
पितोबभाषे कःस्वामिनेद्रुह्यतिजीवनेप्सुः ॥ ऐश्वर्यमत्तस्त्रिदशेश्वरोयं स्वस्यप्रजानांचचकारदुःखं १६

ण स्वपोतंस्वपुत्रं तुक्चपोतश्चदारूकइत्यमरः । कुलिशायुधाय इंद्राय ॥ १३ ॥ तेनागसा इंद्रकृतापराधेन सकोपेसतिनचेलुःचलितुमपिशक्तानबभूवुःनोहि नास्तिहि सद्यस्तदेव ॥ १४ ॥ प्रजापंब्रह्माणं ॥ १५ ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्राणंपपाठेत्यादिप्रत्येकंसंबंधः । उक्थंसर्वंजगदुत्थापनशक्तिमंतं सूत्रंआधारभूतं पपाठप्रतिपादितवती ॥ १७ ॥ शंभुश्चतुर्मुखःजीवदेवःमुख्यप्राणःयत्रत
त्रजगामेत्यन्वयः ॥ १८ ॥ क्षमंसमर्थं क्षमायांभूमौ क्षमयासहनशक्त्या ॥ १९ ॥ सुधामयेन अमृतमयेन व्यचीकसत् विकासयामास ॥ २० ॥ ईश्वरा
णांपालकानांसमर्थंच ईशितव्येशिक्षणीयेपालनीयेजगति मन्युःकोपोनास्तिनभवति उदस्थापयत्उत्थापयामास ॥ २१ ॥ विततेसति सर्वत्रशाखि़प्र-

श्रेष्ठश्रुतिःश्रेष्ठामिमंपपाठ प्राणंतथोक्थंजगतांचसूत्रं ॥ नमेवशोयंनशिवादिकानां नाथोस्तिनारा
यणएवतस्य ॥ १७ ॥ वाणीमुदाहृत्यतदेत्युदारां शंभुःसशर्वःप्रययौप्रजाभिः ॥ आहूयदेवानुप
देवयुक्तान् सपुत्रकोयत्रसजीवदेवः ॥ १८ ॥ भ्रूभंगमात्रेणजगंतिहंतुं क्षमंक्षमायांक्षमयानिषण्णं ॥
ध्यायंतमंकार्पितपुत्ररत्नं प्रियंसखायंभगवान्ददर्श ॥ १९ ॥ सवेदगर्भःकरुणाकुलात्मा तूर्णंकराग्रे
णसुधामयेन ॥ व्यचीकसद्बालमथाभिमृश्य विशुद्धरूपंकुमुदंयथेंदुः ॥ २० ॥ नास्तीश्वराणांज
गतीशितव्ये मन्युःपितॄणामिवपुत्रवर्गे ॥ उत्केत्युदस्थापयदाशुवायुं हस्तेनहस्तंपरिगृह्यवेधाः ॥
॥ २१ ॥ प्राणेप्रसन्नेविततेजगाम प्राणिव्रजोयंप्रकृतिंविपन्नः ॥ निदाघसंतप्तइवातिमात्रं जला
गमेगाधजलेचरौघः ॥ २२ ॥ भंगेप्रसक्तेपिनभंगमाप हनुःशिशोर्यत्धनुमानतोयं ॥ उत्केत्थम
म्लानसरोजमालां दिव्यांमहेंद्रोनिदधेतदंसे ॥ २३ ॥ ॥ ॥

त्वेनव्याप्तेसति विपन्नःपूर्वंनिश्चेष्टतयापतितः अयंप्राणिव्रजःचेतनसमूहःप्रकृतिंपूर्वस्वभावंजगामेत्यन्वयः निदाघसंतप्तःऊष्मसंतप्तःगाधजलेचरौघः अ-
निम्नस्थलस्थितमत्स्यसमूहः ॥ २२ ॥ हनुःअधरोष्ठाधोभागः कपोलांतत्पराहनुरितिसमरः ॥ २३ ॥ ॥ ॥ ॥ ॥

सइंद्रःभासुराणांशोभमानानांमध्येसभाजयामास संभावयामास सभाजनीयंसंभावनार्हं ॥२४॥ ततःज्ञानित्वादिगुणवत्वात् हनुशब्दस्यज्ञानादिगुणवाचित्वात् तद्वानयंहनुमान् हनुशब्दोज्ञानवाची हनुमानितिशब्दितइतिप्रमाणात् अभ्यधितनामकृतवान् ॥ २५ ॥ सूर्यांतिकेसूर्यगतनारायणांतिके व्याकरणाभियोगीमूलव्याकरणशास्त्रादिशास्त्रपाठग्रहवान् सूर्याभिमुख्येन सूर्यांतर्गतनारायणाभिमुखंयथाभवतितथा पश्चात्पतन् पृष्ठतःपतन प्लवमान

प्राणांकगंप्राणमिवद्वितीयं बालंचबालेतरसद्गुणाढ्यं ॥ सभासुराणामथभासुरंतं सभाजयामास सभाजनीयं ॥ २४ ॥ शस्त्रास्त्रसोढाखिलशत्रुहंता शास्त्रेषुसर्वेषुविदग्ध्यबुद्धिः ॥ ततोहनूमानभगवत्प्रियाणां श्रेष्ठोयमित्यभ्यधिताब्जयोनिः ॥ २५ ॥ सूर्यांतिकेव्याकरणाभियोगी सूर्याभिमुख्येनपतंश्चपश्चात् ॥ प्राच्याद्रिरेरस्तगिरिंजगाम ग्रंथंमहांतंहनुमान्दधानः ॥ २६ ॥ आनंदभाजोहरिभक्तिराज्ये प्रवृद्धनानागुणकोशराशेः ॥ तस्येंद्रियारातिजयध्वजोभूत्सुब्रह्मचर्यंभुवनाभिपूज्यं ॥ २७ ॥ चातुर्यमाधुर्यसुवीर्यशौर्यैरौदार्यधैर्यप्रमुखैर्गुणैःस्वैः ॥ सर्वज्ञतासर्वसमर्थताद्यैर्हनूमतःकोस्तिसमस्त्रिलोक्यां ॥ २८ ॥ असावसंगोविविधेपिलोके सर्वत्रसर्वेश्वरमेवपश्यन् ॥ चचारयोगानुगतांतरात्मा मरुत्समानोमरुतस्तनूजः ॥ २९ ॥ सौख्यायसख्यंस्वयमापतेन सुग्रीवनामाप्लवगप्रवर्हः ॥ श्रीमाननेकैःसचिवैर्युतोपि शतक्रतुर्यद्वदुरुक्रमेण ॥ ३० ॥ ॥

इत्यर्थः । प्राच्याद्रिरेःउदयाचलात् तत्रकियद्दूरमित्यादितु पंचमस्कंधतोवगंतव्यं ॥ २६ ॥ आनंदभाजःमहासंतोषयुक्तस्य इंद्रियारातिजयध्वजः इंद्रियाख्यशत्रूणांजयाख्यध्वजः ॥ २७ ॥ २८ ॥ २९ ॥ सौख्याय स्वस्यैवसुखाप्तये संततोहदर्शनहनुमता । ३० ॥ ॥ ॥ ॥

वियोगिनांस्त्रीवियोगवतां शोकदशांशोकावस्थां गतःप्राप्तः ॥ तौहनुमत्सुग्रीवौ ॥ ३१ ॥ आराद्दूरतएवप्लवगपुंगवे पलायनमकरोत् ॥ ३२ ॥ प्रकंपितांगा-
न् अत्यंतंसंचारितांगान् ॥ ३३ ॥ जिघांसूमांहंतुकामौ ॥ ३४ ॥ स्ववेषंवानरवेषं अष्टांगाविशिष्टं उरसाशिरसादृष्ट्यामनसावचसातथा। पद्भ्यांकराभ्यां

पंपातटेफुल्लवनेप्रकाश्य वियोगिनांशोकदशामशोकः ॥ सलक्ष्मणोसौगतऋश्यमूके तौवानरेंद्रौ
भगवान्ददर्श ॥ ३१ ॥ सिंहप्रभंपूरुषसिंहमेनं निरीक्ष्यरक्तायतनेत्रमत्र ॥ सबाणबाणासनपा
णिमारात्प्रपुप्लुवेसूर्यसुतःसहान्यैः ॥ ३२ ॥ अन्याद्रिसंस्थान्भयकंपितांगान् प्रकंपितांगान्प्लव
गानवेक्ष्य ॥ अप्राकृतात्मापुरुषोत्तमोयं नवोभयायेत्यवदद्धनूमान् ॥ ३३ ॥ सगद्गदंसूर्यसुतस्त
मूचे नूनंसखेवालिहितायवीरौ ॥ इमौजिघांसूममपार्श्वमाप्तौ वेत्तौपरीक्षस्वविचक्षणेति ॥ ३४ ॥
सभिक्षुवेषोहनुमान्स्ववेषं विहायविश्वेश्वरपार्श्वमाप्य ॥ प्रणाममष्टांगविशिष्टमस्मै चकारबिभ्रद्वि
नयंनयंच ॥ ३५ ॥ चरणतरुणपद्मपातिनंतं रघुकुलतिलकोहनुमंतमात्मदासं ॥ उदहरदथच
क्रलक्ष्मभाजा करकमलेनसुकोमलेनरामः ॥ ३६ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांडे
रामांके पंडिताचार्यकृतौ प्रथमःसर्गः ॥ १ ॥ ॥ ॥ ॥

चानुभ्यांप्रणामोष्टांगईरितइतिस्मृतिप्रसिद्धाष्टांगविशिष्टं बिभ्रद्दधानः नयंनीतिं ॥ ३५ ॥ चरणतरुणपद्मपातिनंतं श्रीपादाख्य विकासयुक्तपद्मेपतं
तंनमस्कुर्वंतं उदहरत्उत्थापयामास चक्रलक्ष्मभाजा सुदर्शनचक्रादिलांछनवता ॥ ३६ इति किष्किंधाकांड टीकायां प्रथमःसर्गः ॥ १ ॥ ॥

श्रीः ॥ मंजुलंसंमितं ॥ १ ॥ प्रतिभावुत्थिरेव प्रतिभाषतेउत्तरंप्रयच्छति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अतिचंडिका अतिक्रूरा ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

श्रीः ॥ आंजनेयोंजलिंबध्वा कंजलोचनसन्निधौ ॥ अंजसावाक्यमादत्त मंजुलंचित्तरंजनं ॥ १ ॥
चोद्यस्यास्योत्तरंवीर प्रतिभाप्रतिभाषते ॥ तथापिचोद्यतेस्माभि र्भवदालापलोलुपैः ॥ २ ॥ कोभ
वान्भुवनाश्चर्यं रूपमीदृशमुद्वहन् ॥ नंदनेनंदितुंयोग्यः क्षुद्रंवनमिदंगतः ॥ ३ ॥ जटाचीराक्षमा
लानां त्वत्संगममहोत्सवे ॥ मौलिकौशेयवलयैः कुत्रयातंसमत्सरैः ॥ ४ ॥ बाणपूर्णइमेतूणी पाणिः
कोदंडमंडितः ॥ अहोपरिघबाहोत्वां शंसंतिखलखंडनं ॥ ५ ॥ एषाखड्गलताश्यामा चंडिकेवातिचं
डिका ॥ केषांप्राणानहार्षीत्से केषांप्राणान्हरिष्यति ॥ ६ ॥ अन्वेष्टुमिवसंत्यक्तं कृतकृत्योभवान्कुतः ॥
अंबुजाभेप्रातिस्तंबं व्यापारयसिलोचने ॥ ७ ॥ अनुगंतानुरूपात्मा कोयंतेपुरुषर्षभः ॥ चतुरंगब
लंत्यक्त्वा परिवारंयमग्रहीः ॥ ८ ॥ इदानीमन्यलोकेभ्यो मन्येधन्यामिमांधरां ॥ पादपद्मभराक्रांतां
युवयोःपद्मलोचन ॥ ९ ॥ नरलोकानुरागेण नरनारायणावुभौ ॥ अवतीर्यावनीपृष्ठे चरतःप्रतिभा
तिमे ॥ १० ॥ वालिनोवानरेंद्रस्य भ्राताभ्रातृव्यतांगतः ॥ सुग्रीवोनामतस्याहं सुसखावायुनंदनः
॥ ११ ॥ अपूर्वपुरुषंदृष्ट्वा भवंतंतेनाबिभ्यता ॥ जिज्ञासुनाप्रेरितोहं भिक्षुरूपमुपागमं ॥ १२ ॥ श्रु
त्वावाक्यंहनुमतो रामोलक्ष्मणमब्रवीत् ॥ अमित्राणामभित्रोनः सौमित्रेमित्रमेषनः ॥ १३ ॥

भ्रातृव्यतांशत्रुतां ॥ ११ ॥ १२ ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

व्यक्तंव्याकरणंकृत्स्न मनेनबहुधामतं ॥ बहुव्याहरतानेन नकिंचिदपशब्दितं ॥ १४ ॥ काकुत्स्थेने
तिकथिते चित्तवित्तस्यलक्ष्मणः ॥ उदाहरदुदारात्मा मधुरंमारुतिंप्रति ॥ १५ ॥ राज्ञोदशरथस्यां
ग पुत्रोयंपुरुषर्षभः ॥ रामोनामरमानाथा दन्योनास्यसमोगुणैः ॥ १६ ॥ किरीटंकीटवत्यक्त्वा म-
हाराज्यैकलक्षणं ॥ गुरोर्नियोगांशिरसा वहन्वनमयंययौ ॥ १७ ॥ राकाचंद्रंचंद्रिकेव पतिमेनंपति
व्रता ॥ अन्वयासीदनायासा जानकीजगतांपतिं ॥ १८ ॥ अस्यपादरजोदास्यं वरिष्ठंसर्वसंपदः ॥
वांछंनन्वागतोज्येष्ठं नामतोलक्ष्मणोस्म्यहं ॥ १९ ॥ दुराचारेणचोरेण चोरितारक्षसावने ॥ अस्य
भार्यासतीसीता शूद्रेणेवशुभाश्रुतिः ॥ २० ॥ सुग्रीवःकिलसाहाय्यं सीतांद्रष्टुंकरिष्यति ॥ प्रतीक्ष
तेप्रभुर्युष्मा न्सज्जनान्सज्जनप्रियः ॥ २१ ॥ इत्युक्तऊचेहनुमान् देवदेवोपपादितं ॥ सुग्रीवोवालि
संत्रस्त स्त्वांरामशरणंगतः ॥ २२ ॥ पुरुषोत्तमतेसख्यं सोस्यायकपिरिछति ॥ स्वामिनस्तवका
र्यैनः स्वकृत्यंसाधयामहे ॥ २३ ॥ इत्युक्त्वामारुतीरामं सुस्मितास्यंसलक्ष्मणं ॥ आरोपयामासतदा
निजांसयुगलंद्रुतं ॥ २४ ॥ ऋश्यमूकवनोद्देशा न्मलयाद्रिंव्रजन्हरिः ॥ सरामलक्ष्मणोरेजे ससूर्ये
दुरिवांबुदः ॥ २५ ॥ सूर्यवंशध्वजेप्राप्ते सूर्यकोटिप्रभेप्रभौ ॥ सूर्यसूनुरभूत्फुल्लः सूर्यआप्तइवांबुजं ॥
॥ २६ ॥ उवाचवाचंहनुमान् सुग्रीवमवलोकयन् ॥ तातदाशरथिंरामं सानुजंपश्यनःपतिं ॥ २७ ॥

श्रीः ॥ हरिःसुग्रीवः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अवरक्ष ॥ ५ ॥ अंबवःपल्वलायिताः ॥ ६ ॥ चीर्णकृतं ॥ ७ ॥ नौआवयोःऋक्षशिरसि ऋक्षशिरा

॥ श्रीगुरुभ्योनमः ॥ सहासीनोहनुमता हरीराघवसन्निधौ ॥ प्रांजलिर्निष्पतद्बाष्पः करुणंवाक्य
मब्रवीत् ॥ १ ॥ वालीज्येष्ठोममभ्राता बलज्येष्ठोजगत्त्रये ॥ राज्यंमित्राणिवित्तंच ममापहृतवान्
बलात् ॥ २ ॥ इतोपिदुःसहंकिंचि त्कथंवक्ष्यामितेग्रतः ॥ प्रियांममप्रणयिनीं बलाद्भुङ्क्तेपहृ-
त्यसः ॥ ३ ॥ प्रेषितास्तेनहरयो बहवोनिहतामया ॥ ममैकोहनुमान्बंधु र्मज्जतांनौरिवांभसि ॥
॥ ४ ॥ शरण्यानन्यशरणं दीनंदासमवाशुमां ॥ त्राताकिलत्रिलोक्यास्त्व मवतीर्णोवनीतले ॥
॥ ५ ॥ अद्रयःकंदुकायंते सिंधवस्तस्यचांबवः ॥ देवासुरास्तृणायंते वालिनोबलमीदृशं ॥ ६ ॥
अल्पमागोमयाचीर्णं वित्तपूर्वंनचैवतत् ॥ चंडोदंडःकृतस्तेन साक्षीतत्रैषमारुतिः ॥ ७ ॥ ताते
नौऋक्षशिरसि राज्ञिलोकांतरंगते ॥ वालीवानरराजोभू द्यौवराज्येचमांव्यधात् ॥ ८ ॥ माया-
वीनामबलवान् दुंदुभेःपूर्वजोसुरः ॥ स्त्रीनिमित्तेनवैरेण किष्किंधांनिश्युपागमत् ॥ ९ ॥ गुहाद्वा
रिमहाबाहुं ममभ्रातरमाव्हयत् ॥ वालीनिवारितोस्माभि र्निष्पपातगुहागृहात् ॥ १० ॥ अन्व
गांप्रणयादेनं द्रावयंतंमहासुरं ॥ मायावीचपराद्रुत्य पातालंतलमाविशत् ॥ ११ ॥ गुहाद्वारिप्र
तीक्षस्व यावदागमनंमम ॥ मामित्युक्त्वाविशद्वीर स्तरसासरसातलं ॥ १२ ॥ ॥ ॥

नामके ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ सवालीतरसावेगेन ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ प्यर्थातिरोहितंकृतवानस्मि ॥ १४ ॥ १५ ॥ मृगयुःमृगवधकर्ता ॥ १६ ॥ १७ ॥ क्रुधाकोपेन प्रतिघारुट्क्रुधौस्त्रियामित्यमरः ॥ १८ ॥
॥ १९ ॥ निहन्यानिहितंकुरु महामयं महारोगं रोगव्याधिगदामयइत्यमरः ॥ २० ॥ २१ ॥ २२ ॥ महेंद्राहितहेतयः दैत्यादीनामायुधानि असाधार



संवत्सरमहंज्येष्ठं प्रतीक्ष्याबिलसन्मुखे ॥ सफेनंरुधिरापूरं दृष्ट्वाश्रौषंमहास्वनं ॥ १३ ॥ अथचामं
गलाशंकी शोकशंकुविदारितः ॥ किंचिद्विलप्यशैलेन गुहाद्वारंप्यधामहं ॥ १४ ॥ अनिछंतंचसा
म्राज्यं भ्रातृशोकेनमंत्रिणः ॥ यावदत्राभ्यषिंचन्मां तावद्वालीसमागतः ॥ १५ ॥ वत्सरंमृगयित्वो
ग्रं यथैवमृगयुर्मृगं ॥ हत्वामायाविनंप्राप्तो बिलंपिहितमैक्षत ॥ १६ ॥ सुग्रीवेत्याव्हयन्नुच्चै रलब्धा
चप्रतिस्वरं ॥ बिलात्कृच्छ्रेणानिर्गम्य किष्किंधायामदृश्यत ॥ १७ ॥ क्रुधाजाज्वल्यमानंतं पदेहंपतितो
वदं ॥ रक्षराज्यंक्षमस्वार्य बालिशत्वंममेत्यलं ॥ १८ ॥ उक्त्वाबहुविधंवैरा त्परुषंपुरुषोत्तम ॥ मामेकवा
ससंदीनं नगरान्निरयापयत् ॥ १९ ॥ ऋश्यमूकेवसाम्यस्य दुर्गमेकारणांतरात् ॥ सहजंतंनिहन्यामे
महामयमिवाहितं ॥ २० ॥ परिदेवनमित्यस्य देवःश्रुत्वाब्रवीद्वचः ॥ एकेषुणाहनिष्यामि तवदारापहा
रिणं ॥ २१ ॥ इतिप्रतिज्ञांरामस्य श्रुत्वारविसुतोब्रवीत् ॥ कथमेकेषुणानाथ वध्योवालीबलोत्धतः ॥
॥ २२ ॥ यस्यवर्मापिनाभिंद न्महेंद्राहितहेतयः ॥ तमसाधारणंमन्ये प्रतिज्ञाविषयंतव ॥ २३ ॥
एवंब्रुवाणंसुग्रीव माचचष्टेसलक्ष्मणः ॥ सखेकथंतेविश्वासो वालिनःसूदनेभवेत् ॥ २४ ॥ ॥

णमतिवलिष्ठं अशक्यमितिवा ॥ २३ ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इंद्रारिःदैत्यः ॥ २५ ॥ प्रतिवीरंप्रतिभटं ॥ २६ ॥ २७ ॥ धनप्रख्यंनीलमेघसमंमातंगंगजं ॥ २८ ॥ उत्तोलयन्बाहुभ्यामुत्तोलनंकुर्वन् अपासर्पन् नि
र्जग्मुः ॥ २९ ॥ ऋश्यमूकाश्रयः ऋश्यमूकसंस्थः ॥ ३० ॥ ३१ ॥ पदंस्थानं ॥ ३२ ॥ तंतनोत्तोलितंदुंदुभिदेहं ॥ ३३ ॥ पूर्वदेवस्यदैत्यस्य पूर्वदेवाः

इत्युक्तऊचेसुग्रीवो देवेदमवधारय ॥ इंद्रारिर्दुंदुभिर्नाम दृप्तोब्धियोत्धुमभ्यधात् ॥ २५ ॥
वरुणोमरणाद्भीतः प्रतिवीरंसुरद्विषः ॥ हिमवंतमुवाचाथ हिमवानपिवालिनं ॥ २६ ॥ समुद्रम
द्रिंचाक्षिप्य दुंदुभिर्दुंदुभिःस्वनं ॥ किष्किंधाद्वारमासाद्य योद्धुंवालिनमाव्हयत् ॥ २७ ॥ महि
षाकारमसुरं प्रतिद्रुत्यमहाकपिः ॥ निजघानघनप्रख्यं मातंगमिवकेसरी ॥ २८ ॥ वीरउत्तोल
यन्देहं तस्ययोजनमाक्षिपत् ॥ तस्माद्देहादपासर्पन् सांद्रारुधिरबिंदवः ॥ २९ ॥ ऋश्यमूकाश्र
योदृष्ट्वा स्वाश्रमंरुधिरोक्षितं ॥ अमर्षितोमहर्षिस्तं मतंगोनामशप्तवान् ॥ ३० ॥ यदैनंदेशमाया
सि तदावध्योभवेरिति ॥ वालिनोमुनिशापोयं वरोभून्ममतद्विपोः ॥ ३१ वालिनाकालितस्येश
त्रिलोक्यांनास्तिमेपदं ॥ इममाश्रममाश्रित्य स्वामिन्जीवामिदीनधीः ॥ ३२ ॥ यदिदैतेयदेहंतं
दूरंक्षिपासिराघव ॥ तर्हियास्यामिविश्वास मित्युक्त्वाविरराम सः ॥ ३३ ॥ पूर्वदेवस्यदेहंतं पर्वतो
पममीश्वरः ॥ अंगुष्ठलीलयैवारा त्छतयोजनमाक्षिपत् ॥ ३४ ॥ विदार्यभूमिंपाताले देहोचूर्णय
दासुरान् ॥ गर्वोत्धतान्शर्ववरा द्रामस्यबलवेगतः ॥ ३५ ॥ ॥ ॥

सुरद्विषइत्समरः ॥ ३४ ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्वत्वात् तदीयत्वात् ॥ ३६ ॥ अन्यत्रचतुर्गुणबलरहिते शतगुणबलराहितेवापुरुषेनियमः शत्रुत्वेनाभिमतस्यपुरुषस्य जयहननादिनियमः ॥ ३७ ॥ कुणपःशवःगारिमाभारः आर्द्रस्य अशुष्कस्य ॥ ३८ ॥ ३९ ॥ विष्वंचः तत्रतत्रस्थिताः पंक्तित्वेननस्थिताइत्यर्थः । ह्रदः ह्रदयात्

अत्याशंकीकपिःप्रोचे पुनश्चपुरुषोत्तमं ॥ स्वत्वाद्देवाथवक्ष्यामि क्षम्यतांनाथचापलं ॥ ३६ ॥
जेतुंचतुर्गुणबलो हंतुंशतगुणाधिकः ॥ वीरोवीरंसमर्थःस्या न्नान्यत्रानियमोभवेत् ॥ ३७ ॥ वालि-
नायोजनंक्षिप्तः स्त्वयातुशतयोजनं ॥ कुणपःकिंतुगरिमा प्रागार्द्रस्यविशिष्यते ॥ ३८ ॥ कुलि
शाच्चातिकठिणाः सप्ततालाइहोद्गताः ॥ चालयेत्तान्बलाद्वाली क्षेप्तुंपत्राणिनप्रभुः ॥ ३९ ॥ वि
ष्वंचस्तेविभिद्यंते त्वयायद्येकपत्रिणा ॥ शंकाशंकुर्ममत्हृद स्तर्हिसाधूद्धृतोभवेत् ॥ ४० ॥ पू-
ष्णःपुत्रेवदत्येवं रामःकार्मुकमाददे ॥ लक्ष्मणास्येंदुमालोक्य सायकंचक्रमाददे ॥ ४१ ॥ विरिं-
चिवरतोछेद्या न्विरिंचपदमिछतः ॥ असुरांस्तरुतांयातान् ज्ञात्वातानमुचच्छरं ॥ ४२ ॥ राम-
मुक्तशरोभित्वा सप्ततालांश्चसत्वरः ॥ धराधरंधरांचाधः सप्तलोकानदारयत् ॥ ४३ ॥ सोसुरें
द्रान्कुमुदिनः पातालांतेन्वपातयत् ॥ बृंहितान्ब्रह्मवरतो रंभास्तंभानिवक्षणात् ॥ ४४ ॥ पद्मा
पतेःपाणिपद्मं सहसाहंसरूपवान् ॥ प्रायाद्वायुमयोबाण एवंकृतपराक्रमः ॥ ४५ ॥ लोकेयथैक
आलोको बहूनर्थान्प्रकाशयेत् ॥ एवमेकंहरेःकर्म बहूनर्थान्हिसाधयेत् ॥ ४६ ॥ ॥

॥ ४० ॥ पूष्णःसूर्यस्य ॥ ४१ ॥ ४२ ॥ धराधरंपर्वतं धरांभूमिं ॥ ४३ ॥ कुमुदिनःकुमुदिनामकान् ॥ ४४ ॥ पद्मापतेःलक्ष्मीपतेःवायुमयः मुख्यप्राणात्मकः ॥ ४५ ॥ आलोकःदीपः ॥ ४६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४७ ॥ माययास्वेच्छया ॥ ४८ ॥ ४९ ॥ इत्यमर्थयता सौरिणासुग्रीवेण आंजनेयेनहनुमताच साकमित्यन्वयः ॥ ५० ॥ कांतारकांते उपवनादिभिर्मनोहरे । हरिभिःकपिभिः वालिकालः वालिनःकालःसंहारकः ॥ ५१ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांड टीकायां तृतीयःसर्गः ॥ ३ ॥

निष्कग्रीवोस्यसुग्रीवो निपात्यांघ्रावभाषत ॥ अनंतवीर्यानुपम प्रसीदपुरुषोत्तम ॥ ४७ ॥ तृणैरिवावृतंकूपं भस्मनेवाग्निमावृतं ॥ त्वांस्वछंमाययाछन्नं नायंवेदजडोजनः ॥ ४८ ॥ इदानीमेवमेमृत्युं वालिव्याजंनिपातय ॥ इमामेवनिशामीश शयेमरणनिर्भयः ॥ ४९ ॥ इत्यमर्थयतासाकमांजनेयेनसौरिणा ॥ रामःसलक्ष्मणःप्रायात् किष्किंधांवालिपालितां ॥५०॥ रामःकपीनांनगरांतिकेथ कांतारकांतेहरिभिःपरीतः ॥ तस्थौहसन्कार्मुकबाणपाणिः प्रतीक्ष्यकालंकिलवालिकालः ॥ ॥ ५१ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांडे तृतीयःसर्गः ॥ ३ ॥ ॥ ॥

श्रीः ॥ अवलोक्यजगन्नाथः कपिनाथमभाषत ॥ भ्रातृव्यंभ्रातरंतेत्व माहवायाह्वयेत्यथ ॥ १ ॥ निर्गम्यगह्वनात्तस्मान्नगरद्वारमागतः ॥ सिंहग्रीवोथसुग्रीवो भ्राताभ्रातरमाह्वयत् ॥ २ ॥ आहूतमात्रोरिपुणा दंडाहतइवोरगः ॥ निष्पपातगुहागेहा द्वालीबलवतांवरः ॥ ३ ॥ मुष्टिभिश्चतलैश्चोभौ निघ्नंतावितरेतरं ॥ आयुध्यतांक्रमात्क्षीणः सूर्यसूनुःपराद्रवत् ॥ ४ ॥ ऋश्यमूकंपराद्रुत्य यावद्भास्करिणास्थितं ॥ तावदायातमत्रैव परेशेनापरैःसह ॥ ५ ॥ रक्तवैरक्तवपुः कपींद्रोस्यापतत्पदे ॥ करुणावीरकस्मात्वं मयिनायातवानिति ॥ ६ ॥ ॥ ॥ ॥

श्रीः ॥ भ्रातृव्यंशत्रुंआह्वाययुत्वाय ॥ १ ॥ गह्वनात्ऋश्यमूकस्यवनात् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ॥ ॥

नमुक्तेषुःइतिपदं ॥ ७ ॥ परीवादंअपवादं तंवालिनं ॥ ८ ॥ ९ ॥ आमुमोचाचिन्हार्थंन्यस्तवान् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ धामविनावालिनाः

भ्रातरौसमरूपौस्थः समवेषौसमस्वरौ ॥ अविवेकान्नमुक्तेषु रितिरामोब्रवीदिमं ॥ ७ ॥
भ्रात्रर्थेभ्रातरंरामः सहसाहतवानिति ॥ परिहर्तुंपरीवादं तदेशोनजघानतं ॥ ८ ॥ कराग्रेकंदु
कमिव योनंतंजगदीक्षते ॥ यश्चकर्ताखिलस्यास्य तस्यकुत्राविवेकिता ॥ ९ ॥ रजताभांसुवर्णा
भे गजपुष्पमयींस्रजं ॥ आमुमोचाथसुग्रीवे हनुमान्रामशासनात् ॥ १० ॥ आलयंवालिनःप्रा
या त्सहितोहरिभिर्हरिः ॥ मंडितंकदलीषंडे र्दृष्ट्वासप्तजनाश्रयं ॥ ११ ॥ चिंतयामासभगवा
न्कार्यमुत्तरभाविसः ॥ पश्येच्चेत्प्रणमेन्मह्यं वालीवध्योनसंमतः ॥ १२ ॥ प्रत्यज्ञायिवधश्चास्य
प्रपन्नायार्कसूनवे ॥ अनंतइतिसंचिंत्य सालजालेनिलीनवत् ॥ १३ ॥ स्थित्वाप्रस्थापयत्पूष्णः
पुत्रंवासविनायुधे ॥ सिंहनादंसविदधे सिंहसंहननोहरिः ॥ १४ ॥ किष्किंधावासिनोयेन सं
भ्रांतावालिनाविना ॥ पुरादुदपतद्वाली सुंदरीवृंदसंकुलात् ॥ १५ ॥ विद्युल्लतापरिवृता न्मेघा
नीकादिवाशनिः ॥ उत्पतंतंपतिंवीक्ष्य तारातारांधिपानना ॥ १६ ॥ शिरीषमालामंजुश्यां दो
र्भ्यांबध्वेदमब्रवीत् ॥ वदामिवाणींनाथेमां नकार्पण्यान्नचापलात् ॥ १७ ॥ भ्रातुस्तेप्रत्ययस्थानं
विद्धितस्यसकारणं ॥ सुग्रीवस्याभवन्मित्रं रामोराक्षससूदनः ॥ १८ ॥ ॥ ॥

ह युधेयुत्धंकर्तुं ॥ १४ ॥ १५ ॥ १६ ॥ बध्वाआलिंग्य ॥ १७ ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

॥ १९ ॥ नःअस्माकं सःमित्रंनार्कि अस्माकमपिमित्रमेवेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सौल्हदंस्नेहः ॥ २५ ॥ २६ ॥ २७ ॥ निर्घाता

इत्यंगदेनगदितं कुमारेणश्रुतंमया ॥ नतेनोपकृतंतस्य नत्वयापकृतंपते ॥ १९ ॥ लोकानांकि
लमित्रंसः किंनोमित्रंनराघवः ॥ अंगदोयातुसंगृह्य रमणीयतरान्मणीन् ॥ २० ॥ रामंसलक्ष्मणं
नेतु मेवंसंधिर्विधीयतां ॥ पराजितत्वाद्भ्रातृत्वां लोकनाथाश्रयत्वतः ॥ २१ ॥ भागार्हत्वाच्चसुग्री
वो यौवराज्येभिषिच्यतां ॥ नचेद्वैरिणिसंधिस्ते यामदूरंगुहांतरं ॥ २२ ॥ संहरेल्लोकमेवैको रामे
षुस्त्वांतुकिंपुनः ॥ तथेत्युक्तोवदद्वीरः प्रियेनाहंनपुंसकः ॥ २३ आहूतोवैरिणावाली ननमेन्नपरा
द्रवेत् ॥ अनृशंसोजगन्नाथो नन्दृशंसत्वमेष्यति ॥ २४ ॥ अथवारामबाणेन पूतोयास्यामिसद्ग
तिं ॥ सौल्हदंदर्शितंदेवि युक्तमेतत्त्वयोदितं ॥ २५ ॥ निवर्तस्वसहस्त्रीभिः सत्यमेवात्मनाशपे ॥ त
मुत्पतंतमित्युक्ता पतिंकृत्वाप्रदक्षिणं ॥ २६ ॥ स्वस्तीत्युक्त्वापतिंद्रष्टुं नाशक्नोद्बाष्पबाधिता ॥
निर्गम्यपरितःपश्यन् दृष्ट्वातत्राग्रजोनुजं ॥ २७ ॥ परिधायदृढंवास आपतंतंसमापतत् ॥ नि
र्घाताविवनिर्घोषौ सत्वरौतौशराविव ॥ २८ ॥ बलींद्राविवविक्रांतौ कपींद्रौप्रत्ययुध्यतां ॥ मुष्टि
मुद्यम्यकुपितो वालीसुग्रीवमब्रवीत् ॥ २९ ॥ एषमुष्टिप्रहारस्ते प्राणानपहरेदिति ॥ तवैवप्राण
त्दन्मुष्टि रित्युक्त्वारविनंदनः ॥ ३० ॥ ॥ ॥ ॥

विवअश्वनीव निवरांघोषोययोस्तौतथोक्तौ ॥ २८ ॥ बलिश्चइंद्रश्चबलींद्रौ ॥ २९ ॥ ३० ॥ ॥ ॥ ॥

॥ ३१ ॥ उत्तालमुन्नतं राघवेणकर्त्रा सामित्थंसम्यगाभिवृत्थमोजः सहनशक्तिर्लाघवं हस्तलाघवं यस्यसामित्थोजोलाघवः ॥ ३२ ॥ ३३ ॥ ३४ ॥ तेना
भाधिपंचंद्रंअमृतंभुक्तं ॥ ३५ ॥ ३६ ॥ ३७ ॥ पंचनखाःयेषांते पंचनखाः पंचपंचप्राणिनःभक्ष्याःभक्षयितुंयोग्याः ॥ ३८ ॥ तान्आह शशकइत्यादि
ना॥ शशकःशशःशल्यकःवराहजातौकश्चित्वराहविशेषः। गोधासूक्ष्मशिशुमारस्वात्स्यतः कश्चित्प्राणिविशेषः। श्वाविद् अरण्यचरःपृष्ठेत्रिरेखःलोके योराम

मुष्टिमुद्यम्यतन्मूर्ध्नि ताडयामासलाघवात् ॥ रुधिरोद्गारिणंदृष्ट्वा वासविंभास्करिर्द्रुतं ॥ ३१ ॥ सा
लमुत्तालमुत्पाट्य तेनतंप्रजहारच ॥ राघवेणसामित्थोजो लाघवेनार्कसूनुना ॥ ३२ ॥ ताडितो
भूतलेवाली निपपाततातिविव्हलः ॥ आर्तोमुहूर्तमाश्वास्य जज्वालक्रोधवन्हिना ॥ ३३ ॥ शतम
न्युसुतोभूय स्तयोर्युद्धमवर्तत ॥ ग्रस्तमालोक्यदेवेशः कनिष्ठंज्येष्ठतेजसा ॥ ३४ ॥ भाधिपंभा
नुभासेव शरमेकममुंचत ॥ वालिनोमरणंकुर्वं नमृतंचप्रभोःशरः ॥ ३५ ॥ शरीरंदारयंश्चैव शि
रोमध्यमदारयत् ॥ मंदचेष्टोमहींयातो वंदमानोपिचेतसा ॥ ३६ ॥ इंद्रसूनुरुवाचेद मिंदिरेशंपु
रोगतं ॥ रामराजर्षिवर्यस्त्व मन्यासक्तमनागसं ॥ ३७॥ वनौकसंपशुसमं कथंसूदितवानसि ॥
पंचपंचनखाभक्ष्याः प्रशस्ताःशास्त्रवेदिभिः ॥ ३८ ॥ शशकःशल्यकोगोधा श्वाविट्कूर्मश्चपंच
मः ॥ नचर्मनास्थिनोमांसं संस्पृशंतिमनीषिणः ॥ ३९ ॥ यस्यसोहंकपिःकस्मा त्त्वयापंचनखोह
तः ॥ वालिनैवमुपालब्धो धर्मसूक्ष्ममजानता ॥ ४० ॥ ॥ ॥

णसेतुबंधनकाले पांसूनानीतवानिति प्रसिद्धःक्षुद्रप्राणीवर्तते । नजातिविशेष स्थितोयमदृष्टमंजातः कश्चित्प्राणिविशेषः । नतुश्वाविडेतिवृकोवद् शक्यतोविरोधात् ॥ ३९ ॥ उपालब्धःआक्षिप्तः ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥ ॥

वागुराजालं उपशयः निलीनतयाअवस्थानं । पाशाःमार्गेमृगवधार्थं मंत्रेणनिक्षिप्यमाणाः पाशविशेषाः पाशाइत्युच्यंते ॥ ४१ ॥ उपशयिनानिलीन तयास्थितेन ॥ ४२ ॥ ४३ ॥ ४४ ॥ असूयितुंअसूयांकर्तुं ॥ ४५ ॥ ४६ ॥ ४७ ॥ मृतिनाशनींमरणमपाकुर्वाणां ॥ ४८ ॥ ४९ ॥ वीरसूःवीरभूतां

दत्तवान्भगवांस्तस्मै हसन्नुत्तरमुत्तमं ॥ वागुरोपशयःपाशाः पूर्वैक्तोमृगद्रुहां ॥४१॥ हतोमयोप शयिना सौम्यशाखामृगोह्यसि ॥ मृगंचामृगमात्मानं वेत्थकिंधार्मिकत्वतः ॥ ४२ ॥ कथंत्यक्तोनु जोभुक्ता तद्भार्याचस्नुषासमा ॥ अहंशास्तास्मिदुष्टानां सतांचोत्पथगामिनां ॥ ४३ ॥ तस्मात्धतो सिकामंत्वां जीवयामियदिच्छसि ॥ रामवाणीसुधांप्राप्य रमणीयांप्रसन्नधीः ॥ ४४ ॥ वाक्यमश्रुमुखो वाली भद्भिगद्गदमुक्तवान् ॥ क्षमस्वार्तगिरंस्वामि न्नमेऽसूयितुमर्हसि ॥४५॥ पालयस्वाशिशुंदास मंग दंकनकांगदं ॥ मृतौयत्कीर्तनंकर्तुं तपोदानानिकुर्वते ॥४६॥ तंत्वामवेक्ष्यमेमृत्युं मन्येसाक्षादनुग्रहं ॥ उक्त्वेतिमोहमापेदे वालीप्राणान्नमुक्तवान् ॥ ४७ ॥ इंद्रदत्तांदधन्मालां कांचनींमृतिनाशनीं ॥ स्वपतिं पतितंश्रुत्वा तारातारस्वसापुनः ॥ ४८ ॥ विलपंतीगुहात्तस्मा द्यातुंमनउपादधे ॥ धावंतींराजमहिषीं मुंचतीमश्रुसंततिं ॥ ४९ ॥ दीर्घंश्वसंतींसंप्रेक्ष्य प्रोचिरेवालिसेवकाः ॥ वीरसूर्वीरपत्नीत्वं कुत्रधाव सिनिर्भया ॥५०॥ सुग्रीवराक्षसाद्वालं पालयामःप्रवासिनः ॥ इत्युक्त्वोत्पततोवीक्ष्य क्षुभ्यतोबिभ्यतः कपीन् ॥५१॥ उवाचवचनंसाध्वी देशकालबलोचितं ॥ अवधीद्भ्रातरंभ्राता राजानंराज्यकामुकः ५२

गदाख्यपुत्रवती वीरपत्नीवीरस्यवालिनःपत्नी वीरपत्नीवीरभार्या वीरमाताचवीरसूरित्यमरः ॥ ५० ॥ प्रवासिनः इतस्थलादन्यत्रस्थलेवासंकुर्वंतः ॥ ५१ ॥ अवधीत्जघान ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कुणपस्यशवस्यअंगदेन बाहुभूषणेन केयूरमंगदंतुल्यइत्यमरः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ क्रियासमभिहारेण पुनःपुनःभृशमितिवा ॥ ५८ ॥ ॥ ५९ ॥ प्राणप्रख्यःप्राणसमः ॥ ६० ॥ ६१ ॥ अकथयःअवदः ॥ ६२ ॥ कितवकपटिन् ॥ ६३ ॥ वैरिकक्षाशुशुक्षणिः वैरिनामकवनस्य वन्हिव



भजताद्यतमात्मेशं कपयःकुत्रयास्यथ ॥ कुणपस्यांगदेनैव कृत्यंमेस्त्यंगदेनकिं ॥ ५३ ॥ तंदेवःपालयेदेव मन्नाथमनुयाम्यहं ॥ वदंतीत्थंप्रलपंती पतिंपतितमैक्षत ॥ ५४ ॥ रक्तैराक्तरजोमिश्रं वीरशय्याशयंशुभा ॥ पपातपत्युःपादांते हानाथेतिविराविणी ॥ ५५ ॥ करींद्रेणेवकदली शोकेनाभिहतासती ॥ अंगदंचाग्रतःकृत्वा वानर्योवालिवल्लभाः ॥ ५६ ॥ विलपुस्तंमृतंप्राप्य ताडयंत्योंगमात्मनः ॥ विकीर्णकेशाःक्रोशंत्यो विकीर्णाभरणस्रजः ॥ ५७ ॥ साश्रुधाराःकृपांकस्य वालिवध्वोनचाक्रिरे ॥ क्रियासमभिहारेण ताडयंतीनिजांतनुं ॥ ५८ ॥ विललापाकुलाबाला तारापतिपरायणा ॥ आर्यपुत्रप्रबुध्यस्व तारास्मितववल्लभा ॥ ५९ ॥ सतीमनागसींनाथ कस्मान्मांनाभिनंदसि ॥ प्राणप्रख्यःसुतस्तेय मंगदःसमुपास्थितः ॥ ६० ॥ गाढंरोदितिदीनस्त्व मुत्तिष्ठपरिसांत्वय ॥ लोकमन्यंगतोसित्वं लोकपालपराक्रम ॥ ६१ ॥ कृपांनैसर्गिकींत्यक्ता मांचसंत्यक्तवानसि ॥ एकांतेऽकथयःकांत सर्वाभ्यःप्रेयसींहिमां ॥ ६२ ॥ कथंकितवतत्सत्यं प्राप्तोसिसुरसुंदरीः ॥ विरहानलसंतप्तां लोटंतींविधवायितां ॥ ६३ ॥ नयमामपितेलोकं गृहदासीभवामिते ॥ हानाथकपिनाथत्वं वैरिकक्षाशुशुक्षणिः ॥ ६४ ॥

त्स्थितः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

निर्वाणंविनाशं ॥ ६५ ॥ सितंधवलं ॥ ६६ ॥ भवांतरे जन्मांतरे वीक्षेवीक्षमाणाभवानीतिलोडुत्तमपुरुषैकवचनं ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

रामवारिनिधिंप्राप्य निर्वाणंगतवानसि ॥ रामंव्रजामशरणं नाथमित्यर्थितंमया ॥ ६५ ॥
अभिमानज्वरात्तस्मि न्पथ्येनाभूद्रुचिस्तव ॥ चारुचाटुचतेपांगं मंगलंहसितंसितं ॥ ६६ ॥ भवां
तरेप्यहंवीक्षे शुभंकिंचिद्यदीशमे ॥ भुंक्ष्वसुग्रीवसाम्राज्यं ज्येष्ठस्यरुधिरोक्षितं ॥ ६७ ॥ सुमना
राममाश्रित्य नहिसंधिःकृतस्त्वया ॥ अयिनाथविधेकुर्याः करुणांकरुणाकर ॥ ६८ ॥ अर्धमेतद्
थांक्लिष्टं कांतेनार्धेनयुज्यतां ॥ विलपंतीतिकरुणं सुस्वरावालिवल्लभा ॥ ६९ ॥ पत्युरंकेशिरःकृ
त्वा मरणायमनोदधे ॥ तस्यारुदितशब्देन कुमारस्यांगदस्यच ॥ ७० ॥ उद्बुधःकिंचिदुन्मी
ल्य वालीमंदंवचोब्रवीत् ॥ वत्ससुग्रीवमावैर मनुसंधत्स्वमूढवत् ॥ ७१ ॥ कृतापकारोपिपुरा म
यादिष्टानुवर्तिना ॥ अंगदंविद्धितेपुत्रं शत्रुपुत्रंनजात्विति ॥ ७२ ॥ भ्रातॄणामेकजातानां मन्यपु
त्रःस्वपुत्रकः ॥ भुंक्ष्वसाम्राज्यमेतत्वं यौवराज्येंगदंकुरु ॥ ७३ ॥ सुषेणतनयांतारां मावमंस्थाम
हामतिं ॥ सदारामस्यदासस्याः संपदेत्रपरत्रच ॥ ७४ ॥ एषप्राणभृतांनाथः पुरुषःप्रकृतेःपरः ॥
रामकार्येषुवर्येषु नप्रमादीक्वचिद्भव ॥ ७५ ॥ त्वमंगदानुवर्तस्व सुग्रीवंरामसंमतं ॥ अयिरामज
गन्नाथ पुत्रोयंतेर्पितोमया ॥ ७६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ७१ ॥ दिष्टानुवर्तिनादैववशानुवर्तिना ॥ ७२ ॥ ७३ ॥ महामतिंमहोपायबुद्धियुक्तांस्याःभव ॥ ७४ ॥ ७५ ॥ ७६ ॥ ॥ ॥

॥ ७७ ॥ आत्मचेतःकलशेस्वमनोनामककुंभे महेंद्रभावंइंद्रत्वं ॥ ७८ ॥ ॥ इति श्रीकिष्किंधाकांडटीकायां चतुर्थःसर्गः ॥ ४ ॥



इयंचमालाभवता सुग्रीवायप्रदीयतां ॥ प्रोच्येतिमालामुन्मुच्य रामपादारविंदयोः ॥ सम्यगर्पितवान्वाली स्वात्मानंचात्मवित्तमः ॥ ७७ ॥ सइत्थमुक्त्वापरिमुक्तसंगो रामस्यरूपामृतमीक्षणाभ्यां॥ तदास्मचेतःकलशेप्रगृह्य महेंद्रजःप्रापमहेंद्रभावं॥७८॥इति श्रीसं०रा०किष्कि०च०स०४

श्रीः ॥ मृतंतंभ्रातरंदृष्ट्वा सुग्रीवःसुस्वरंरुदन् ॥ बहुलंविललापाथ अग्रजस्यपदेपतन् ॥ १ ॥ मरणंरमणस्याथ विलपंतीविलोक्यसा ॥ परिरंभपरादेहं सशरंचाभ्यपद्यत ॥ २ ॥ पश्यन्नश्रुमुखोदेव्याः साहसंसहसाततः ॥ नीलउत्पाटयामास शरंवालिशरीरतः ॥ ३ ॥ कांताकांतांगमालिंग्य रुधिरौघाभिषेकिणी ॥ अभिवादयतातंते यांतंपुत्रेत्यभाषत ॥ ४ ॥ उत्थायतूर्णंपितर मभ्यवादयदंगदः ॥ आलोक्यतंसाश्रुधारा तारापुनरभाषत ॥ ५ ॥ आयुष्मन्भववत्सेति वत्समुक्त्वापतिव्रता ॥ सचिवान्किंकरांश्चैतान् अनुज्ञाप्यचसंगतान् ॥ ६ ॥ उत्तिष्ठभूपभूपृष्ठा हल्लभाचेदहंतव ॥ वीरलक्षणसंपन्ना नपृथिव्यांहिशेरते ॥ ७ ॥ संग्रामयज्ञावभृथे रामबाणांबुनातव ॥ पत्नींमामपिसंयुंक्ष्व नापत्नीकोभवान्व्रजेत् ॥ ८ ॥ ॥ ॥

श्रीः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ संग्रामयज्ञावभृथे युद्धाख्ययज्ञस्यावभृथस्नाने ॥ ८ ॥ ॥ ॥ ॥

वीरधवाबीरःधवःभर्तायस्याःसातथोक्तातां धवःप्रियःपतिर्भर्ताइत्यमरः । विधवापदं विधवेतिनाम ॥ ९ ॥ क्षमानाथभूपाल ॥ १० ॥ प्रजहासुंत्यक्तु कामंमकृतिपूर्वावस्थां ॥ ११ ॥ १२ ॥ भवेभवेजन्मनिजन्मनि स्रवंत्यांनद्यां स्रवंतीनिम्नगापगेत्यमरः। एधसांकाष्ठानां ॥ १३ ॥ तस्यात्मानंस्वरूपसं

विषमालोक्यपास्यामि प्रवेक्ष्याम्यथवानलं ॥ यावद्वीरधवांतांमां नस्पृशेद्विधवापदं ॥ ९ ॥ कर्मणामनसावाचा यदागस्तेकृतंमया ॥ क्षमानाथक्षमस्वत्वं कांतातेस्यांभवांतरे ॥ १० ॥ विलपंतींतथाबालां प्रजिहासुमसूनपि ॥ वानर्यःसांत्वयंत्योत्र प्रकृतिंनेतुमक्षमाः ॥ ११ ॥ अंतःपुरचरोवृद्धः प्राज्ञस्तत्रेदमब्रवीत् ॥ कांतस्यकांताकःकांतः कःपुत्रःकःपिताभवेत् ॥ १२ ॥ अस्थिरःसंगमोह्येषां कांतादीनांभवेभवे ॥ ईश्वरेछानुवृत्तानां स्रवंत्यामेधसामिव ॥ १३ ॥ त्वंतुनीतिमतीतारे कथमेवंविषीदसि ॥ तस्यात्मानंसुतंरक्ष प्रियंचेद्भर्तुरिछसि ॥ १४ ॥ तस्मिन्नेवंप्रवदति विलपंतीषुतासुच ॥ धृष्टमाचष्टवचनं लक्ष्मणःशुभलक्षणः ॥ १५ ॥ सुग्रीवकिमिदंदैन्यं तारांसांत्वयसुव्रतां ॥ आरोप्यशिबिकांशीघ्रं देहोनिर्ह्रीयतामिति ॥ १६ ॥ हरयोहनुमन्नुज्ञा घृतगंधाद्युपानयन् ॥ राज्ञोनिर्हरणायाशु तारेणशिबिकाहृता ॥ १७ ॥ देहमंगदसुग्रीवा वारोप्यशिबिकांशुभां ॥ शिबिकावाहिभिर्भृत्यै र्निन्यतूराजभूतिभिः ॥ १८ ॥ संवृतांविलपंतीभि र्वानरीभिः प्रणीयतं ॥ द्वीपेनद्याअदहतां नानालंकारभूषितं ॥ १९ ॥ ॥ ॥ ॥ ॥

जातं ॥ १४ ॥ १५ ॥ निर्ह्रीयतांसंस्क्रियतां ॥ १६ ॥ हनुमन्नुज्ञाःहनुमतांप्रेरिताः आहृताःआनीताः ॥ १७ ॥ १८ ॥ प्रणीयनीता ॥ १९ ॥

॥ ४३ ॥ ४४ ॥ वर्षाःवर्षाकालाख्यास्त्रियःचलत्पीनपयोधराः परिवर्तमानोन्नतमेघवत्यःअन्यत्स्फुटार्थः ॥ ४५ ॥ स्वच्छांबरानिर्मलाकाशवती स्मि-
ताब्जास्याविकसितपद्माख्यमुखवती विशुद्धाशावती निर्मलदिङ्मंडलवती शरत् शरदृतुनामिका अन्यत्रार्थःप्रकटः ॥ ४६ ॥ कर्पूरगौरीकर्पूरवत् धवलव-
र्णाजगत्यांलोके वितताव्याप्ता सत्पद्मषंडेषुउत्तमपद्मसमूहेषु रामकीर्तिमालापक्षेसात्विकपुरुषाख्यपद्मसमूहेष्वित्यर्थः । पदंस्थितिं दधानाकुर्वाणा अथश

मुनीनांसनकादीनां विषयाहितृणायिताः ॥ यत्पादपांसुंसंस्मृत्य सोजितःस्त्रीजितःकथं ॥ ४३ ॥
सुंदरेवसतोरस्मि न्कंदरछलमंदिरे ॥ संकथाविविधाश्चासन् रामरामानुजन्मनोः ॥ ४४ ॥ आ
नयंत्योनववारि चलत्पीनपयोधराः ॥ समित्कुशादीन्कुर्वाणा वर्षाःपर्यचरन्विभुं ॥ ४५ ॥ स्व-
छांबरास्मिताब्जास्या विशुद्धाशावतीशरत् ॥ लक्ष्मणंबोधयामास जानकीमृग्यतामिति ॥ ४६ ॥
कर्पूरगौरीवितताजगत्यां सत्पद्मषंडेषुपदंदधाना ॥ अवापलक्ष्मीमथहंसमाला रामस्यजिष्णोरिव
कीर्तिमाला ॥ ४७ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांडे पंचमःसर्गः ॥ ५ ॥ ॥
श्रीः ॥ अथविज्ञायसुग्रीवं संक्लिश्यप्राप्तसंपदं ॥ व्यक्तंस्त्रीभोगसंसक्तं हनुमानिदमब्रवीत् ॥ १ ॥
प्राप्तारामप्रसादेन राज्यकोशास्त्रियस्त्वया ॥ इदानींभोगसक्तस्त्वं नाथंनोव्यस्मरःकथं ॥ २ ॥
सर्पवद्दर्पवंतोये विस्मरंत्युपकारकं ॥ त्वादृशामादृशैस्तेषां राजन्कार्यंहिशिक्षणं ॥ ३ ॥ ॥

रत्कालागमनानंतरं जिष्णोःजयशीलवतः ॥ ४७ ॥ ॥ इति श्रीकिष्किंधाकांडटीकायां पंचमःसर्गः ॥ ५ ॥ ॥ ॥ ॥
श्री ॥ संक्लिश्य पूर्वंबहुकालंबहुक्लेशंप्राप्य ॥ १ ॥ व्यस्मरःविस्मृतवानभवः ॥ २ ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४ ॥ ५ ॥ ६ ॥ आकूर्पूर्वदंड्यःदंडार्हः ॥ ७ ॥ संदिष्टानिर्दिष्टेसति ॥ ८ ॥ ९ ॥ वालिघ्नमार्गेणैव वालीयेनहतस्तेनैवमार्गेणैव ॥ १० ॥ ११ ॥

रामोनामजगन्नाथ स्तत्कार्यंनोविशेषतः ॥ स्वकीयमेवकर्तव्यं तस्मात्प्रेषयवानरान् ॥ ४ ॥
हनुमद्वाक्यमाकर्ण्य हनुमंतंप्रयुज्यसः ॥ आहूयनीलप्रभृतीन् सुग्रीवोवाक्यमब्रवीत् ॥ ५ ॥
आनीयतांत्वयानील सर्वेवानरयूथपाः ॥ पूज्यान्वानरवृद्धांस्त्वं सांगदःसमुपानय ॥ ६ ॥
पौर्णमास्यामिहायातु सेनासेनापतेखिला ॥ प्राक्सप्तरात्रान्नागच्छन् वानरोदंड्यएवमे ॥ ७ ॥
सुग्रीवेणेतिसंदिष्टा न्नीलादीन्वानरोत्तमान् ॥ प्रेषयामासहनुमान् राजांतःपुरमाविशत् ॥ ८ ॥
प्राप्तांशरदमालोक्य रामोलक्ष्मणमब्रवीत् ॥ याहिलक्ष्मणकिष्किंधां ब्रूहितंवानराधिपं ॥ ९ ॥
कार्येनोविस्मरासिचे त्कार्यंस्वंप्राप्यवानर ॥ वालिघ्नमार्गेणैव वालीमार्गेव्रजेरिति ॥ १० ॥
रामस्यतद्वचःश्रुत्वा रामंरामानुजोब्रवीत् ॥ आर्याधुनातिमर्यादं निहनिष्यामितंकपिं ॥ ११ ॥
अतिसक्तेदुराचारे वालिघ्नेरविजेहते ॥ विचिनोत्वंगदोराजा सीतांहनुमतासह ॥ १२ ॥ अथ-
वावानरैःकिंते निजकार्यस्यसाधने ॥ त्वद्भ्रूभंगेणनियतं ननुनाथजगत्त्रयं ॥ १३ ॥ इतिब्रुवाणंतं
दृष्ट्वा क्रुद्धंकोदंडपाणिनं ॥ मातातसाहसंकार्षी रितिरामोब्रवीद्धसन् ॥ १४ ॥ गच्छन्पुरींससौमि
त्रिः स्मरन्सुग्रीवमंदतां ॥ क्रुद्धःशिलांश्चसालांश्च पादघातैरचूर्णयत् ॥ १५ ॥ ॥ ॥

१२ ॥ १३ ॥ १४ ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १६ ॥ राघवप्रतिघंराघवस्यकोपं कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौस्त्रियौसमरः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ दौवारिकान् द्वारपालकान् ॥ २१ ॥



किष्किंधांप्रविशंतंतं कोपेनांतकसन्निभं ॥ गजलक्षबलाःप्रेक्ष्य कपयोथपराद्रवन् ॥ १६ ॥ सरतो
त्सवसंसक्तः कपिभिश्चानिवेदितः ॥ राघवप्रतिघंघोरं सुग्रीवोनविवेदतं ॥ १७ ॥ लक्ष्मणप्रेषितोभी
तः प्राप्यांतःपुरमंगदः ॥ तांवातांमब्रवीत्पित्रे सोपित्रस्तोन्वाचिंतयत् ॥ १८ ॥ रामंप्रतिमयाकिंचि
न्नदुरुक्तंनदुष्कृतं ॥ तथापिलक्ष्मणःक्रुद्धो विपरीतोहिमेविधिः ॥ १९ ॥ सुग्रीवमितिसंतप्तं धीरोमा
रुतिरब्रवीत् ॥ अशुश्रूषापराधीत्वं लक्ष्मणंक्षमयेतिति ॥ २० ॥ दौवारिकाननाहत्य प्राविशल्लक्ष्म-
णःपुरीं ॥ मणिहेममयींदिव्यां सततप्रामथैक्षत ॥ २१ ॥ वानरीवानरगणै र्देवीदेवैःसमैर्युतां ॥ सर्वा-
भरणसंपन्नैः सर्वैःसर्वांगसुंदरैः ॥ २२ ॥ आरामग्रहवापीभिः प्रासादायतनादिभिः ॥ विश्वकर्मकृते
र्विश्वे र्विशेषैरुपशोभितां ॥ २३ ॥ मध्येकपींद्रगेहानां सौमित्रिश्चान्वमैक्षत ॥ महेंद्रमंदिरमिव महेंद्र
सुतमंदिरं ॥ २४ ॥ ताराकमायाभ्यामाश्लिष्टं दिव्यसिंहासनेस्थितं ॥ रविजंरविसंकाशं नत्रप्रैक्षतलक्ष्म
णः ॥ २५ ॥ क्रोधेनाविष्टचित्तोसौ भ्रुकुटीकृतः ॥ रक्ताक्षश्वसन्क्रुद्धः सोदर्शीरविसूनुना ॥ २६ ॥
आसनात्तूर्णमुत्थाय पत्नीभ्यांसहितःकपिः ॥ प्रांजलिर्भयसंभ्रांत स्वगेहेसन्यवेशयत् ॥ २७ ॥
असहिष्णुःकृतघ्नस्त्वं दर्पितस्त्वंश्रियान्वितं ॥ क्रोधरूक्षाक्षरांप्राचे लक्ष्मणोवाक्पतीश्वरं ॥ २८ ॥

॥ २९ ॥ ३० ॥ विचारितानिमार्गितानि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ पौरस्त्यंपुरस्तात् पुरतःविद्यमानं ॥

नन्वग्निसाक्षिकंप्रोक्त स्त्वयाराघववानर ॥ मह्यंराज्येत्वयादत्ते सीतांविचिनुयामिति ॥ २९ ॥ मदां-
धःप्रमदासक्तः प्रमादंप्राप्तवानसि ॥ रामकार्येसुरैःपूज्ये यथाप्राकृतपूरुषः ॥ ३० ॥ अतीताबहवो-
मासा राज्यंप्राप्तवतित्वयि ॥ सीतानाद्यापिविचिता सख्यंखंडितवानसि ॥ ३१ ॥ देवायद्दास्यमिछं
ति ब्रह्मरुद्रेंद्रपूर्वकाः ॥ देवदेवस्यतस्यास्य किंसख्यंकपिनात्वया ॥ ३२ ॥ ऋतेपितवसाहाय्यं सी-
तांप्राप्स्यतिराघवः ॥ ऋतेपिपल्वलपयः परिपूर्णोमहार्णवः ॥ ३३ ॥ चराचरगुरौवक्रं यदेतत्धृदयं
तव ॥ अनार्यंतद्विदार्यायं शरःपास्यतिशोणितं ॥ ३४ ॥ एवंनिर्भर्त्सयत्युच्चैः कपींद्रंराघवानुजे ॥
वानरेषुविषण्णेषु तारासौमित्रिमब्रवीत् ॥ ३५ ॥ नरदेवकुमारत्वं धार्मिकक्षंतुमर्हसि ॥ चिरंक्लिष्टःसु
खंप्राप्य सुसंयुक्तःकपीश्वरः ॥ ३६ ॥ किंतुकार्याणिरामस्य नविस्मरतिजात्विति ॥ वानरान्मुक्तवा
न्क्षिप्र मानेतुंसर्ववानरान् ॥ ३७ ॥ रावणोरामरमणीं बहुकोटीबलोहरत् ॥ तद्वधार्थंचमूनेया वालि
नोक्तंश्रुतंमया ॥ ३८ ॥ ज्येष्ठवत्पूज्यएवांग सुग्रीवोस्यसखातव ॥ सख्यंकथंखंडनीयं हनूमतिहिजी
वति ॥ ३९ ॥ रामानुजप्रसीदत्वं पश्यदासीस्तवात्रनः ॥ पौरस्त्यंभयमाशंक्य दीनाबाष्पमुखीस्त्रियः
॥ ४० ॥ इतितारागिराशांतं लक्ष्मणंरविजोब्रवीत् ॥ सखेममागःक्षंतव्यं जनन्येवशिशोस्त्वया ४१

॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥४२॥४३॥४४॥ दशमाहात् दशमदिनात् ॥४५॥४६॥४७॥४८॥४९॥५०॥५१॥५२॥५३॥५४॥ कृतागसः कृतापराधस्य ॥५५॥ इति किं० टी० ६॥



शरोयस्यैकएवैत त्त्रैलोक्यमपिसंहरेत् ॥ नास्मत्कृत्यंप्रभोस्तस्य वयंस्वार्थयतामहे ॥ ४२ ॥ प्रसादितः सौरिणेति प्रसन्नोलक्ष्मणोब्रवीत् ॥ कार्यार्थहात्संभ्रमोयं मित्रमेक्षम्यतामिति ॥४३॥ हरींद्रवचनात्प्रोसे हरींस्तुहनुमान्पुनः ॥ विदिक्षुदिक्षुप्लवगा नानेतुंगच्छतद्रुतं ॥ ४४ ॥ महेंद्रमलयादिभ्यो द्वीपेभ्यश्चप्लवंगमाः ॥ आयांतुदशमाहात्प्राङ् नोचेद्दंडोभविष्यति ॥४५॥ इतिवायुसुतेनोक्ता वायुवेगास्तुवानराः ॥ मार्गज्ञान्प्लवगान्सर्वा नुर्वीगानानयद्द्रुतं ॥ ४६ ॥ तैश्चोदितास्तुतोताद्रेः कोट्योहाटकसन्निभाः ॥ दशाग छन्प्लवंगानां तिस्रःकोट्योंजनप्रभाः ॥ ४७ ॥ कैलासशिखरेभ्यश्च सिंहकेसरवर्चसां ॥ सप्तकोटिसहस्राणि कपीनांराममाययुः ॥४८॥ फलमूलरसज्ञानां हिमालयनिवासिनां ॥ कपिकोटिसहस्राणां सहस्रंरामभाययौ ॥ ४९ ॥ अंगारसप्रभांगानां विंध्याद्रावंध्यरंहसां ॥ मधुकोटिसहस्राणि हरीणांराममाययुः ॥ ॥५०॥ पयोब्धिवेलानिलया स्तमालवनगंधिनः ॥ वानरानारिकेलाशा असंख्याआपतन्प्रभुं ॥५१॥ नदीभ्यश्चनदेभ्यश्च नानाद्रिभ्यस्ततस्ततः ॥ देवांशावानराःसर्वे रामनाम्निश्रुतेययुः ॥५२॥ महेश्वरमखान्येभ्यो जातमूलफलादिकं ॥ हिमाद्रावाप्यचापूर्वं दूताराज्ञेन्यवेदयन् ॥५३॥ मणिमय्याशिबिकया स सुग्रीवःसलक्ष्मणः ॥ गत्वारामांतिकेतूर्णं अवतीर्णोपतत्पदे ॥५४॥ प्रसीदमेनाथकृतागसस्त्वं कृपाकरेत्याशुतमर्थयंतं ॥ रामोभिरामःस्मितचंद्रचारु रुत्थाप्यसुग्रीवमथालिलिंगे ॥५५॥ इति सं० रा० कि० ६

श्रीः ॥ सिंहलक्षार्बुदबलाः सिंहसंहननाअथ ॥ प्लवगाआप्लुतादिग्भ्यः पर्वताभाविभोःपुरः ॥१॥
तरुणार्कारुणाःकेचि च्चंद्रगौराश्चवानराः ॥ सरोजकेसराभाश्च प्रापुःश्यामाःसितासिताः ॥ २ ॥
कपिपद्मसहस्रेण कपिशंकुशतेनच ॥ वृतोंगदोराममाप्य जयेतिप्रांजलिःस्थितः ॥ ३ ॥ ततो-
नीलछविर्नीलो दशकोटिशतैर्वृतः ॥ उग्राणांहरिवीराणा मग्रतःप्रत्यदृश्यत ॥ ४ ॥ बहुलक्षैर्ह-
रीणांतु कोटिभिश्चसमन्वितः ॥ तारातातःसुषेणोथ कांचनाद्रिरिवैक्षत ॥ ५ ॥ दशकोटिसहस्रै-
स्तु वृतःशतबलिर्बली ॥ कोसलेंद्रंववंदेथ पनसोदशकोटिभिः ॥ ६ ॥ पिताहनुमतःश्रीमान्
सर्ववानरसत्तमः ॥ केसरीसूर्यदीप्तास्यः प्रायाद्बहुबलैर्वृतः ॥ ७ ॥ गोलांगूलोगवाक्षोथ प्राप्तः
कोटिसहस्रवान् ॥ धूम्रोदृश्यतधूम्राक्षो ऋक्षकोटिसहस्रवान् ॥ ८ ॥ गवयोगतवान्रामं वृतो
द्वादशकोटिभिः ॥ षष्ठिकोटिवृतःप्रायाद्राघवंगंधमादनः ॥ ९ ॥ गजश्चवृषभाख्यश्च शलभः
शरभस्तथा ॥ पृथक्पृथक्कोटिवृता रामपादमुपासत ॥ १० ॥ महांतौमैंदद्विविदौ कोटीःसप्त-
शाष्टच ॥ प्रकर्षंतौगतौरामं रुमण्वान्कोटिसंवृतः ॥ ११ ॥ बृहस्पतिसमोनीत्या तारस्ताराधि-
पद्युतिः ॥ वृतःकोटिसहस्रेण रामोपांतमुपेयिवान् ॥ १२ ॥ ॥ ॥ ॥ ॥

इंद्रजानुः इंद्रजानुनामकः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ हनुमान्वह्निहिरात्मजौ हनुमत्सुग्रीवौ ॥ १७ ॥ वंदारून् वंदनशीलान् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ कावेरीं



उपेंद्रमापेंद्रजानुः कपीनांपद्मकोटिभिः ॥ वृतोदधिमुखःप्राप देवंद्वादशकोटिभिः ॥ १३ ॥ कपि
खर्वसहस्रेण कुमुदस्तममोदयत् ॥ एकविंशतिकोटीभि रुदारश्चदरीमुखः ॥ १४ ॥ जांबवान्
विनतोरंभो भीमःसंपातिनामकः ॥ विजयश्चहरिस्तत्र वेगादर्शीमहाहनुः ॥ १५ ॥ शरार्चिःश
रगुल्मश्च सुहोत्रोल्कामुखौतथा ॥ ससंघाःसहिताःसर्वे पुनरन्येचवानराः ॥ १६ ॥ एतैःसर्वैःप
रिवृतो हनुमद्वह्निहिरात्मजौ ॥ विश्वेश्वरमसेवेतां शंभुशक्राविवामरैः ॥ १७ ॥ आस्यतामितिता
नुक्त्वा वंदारून्वानरानथ ॥ उवाचवाचंसुग्रीवः प्रांजलिःकंजलोचनं ॥ १८ ॥ नियुज्यतांनिजे
कार्ये नाथदासाअमीतव ॥ इत्युक्तोभगवानूचे त्वंनियुंक्ष्वहरीनिति ॥ १९ ॥ चतसृष्वप्यथोदिक्षु
वानरान्वानराधिपः ॥ विचेतुंतांसरोजाक्षीं वीरान्संदिदिशेक्रमात् ॥ २० ॥ विनतत्वंकपिगणैः
साकमैंद्रींदिशंव्रज ॥ मृग्यतांतत्रवैदेही त्वंहिमेसचिवःसदा ॥ २१ ॥ यमुनोपवनंगत्वा यामुनं
चमहागिरिं ॥ सीताविचीयतांगंगां सरयूंकौशिकींतथा ॥ २२ ॥ नर्मदाचन्दशोणं कावेरींगोम
तीमपि ॥ पूर्वांसरस्वतींभूयो मागधान्काशिकोसलान् ॥ २३ ॥ विदेहानथपौंड्राद्यां स्तिमिंचर
जताकरं ॥ मंदरंतदधिष्ठानं किरातानांचमंदिरं ॥ २४ ॥ ॥ ॥ ॥ ॥

उत्तरकावेरीं ॥ २३ ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

। २५ ॥ २६ ॥ २७ ॥अक्षाणि इंद्रियाणि ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ सागस्त्यं अगस्त्यमुनिनासहितं ॥ ३२ ॥ ३३ ॥ हरित्दिक् ॥ ३४ ॥

स्वर्गाकरंस्वर्णरूप्यं गत्वासीताविमृग्यतां ॥ जंबूद्वीपमतिक्रम्य शिशिरंगिरिपुंगवं ॥ २५ ॥ द्वी
पानन्यानपिप्राप्य देवदेवींविमृग्यतां ॥ आगम्यतांचमासांते सर्वैर्दंड्योन्यथाभवेत् ॥ २६ ॥
दक्षिणांहनुमान्गत्वा दक्षस्त्वंपश्यजानकीं ॥ गुरुःसखाचसचिवः शरणंचभवान्हिमे ॥ २७ ॥
अंगदाद्याइमेवीरा स्त्वामन्वायातुनायकं ॥ मुख्यप्राणमिवाक्षाणि त्वयिभारःसमाहितः ॥ २८ ॥
यदिमेप्राणगोप्तासि रामदासाग्रणीर्यदि ॥ रावणस्यालयेज्ञात्वा सीतांचागच्छराघवं ॥ २९ ॥
चतुर्दशसुलोकेषु दशस्वपिहिदिक्षुते ॥ गतिर्नविहताक्कापि वायुनंदनवायुवत् ॥ ३० ॥ सहस्र
शिखरंविंध्य मतिदुर्गंजगत्त्रये ॥ नर्मदाद्यानदीर्गत्वा तत्रसीताविमृग्यतां ॥ ३१ ॥ कलिंगाद्यां
श्चविषयान् दंडकारण्यमुल्बणं ॥ गोदावरींचकावेरीं सागस्त्यंमलयाचलं ॥ ३२ ॥ पुलस्त्यमा
श्रमगतं नत्वातस्याभ्यनुज्ञया ॥ अतीत्यसिंधून्द्वीपांश्च गत्वासीताविमृग्यतां ॥ ३३ ॥ भवता
श्वशुरेदानीं सुषेणवरुणोपम ॥ कर्तव्यंबंधुकृत्यंनः पश्चिमागम्यतांहरित् ॥ ३४ ॥ शुक्रेनकपिल
क्षाभ्यां गत्वागत्वाविचीयतां ॥ सीतारावणगेहेच सम्यगेवाधुनात्वया ॥ ३५ ॥ बाल्हीकार्जिके
कयादी न्विषयान्पत्तनानिच ॥ नानावनानिसरितः समुद्रोपांतपर्वतान् ॥ ३६ ॥

॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ आप्यमाप्य । अन्यान्द्वीपांश्चगत्वामृग्यतामित्यत्र तत्रतत्रतेषामनुकूलाःपरिचिताःमार्गाःसंति नतुपूर्वनादिनागमनं नथातत्रतत्रगत्वा
भवेत्तेनाविरोधःस्यात् अतइमामाशंकांपरिहर्तुंपूर्वमेवग्रंथकारो मार्गज्ञैरित्युक्तवान् तस्मादन्यद्वीपादिगमनमपितेषांयुक्तमिति ॥ ३९ ॥ ४० ॥ ४१ ॥

अपिपंचनदंतीर्थं काश्मीरंचाऽऽप्यमृग्यतां ॥ गांधारविषयंगत्वा पारियात्रंचपर्वतं ॥ ३७ ॥ चक्र
वंतंगिरिंयत्र चक्रंविष्णोर्विनिर्मितं ॥ तंचदेशंसमुद्रांते पांचजन्यंयथाभवत् ॥ ३८ ॥ पर्गोनिर-
हार्मिर्दुर्गैः स्तथाप्राग्ज्योतिषंपुरं ॥ सुमेधादीन्गिरीन्प्राप्य द्वीपानन्यांश्चमृग्यतां ॥ ३९ ॥ त्वया
शतबलेसार्धं त्रिभिर्वैवस्वतात्मजैः ॥ देवीमृग्योत्तराशायां गत्वान्यैरपिवानरैः ॥ ४० ॥ मत्स्या-
दीन्शूरसेनादीन् विषयाग्र्यान्कुरूनपि ॥ मद्रकादीन्हिमाद्रिंच गत्वाशीतांविमृग्यतां ॥ ४१ ॥
भृगुतुंडंकालगिरिं तथाताम्रातकंगिरिं ॥ सुदर्शनंदेवसभं कैलासमलकापुरीं ॥ ४२ ॥ अद्रिं
त्रिशिखरंक्रौंचं मैनाकंगंधमादनं ॥ द्वीपानन्यानपिप्राप्य रामरामांविमृग्यतां ॥ ४३ ॥ आग-
म्यतांचमासात्प्राक् सर्वैर्दंडोन्यथाभवेत् ॥ सीतांवीक्षितयोदक्षः समेराज्यार्धमर्हति ॥ ४४ ॥ क्षे-
त्रेषुतत्रतत्रापि मुनीन्नमतपृच्छत ॥ सीतायाःपदवीमन्या नपिजंतून्पदेपदे ॥ ४५ ॥ दिशिदिश्ये
वमादिश्य प्रेषयामासशीघ्रगान् ॥ बाढमित्युद्गतान्वीरान् वानरान्वानराधिपः ॥ ४६ ॥ विन-
तेगतवत्यैंद्रीं सुषेणेपश्चिमामपि ॥ उत्तराशांशतबलौ रामोमारुतिमब्रवीत् ॥ ४७ ॥ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४८ ॥ ४९ ॥ मानसस्यमानसमरोवरस्य ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ चंडस्यचंडिनामकस्य विनिश्युः निमार्गेतर्वतः

तातकार्यमिदंकर्तुं त्वंप्रभुर्नापरेक्वचित् ॥ विहायकेश्रीवराह मुध्धरेयुर्वसुंधरां ॥ ४८ ॥ तस्मादेतै रुपेतस्त्वं गच्छदक्षिणदक्षिणां ॥ देहिदेव्यैमदीयंत्वं प्रत्ययायांगुलीयकं ॥ ४९ ॥ इत्युक्त्वासददौ दीप्तं रत्नभासांगुलीयकं ॥ मानितंमानसस्येव मंडलंबालभानुना ॥ ५० ॥ अंजलिभ्यांतदादाय प्रांजलिःसोंजनासुतः ॥ ॐमित्युक्त्वाययौयाम्यां तारजांबवदादिभिः ॥ ५१ ॥ विनतश्चसुषेणश्च वीरःशतबलिस्तथा ॥ मासांतेसागणाःप्राप्य प्रोचुःप्रांजलयःपतिं ॥ ५२ ॥ देशांस्त्वयोक्तान न्यांश्च विचित्यातिप्रयत्नतः ॥ सीतागतिर्नविदिता तिसृष्वाशानुमानद ॥ ५३ ॥ अनूनविक्र मोनूनं हनूमांस्तामवेक्षते ॥ दयितांदेवदेवस्य हयग्रीवस्त्रयीमिव ॥ ५४ ॥ इत्थमामंत्रयांचक्रिरे मैत्रीभिःसहसूर्यजः ॥ प्रत्यैक्षतहनूमंतं तितीर्षुरिवतारकं ॥ ५५ ॥ हनूमान्हरिभिःसार्धं विचिन्वं स्तांसुमध्यमां ॥ चचारविंध्येगहने गुहासुविपिनेषुच ॥ ५६ ॥ महर्षेर्मृतपुत्रस्य चंडैश्चंडस्यशा पतः ॥ निःसत्वेनिस्तरेदेशे विचिक्युर्निर्जलेध्वते ॥ ५७ ॥ गिरिगह्वरमध्यान्य हृष्टःकंचनासु रं ॥ मारीचपुत्रमत्रस्तं रावणंतंशशांकिरे ॥ ५८ ॥ अंगदस्तमभिद्रुत्य तिष्ठतिष्ठेतिनिष्ठिर ॥ मु ष्टिघातेनघोरेण जघानसुरवैरिणं ॥ ५९ ॥ ॥ ॥ ॥

॥ ५७ ॥ अत्रस्तंअभीतं ॥ ५८ ॥ ५९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सञ्जदंतौरिपौसन्ने तत्रतत्रविचित्यते ॥ तामदृष्ट्वाविषदिंतः सालमूलमुपाविशन् ॥ ६० ॥ श्रीमा
नुवाचहनुमान् तत्रेदंवानरान्प्रति ॥ अविक्लवोऽक्लीबधीश्च परीक्षार्थविचक्षणः ॥ ६१ ॥ सुचिरंवि
चितादेवी नदृष्टाकिंनुकुर्महे ॥ इत्याकर्ण्यांगदःप्रोचे सर्वानाभाष्यवानरान् ॥ ६२ ॥ कार्यत्वाद्रा
मसेवायाः राजदंडस्यगौरवात् ॥ यत्नस्यचफलंतत्वा पुनर्देवींविचिन्महे ॥ ६३ ॥ अंगदेनेतिगदि
ते गंधमादनपूर्वकाः ॥ उत्तस्थुःक्षुत्तृषार्ताश्च साधुसाध्वितिवानराः ॥ ६४ ॥ विचिन्विरेथरूप्या
द्रौ रामकीर्तिशशिप्रभे ॥ सप्तपर्णैश्चलोध्रैश्च पुष्पितैरतिपांडुरे ॥ ६५ ॥ विंध्याटव्यामटंतिस्म
कपयस्तेपुनःपुनः ॥ समागमार्थसंकेतं कृत्वाकृत्वातिसत्वराः ॥ ६६ ॥ संप्राप्यगिरिदुर्गाणि ग
व्हराणिमहागुहाः ॥ रामभक्त्याव्यचिन्वंस्ते कपिराजभयादपि ॥ ६७ ॥ सुधार्थमिवदुग्धाब्धिं
सुरासुरवराःपुरा ॥ अक्षोभयन्भूवलयं सीतार्थंवानरेश्वराः ॥ ६८ ॥ शैलानुदहरन्वीरा गंडशैला
नलोडयन् ॥ वनान्यधून्वन्नपरे गुहाःकेचिज्जगाहिरे ॥ ६९ ॥ मत्तान्मतंगजान्सिंहान् तरक्षून्
राक्षसानपि ॥ आद्रुत्यरावणोसीति जघ्नुःकेचनकोपिनः ॥ ७० ॥ ॥ ॥

सत्येहतेसति ॥ ६० ॥ अविक्लवःभ्रमरहितः अक्लीबधीः अदीनबुद्धिः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ विचिन्विरेविमार्गयामासुः ॥ ६५ ॥ ६६ ॥ व्यचिन्वन् निरभिमान्ताः ॥ ६७ ॥ ६८ ॥ गंडशैलान् पर्वतभ्रंश पतितस्थूलपाषाणान् । गंडशैलास्तुच्युताःस्थूलोपलागिरेरित्यमरः । अधून्वन्कंप यामासुः । जगाहिरेप्रविविशुः ॥ ६९ ॥ तरक्षून्व्याघ्रान् तरक्षुस्तुमृगादनइत्यमरः ॥ ७० ॥ ॥ ॥

॥ ७१ ॥ ७२ ॥ आर्द्रपक्षिभिः जलसंसिक्तपक्षयुक्तैः गुहोत्थितैः गुहामुखाद्विनिर्गतैः नीरं जलं नीरक्षीरांबुशंबरमित्यमरः। तत्रगुहायाः अंतर्भागे अनुमानि रेऊहिरे ऊहितवंतइत्यर्थः ॥ ७३ ॥ कंउदकं कमापः सलिलंपयइत्यमरः ॥ ७४ ॥ निर्गमेः विनिर्गनमार्ग ॥ ७५ ॥ ७६ ॥ कांचनकामापि ॥ ७७ ॥

कपीन्यूथपरिभ्रष्टा नन्विष्यान्विष्यधावतः ॥ मेघगंभीरनादेन हनुमानाव्हयत्सुखं ॥ ७१ ॥ क्षु
त्पिपासापरिश्रांताः शुष्ककंठाः श्रमातुराः ॥ पानीयपानंवांछंतो ददृशुस्तेमहागुहां ॥ ७२ ॥ भि
न्नैः पद्मपरागेण हंसाद्यैरार्द्रपक्षिभिः ॥ गुहोत्थितैस्तेहरयो नीरंतत्रानुमेनिरे ॥ ७३ ॥ अस्त्यधो
धारिमान्देशः प्रविशामपिबामकं ॥ अन्विष्यामचवैदेही मितितेप्राविशन्गुहां ॥ ७४ ॥ अन्यो
न्यहस्तग्राहेण भ्राम्यंतोविंध्यकंदरे ॥ नाविंदन्निर्गतेर्मार्गं तमसायोजनायतं ॥ ७५ ॥ निराशा
जीवनेदीनाः क्षुत्क्षामाः श्रमकर्शिताः ॥ क्रंदंतोरामरामेति ददृशुर्देशमद्भुतं ॥ ७६ ॥ कांचनस्त्री
मवेक्ष्याथ कांचनश्रीमयेवने ॥ मुदाहनूमान्वचन मुदाहरदविक्लवः ॥ ७७ ॥ कात्वंकंजपलाशा
क्षी तपसाजिततापसा ॥ कस्येदंकांचनमयं सरोवनगुहादिकं ॥ ७८ ॥ रामोनामरमाकांतः कां
तोदशरथात्मजः ॥ पितुर्नियोगादागच्छ त्सभार्यः सानुजोवनं ॥ ७९ ॥ तस्यसुग्रीवमित्रस्य वयं
भृत्यावरानने ॥ तस्यभार्यांविचिन्वाना दैवादेनांगुहांगताः ॥ ८० ॥ मारुतेरीरितिगांश्रुत्वा योगि
नीदमभाषत ॥ दुहितामेरुसावर्णे रहंनाम्नास्वयंप्रभा ॥ ८१ ॥ ॥ ॥

॥ ७८ ॥ ७९ ॥ ८० ॥ गांवाचं योगिनीतपस्विनी साध्वी मेरुसावर्णेः मेरुसावर्णिनामकस्यमनोः ॥ ८१ ॥ ॥ ॥

निर्मायकृत्वा हेमयाहेमंतिप्रागेन्धया हेमशोभया सुवर्णसदृशकांतियुक्तया ॥ ८२ ॥ ८३ ॥ ८४ ॥ आत्मानंत्वां अभिनंदतःप्रशंसतः मार्गाज्ञान् मार्ग
परिचयराहितान् ॥ ८५ ॥ उद्गमागमौनआगमनानिर्गमनेनस्तः ॥ ८६ ॥ आनक्षतदृष्टवंतः ॥ ८७ ॥ ८८ ॥ निषेदुषिआसीनेसति ॥ ८९ ॥



उवासात्राचिरंपूर्वं निर्मायेमांमयोगुहां ॥ अप्सरोवरयासाकं हेमयाहेमशोभया ॥ ८२ ॥ हेमाया
हेमहाबाहो सखीमांविद्धितापसीं ॥ आमंत्रयामिवःश्रांतान् विश्रमायाश्रमागतान् ॥ ८३ ॥ इ
त्युक्त्वाफलमूलैस्तान् बहुलैरमृतोपमैः ॥ श्रांतानाप्याययामास तर्पयित्वातपस्विनी ॥ ८४ ॥ वि
श्रांतानथसंतुष्टा नात्मानमभिनंदतः ॥ बिलान्निर्गमसार्गाज्ञान् कपीनूचेस्वयंप्रभा ॥ ८५ ॥ वि
रिंचस्यवरादत्र जंतूनांनोद्गमागमौ ॥ योगाद्योगमयिष्यामि निमीलयतलोचने ॥ ८६ ॥ तस्या
इत्युपदेशेन निमीलितविलोचनाः ॥ क्षणेनाचक्षतात्मानं विंध्यपृष्ठेप्लवंगमाः ॥ ८७ ॥ हैमंतिकैः
प्रसूनैस्ते हेमंतमृतुमागतं ॥ ज्ञात्वासर्वेभयंभूयो भेजुःसुग्रीवदंडतः ॥ ८८ ॥ चिंताकुलेकपिकुले
निषेदुषिधरातले ॥ अंगदोभंगदोरीणां धीरमेतद्वचोब्रवीत् ॥ ८९ ॥ कालोगतोनश्चरता मयं-
मायामयेबिले ॥ यस्तुसुग्रीवसंक्लृप्त कृत्यमत्रविचिंत्यतां ॥ ९० ॥ हनिष्यतिहरींद्रोस्मान् ध्रुवंलं
घितशासनान् ॥ राजदंडवधाछ्रेयो वृणेप्रायोपवेशनं ॥ ९१ ॥ ॥ ॥

॥ ९० ॥ वृणेवरयामि प्रायोपवेशनंअनशनव्रतं ॥ ९१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ९१ ॥

तारतरंउच्चैस्तरं ॥ ९२ ॥ क्षमीक्षमांकुर्वाणः ॥ ९३ ॥ नहास्यामःनत्यजामः सुखंयथाहयामःप्राप्स्यामः ॥ ९४ ॥ ९५ ॥ ९६ ॥ स्वजामेयस्य स्वस्वदत्ता
मेः स्वसुःतारायाःसुतस्यांगदस्य ॥ ९७ ॥ ९८ ॥ प्राज्ञंमन्यानित्येकंपदं कर्मणाइतिअन्यथाजान् चतुर्थेनउपायेन दंडनेत्यर्थः ॥ ९९ ॥ १०० ॥ शा

युवराजवचःश्रुत्वा सबाष्पेपुहरिष्वथ ॥ तारस्तारतरंवाक्यं वानरान्प्रत्यभाषत ॥ ९२ ॥ अग्र
जोयेनतूग्रेण मारितोरामबंधुना ॥ भुज्यतेज्येष्ठपत्नीच सकथंनःक्षमीभवेत् ॥ ९३ ॥ नयास्या
मोथसुग्रीवं नहास्यामश्चनरत्नं ॥ प्रवेक्ष्यामोगुहामेनां प्रयास्यामश्चिरंसुखं ॥ ९४ ॥ वज्रिणा-
पिस्ववज्रेण किंचित्किलविदारिता ॥ गुहेयंनात्ररामस्य विक्रमःसंक्रमिष्यते ॥ ९५ ॥ वाचमाक
र्ण्यतारस्य जांबवद्वालिजादिषु ॥ वदत्सुबाढमित्येव वाचमाचष्टमारुतिः ॥ ९६ ॥ विदितेयंम
यानीति स्तारेणप्रतिपादिता ॥ स्वजामेयस्यसाम्राज्यं साधयामीतिवांछता ॥ ९७ ॥ असह्या
येरविसुते सीतांतांद्रष्टुमक्षमे ॥ खंडितंरामसख्यंस्या दित्थमाशाविजृंभते ॥ ९८ ॥ प्राज्ञंम
न्यानिहाप्राज्ञान् रामकार्याभ्युपेक्षिणः ॥ चतुर्थेनाप्युपायेन शिक्षयिष्याम्यहंहरीन् ॥ ९९ ॥ शत
क्रतोःशतगुणाः कुलिशाल्लक्ष्मणेषवः ॥ आनयेयुस्त्विलतुलां किलैवःशुष्कपर्णवत् ॥ १०० ॥ श
स्यभ्रूभंगानियतं त्रैलोक्यंकोशलेशितुः ॥ तस्यागम्यांकिलबिलं मालिकैःकिंनुकथ्यते ॥ १०१ ॥
ययानीत्यापुराजज्ञे विरोधोरविजेनवः ॥ सांप्रतंसंप्रवृत्तासा विपदेनैवसंपदे ॥ १०२ ॥ ॥

लिशैःअग्रतुल्यैः ॥ १०१ ॥ सांप्रतमिदानीं विपदेअनर्थप्राप्त्यर्थंभवति ॥ १०२ ॥ ॥ ॥ ॥ ॥

॥ १०३ ॥ नद्योघंमहानदीप्रवाहं नगनिम्नगाः पर्वतस्थिता इतराःक्षुद्रनद्यः ॥ १०४ ॥ अत्रसन्भीताक्ष्मभृतः समाश्रयन आश्रितवंतः रामपदंसमाश्र याश्रितिश्रीरामपदंश्रीपादकमलमस्मरन्नित्यर्थः ॥ १०५ ॥ इति श्रीकिष्किंधाकांड टीकायां सप्तमः सर्गः ॥ ७ ॥ श्रीः॥ चिंतातांतानननः नि



नन्वंगदापितृव्यस्ते धर्मात्सानतवाहितः ॥ त्वन्मातृमतमालंब्य वर्तमानस्तुकिंपुनः ॥ १०३ ॥
वदतीत्थंहनूमति वानरास्तेमुनिव्रताः ॥ तमन्ववर्ततयथा नद्योघंनगनिम्नगाः ॥ १०४ ॥ अलं
घ्यमल्पैरवलोक्यतेत्रसन्महार्णवस्वंचमनोरथार्णवं॥ श्रमापनोदायसमाश्रयन्नमी वेलावनंरामपदं
चपावनं ॥ १०५ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांडे सप्तमः सर्गः ॥ ७ ॥ ॥
श्रीः ॥ अथदीर्घंविनिश्वस्य चिंतातांताननोंगदः ॥ कुलवृद्धान्कपिवरान् प्रणिपत्येदमब्रवीत् ॥ १ ॥
समयःसमतीतोनः सीतानाधिगताक्वचित् ॥ दुस्तरस्तोयराशिश्च मार्गाःसर्वेपिसार्गलाः ॥ २ ॥
रामदेवप्रसादेन यौवराज्यमभून्मम ॥ मृततातस्यदीनस्य नसुग्रीवानुरागतः ॥ ३ ॥ रामस्यान्र
ण्यमप्राप्य किंफलंजीवितेनमे ॥ सर्वेममानुमोदध्वं वृद्धाःप्रायोपवेशनं ॥ ४ ॥ दीनांममातरंता
रां प्रसांत्वयतसामाभिः ॥ नूनंसाभर्तृशोकार्ता पुत्रशोकेमरिष्यति ॥ ५ ॥ उक्त्वेतियुवराजंतं कृ
तप्रायोपवेशनं ॥ अवलोक्यारुदन्नुच्चैः कपयःसमसंकटाः ॥ ६ ॥ ॥ ॥



तयाम्लानंमुखंयस्यसतथोक्तः ॥ १ ॥ सार्गलाःबाधयुक्ताः ॥ २ ॥ ३ ॥ आनृण्यंऋणरहितत्वं ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ॥

प्रायमुपाविशन् अनशनव्रतदीक्षांचक्रुः ॥ ७ ॥ जिहासून् त्यक्तुकामान् पिशिताशनःमांसाहारः ॥८॥ तेवानराः ॥ ९ ॥ त्रिधामाहरिःअपीपलत अ-
रक्षत् मुनेःविश्वामित्रस्य अरीरमत्‌रमयामास ॥ १० ॥ आक्षणात् जघान ॥ ११ ॥ रागरोगात् कामाख्योपद्रवात् अचूचुरत् चोरिकृत्यनीतवान् ॥

वानरावार्युपस्पृश्य सर्वेप्रायमुपाविशन् ॥ दक्षिणाग्रेषुदर्भेषु कृत्वाचोत्तरतःशिरः ॥ ७ ॥ देहा
न्जिहासूंस्तांदृष्ट्वा तुतोषपिशिताशनः ॥ संपातिनामापक्षींद्रो दग्धपक्षोबुभुक्षितः ॥ ८ ॥ अ-
जामिलोप्यजन्मत्वं यन्नामग्रहणाद्ययौ ॥ तेकथांतस्यदेवस्य प्रोचुःसंसारहारिणीं ॥ ९ ॥ त्रि-
धामारामनामाभू दवन्यांरघुनंदनः ॥ अपीपलन्मुनेर्यज्ञं सीतांदेवीमरीरमत् ॥ १० ॥ कैकेय्या
वाक्यमात्रेण त्यक्तराज्योवनंययौ ॥ चतुर्दशसहस्राणि रक्षांसिप्रभुराक्षिणोत् ॥ ११ ॥ विजनेथ
जनस्थाने रागरोगादचूचुरत् ॥ रत्नमालामिवध्वांक्षः रावणोरामवल्लभां ॥ १२ ॥ युयोधपक्षि
राजस्तं जटायुःकूटयोधिनं ॥ रामभक्त्यासतत्याज मूर्तिंकीर्तिमुपाददे ॥ १३ ॥ सहिधन्यतमः
पक्षी रामार्थंजीवितंत्यजन् ॥ अकृतार्थावयंहंत मंदभाग्याम्रियामहे ॥ १४ ॥ सकामाखलुकैकेयी
सख्यामंथरयासह ॥ हत्वापतिंशोकतप्तं वालिनंवानरांश्चनः ॥ १५ ॥ अपिसुग्रीवमित्रंनः सौमि
त्रेरग्रजोविभुः ॥ सीतान्वेषणसंखिन्नान् करुणःसंस्मरिष्यति ॥ १६ ॥ ॥ ॥

ध्वांक्षःकाकः ॥ १२ ॥ सजटायुःतत्याजसक्तवान् मूर्तिंदेहं कायोदेहःक्लीबपुंसोःस्त्रियांमूर्तिरित्यमरः ॥ १३ ॥ १४ ॥ १५ ॥ सुग्रीवनामकःसुग्रीवस्मेतसृनः
करुणःकारुण्यवान् ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १७ ॥ १८ ॥ १९ ॥ तेनरावणेन ॥ २० ॥ २१ ॥ ... ॥ २२ ॥ २३ ॥ द्विजःपक्षी ॥ २४ ॥ पर्यैक्षावहीति
लङात्मनेपदिउत्तमपुरुषद्विवचनं परीक्षमाणाआवावहइत्यर्थः ॥ २५ ॥ नौआवयोः कलिंगादिकाःपक्षिविशेषाः सितच्छदोहंसः प्लवनेनन आकाशगमने

इत्थंकथांतरेश्रुत्वा देहत्यागंजटायुषः ॥ वृद्धोगृध्रपतिःप्रोचे रुदन्ज्येष्ठोजटायुषः ॥ १७ ॥ म-
मप्राणसमभ्राता रावणेनहतःकथं ॥ केयूरकेनलुः... ...प्रायोपवेशनं ॥ १८ ॥ संपातिनि
त्यभिहिताः प्रत्यूचुस्तेप्लवंगमाः ॥ सौम्यदाशरथेर्भार्यां राक्षसोरावणोहरत् ॥ १९ ॥ पश्यंस्तं
पथिगच्छंतं पक्षींद्रोराघवप्रियः ॥ निवारयन्हतस्तेन रामेणापिकृतंस्कृत ॥ २० ॥ रामसुग्रीवयोः
सख्य मथासीद्वालिनोवधात् ॥ वयंतस्यनियोगेन तांदेवींमृगयामहे ॥ २१ ॥ ...
यः सीतांनोपलभामहे ॥ उत्कटात्संकटादस्मा द्वयंत्रायमुपास्महे ॥ २२ ॥ पक्षिप्रवरतत्त्वे प
क्षयोःसंक्षयोभवत् ॥ कच्चिज्जानासिसीतायाः पदवींतातकुत्रचित् ॥ २३ ॥ वर्णितंतैरथाकर्ण्य
द्विजःशोकाकुलःशनैः ॥ कनिष्ठायोदकंदत्वा कपींद्रानिदमब्रवीत् ॥ २४ ॥ अरुणस्यसुतावावां
तरुणत्वेनगर्वितौ ॥ निजराज्यंपणंकृत्वा पर्यैक्षावहिवेगितां ॥ २५ ॥ कलिंगबलिभुक्क्रौंच श्येन-
गृध्रसितच्छदः ॥ सर्वानतीत्यनौमार्गा न्प्लवनेनोत्तरोत्तरान् ॥ २६ ॥ ॥ ॥ ॥

न उत्तरोत्तरान् उत्तरोत्तरंप्लवमानान् ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उदयेउदयपर्वते ॥ २७ ॥ अपतंपतितोभवं ॥ २८ ॥ २९ ॥ चिकीर्षितांकर्तुकामानां वानराणां पक्षीनितरांपक्षयुक्तःस्यात् देहःपक्षीस्यादितियोजना ॥ ३० ॥ निशाकरस्यनिशाकरनामकस्यमुनेः ॥ ३१ ॥ ३२ ॥ ३३ ॥ आमिषाकांक्षी मांसमानेतुमाकांक्षमाणः सुपार्श्वःसुपार्श्वनामकः क्वोद्भिजा

आवामनुगतौसूर्य मुदयंतमथोदये ॥ आमध्यान्हगतेसूर्ये ततोमोहोमहानभूत् ॥ २७ ॥ श्रांता
संतप्यमानोमे पक्षाभ्यांरक्षितोमया ॥ दग्धपक्षोऽपतंपश्चा क्षीणपुण्यइवांबरात् ॥ २८ ॥ सहसा
न्हिगतःसंज्ञां कथंचिद्देशकालवित् ॥ अपक्षोमरणाकांक्षी निषिद्धोहंमहर्षिणा ॥ २९ ॥ भाविष्य
तित्वयाकृत्यं रामकार्यंचिकीर्षतां ॥ रामप्रसादात्पक्षीस्या देहोनत्यज्यतामिति ॥ ३० ॥ निशा
करस्यमेसख्यु र्मुनेर्वाचंस्मरन्नहं ॥ निविष्टोगिरिरंध्रांते रामदूतप्रतीक्षया ॥ ३१ ॥ हंतराजादश
रथः सखामेप्राणसंमितः ॥ ममापिपुत्रास्तत्पुत्राः स्नुषातस्यममस्नुषा ॥ ३२ ॥ ममस्नुषाहरं
चोरं ममभ्रातृनिषूदनं ॥ रावणंहंतुकामोपि नसमर्थोस्मिवानराः ॥ ३३ ॥ अपक्षस्यामिषाकांक्षी
सुपार्श्वोममनंदनः ॥ राक्षसंप्रैक्षतव्योम्नि हरंतंरामवल्लभां ॥ ३४ ॥ हाराघवमनाथेति लक्ष्मणे
तिचसुस्वरं ॥ क्रंदंतींसुंदरींतांच दृष्ट्वातापमुपेयिवान् ॥ ३५ ॥ रामकार्यंमयाकार्यं मनसानन्यथा
नथा ॥ तस्माद्वक्ष्याम्यहंवीरा दूरदर्शीस्वभावतः ॥ ३६ ॥ ॥ ॥

काशे ॥ ३४ ॥ ३५ ॥ दूरदर्शीदूरदर्शनशक्तिमान् ॥ ३६ ॥ ॥ ॥ ॥ ॥

शिंशुपामूलेकालागरुवृक्षमूले ॥ ३७ ॥ अपास्यतिनिराकरोति ॥ ३८ ॥ देवरायपत्यनुजायलक्ष्मणाय स्वामिनांदेवृदेवरावित्यमरः । अश्नातिभक्षीकरोति ॥ ३९ ॥ ४० ॥ रूढौअंकुरितौ उत्पन्नावित्यर्थः । अजीर्यतजीर्णानष्टाबभूव यूनः यौवनवतः ॥ ४१ ॥ विश्रमंविनामध्येकांनिद्रांपरिश्रांतिंवना

शतयोजनदूरस्था लंकेयंलवणांभसि ॥ उद्यानेशिंशुपामूले तत्रास्तेजनकात्मजा ॥ ३७ ॥ राक्ष
सीभिःप्रदत्तानि सुरामांसान्यपास्यति ॥ वासवेनोपनीतेन साम्प्रतान्नेनवर्तते ॥ ३८ ॥ इदंरामा
यदेवाय देवरायभवेदिदं ॥ इत्यग्रभागौविन्यस्य शेषमश्नातिशोभना ॥ ३९ ॥ रामप्रसादमाहा
त्म्य महोपश्यतवानराः ॥ रामस्यतुकथांश्रुत्वा तनुर्मेतरुणीकृता ॥ ४० ॥ दग्धौपक्षाविमौरूढौ
जरास्वयमजीर्यत ॥ बलवेगावनुद्विग्नौ यथायूनस्तथाद्यमे ॥ ४१ ॥ शतयोजनमत्येतुं यःशक्तोवि
श्रमंविना ॥ ससीतांद्रक्ष्यतिश्रीमा नितिमेदिव्यनिश्चयः ॥ ४२ ॥ माहेंद्रमलयप्रांत मारुह्यप्लव
नंभवेत् ॥ स्वस्तिवोस्तुगमिष्यामि हिमवंतंममालयं ॥ ४३ ॥ इत्युक्त्वातंपतत्रींद्रं पतंतमवलोक्य
ते ॥ राघवायनमश्चक्रु विस्मयोत्फुल्ललोचनाः ॥ ४४ कथयंतोथरामस्य कथामाहात्म्यमद्भुतं ॥
दक्षिणांभोनिधिंप्रापु र्मलयानिलशीतलं ॥ ४५ ॥ अंभोनिधिंतंगंभीरं वीक्षमाणान्विषादिनः ॥
वानरानंगदःप्रोचे विषादस्त्यज्यतामिति ॥ ४६ ॥ ॥ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ विषादिनःभीतान् ॥ ४६ ॥

॥ ४७ ॥ ४८ ॥ वदतिस्म अवदत्तंजांबवंतं ॥ ४९ ॥ ५० ॥ क्रमणेभूम्याक्रमणसमये ॥ ५१ ॥ ततःजानुनिकिंचिद्वेदनायुक्तत्वात्‌अहमिदानींनवतिप्लु
वएवास्मिपुरस्तात्ततःपूर्वंतुषण्णवतिप्लवइत्यन्वयः ॥ ५२ ॥ विक्रम्यपराक्रमंकृत्वा ॥ ५३ ॥ ५४ ॥ ५५ ॥ अंतरायाःविघ्नाः विघ्नोंतरायःप्रत्यूहइत्य-

यस्ययाप्लवनेशक्तिः ससंवदतवानराः ॥ इतिजांबवतोद्दिष्टा स्तेस्वशक्तिंन्यवेदयन् ॥ ४७ ॥ यो
जनानिदशप्रोचे गजःप्लवनमात्मनः ॥ विंशद्गवाक्षस्त्रिंशत्तु शरभोयोजनान्यथा ॥ ४८ ॥ चत्वा
रिंशच्चऋषभः पंचाशद्गंधमादनः ॥ मैंदःषष्ठिंसप्ततिंच विविदोवदतिस्मतं ॥ ४९ ॥ सुषेणसूनु
श्चासीतिं जांबवान्स्वयमब्रवीत् ॥ वृत्धंहसेयुस्तरुणा मांतथापिब्रवीम्यहं ॥ ५० त्रिविक्रमस्यक्र
मणे कुर्वतोनंदिघोषणं ॥ त्रैलोक्यंभ्रमतोमेभू ज्जानुमेरुनिपीडितं ॥ ५१ नवतिप्लवएवाहं ततः
षण्णवतिप्लवः ॥ पुरस्तादित्यभिहिते ब्रह्मजेनांगदोब्रवीत् ॥ ५२ ॥ योजनानिशतंगंतुं शक्तिर्मे
निश्चिनोम्यहं ॥ ननिश्चिनोमिविक्रम्य प्रत्यागंतुंप्लवंगमाः ॥ ५३ ॥ इत्युक्तोजांबवान्प्रोचे गं
तव्यंनतुसंशये ॥ वत्सनःपालनीयेन किंपुनर्भवतात्विति ॥ ५४ ॥ अथवालिसुतोवादी त्कोनुनः
पालयिष्यति ॥ कस्तरिष्यतिसिंधुंको रामप्रेष्ठोभविष्यति ॥ ५५ ॥ प्लवनंकुर्वतोपिस्यु रंतरायाः
किलांतरे ॥ प्राप्तंनोऽकृतकृत्यत्वा त्प्रायःप्रायोपवेशनं ॥ ५६ ॥ इतिखिन्नतरंप्रोचे जांबवानंगदंप्र
ति ॥ कश्चिद्द्विपश्चिद्बलवान् कार्यंनःसाधयेदिति ॥ ५७ ॥ ॥ ॥

मरः अंतरेमध्येअकृतकृत्यत्वादितिपदच्छेदः ॥ ५६ ॥ विपश्चित प्राज्ञचूडामणिः ॥ ५७ ॥ ॥ ॥ ॥

॥ ५८ ॥ ५९ ॥ लोठंतिलोठनंकुर्वाणानि ॥ ६० ॥ मंजुलामनोहरा ॥ ६१ ॥ वेदजानामि बलदेवतांमुख्यप्राणं ॥ ६२ ॥ स्नवमेवनातो जनकोनाथः ॥
॥ ६३ ॥ ज्ञातिनांसगोत्राणां अस्माकं ॥ ६४ ॥ ६५ ॥ ६६ ॥ पर्यागांपरितःसमागतवानभूवं प्राकपूर्वं एकवारं एकपातः एकवारंपतनं...

एकांतेकांतिमंतंतं हनूमंतमवस्थितं ॥ आत्मारामंतदारामं प्रेष्ठंप्रोवाचजांबवान् ॥ ५८ ॥ सर्व
शास्त्ररसाभिज्ञ सर्ववीर्यरसार्णव ॥ सर्वसद्गुणसंपन्न हनूमन्किंनभाषसे ॥ ५९ ॥ इमानिक्षिप्तल-
क्षाणि भयशोकमहानले ॥ लोठंतिचावलोक्यत्वं करुणांनकरोषिकिं ॥ ६० ॥ अंजनात्वेनतेजा
ता मंजुलापुंजकस्थला ॥ तस्यांहिभवतोजन्म प्राणात्प्राणिप्रणायकात् ॥ ६१ ॥ मुधैवहे वारिनि
धिं भस्मनेवाग्निमावृतं ॥ लोकानुवृत्यागूढंत्वां वेदाहंबलदेवतां ॥ ६२ ॥ गरुडोनानुगंतुंत्वां भ
समर्थःकिमुतापरे ॥ तातेसमतांयातु तातएवप्रभुस्स्वयं ॥ ६३ ॥ उत्तिष्ठपुरुषश्रेष्ठ ज्ञातीनाम
र्थसंपदे ॥ तवत्रिविक्रमस्येव विक्रमावसरोधुना ॥ ६४ ॥ ब्रह्मपुत्रेवदत्येवं वायुपुत्रोवदद्वचः ॥
नंदयन्शोकसंतप्तान् मंदहासेंदुनाहरीन् ॥ ६५ ॥ अत्येतुंयोजनशतं ममायासोनविद्यते ॥ स-
र्वत्राव्याहतगते गरुडस्येवगोष्पदं ॥ ६६ ॥ सहस्रवारंपर्यागां मेरुंप्रागेकपाततः ॥ आभिमुख्ये
नतीक्ष्णांशो रुदयादस्तमप्यगां ॥ ६७ ॥ राघवस्यप्रसादेन लाघवंपौरुषंचमे ॥ मातापित्रोश्चप्र-
सादेन भवेदेवविशेषतः ॥ ६८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चिदप्यस्थिलेत्यर्थः । आभिमुख्येन अभिमुखंयथाभवतितथा उदयात्उदयपर्वतात अस्तंअस्तपर्वतं एकपाततोऽगांगतवानभूवमित्यन्वयः ॥ ६७ ॥ ६८ ॥

भवंतः संतः वीतसंभ्रमाः गतोद्वेगाः उपैष्यामि समागमिष्यामि मेममविक्रमाः पराक्रमाः कृतकाः आकृताः ॥ ६९ ॥ आभासादानियावत मनभवंतिप्रत्येयं प्रवनं कुर्याः ॥ ७० ॥ ७१ ॥ ७२ ॥ माहेंद्रं महेंद्रनामकं महीधरेंद्रं पर्वतश्रेष्ठं भानुः सूर्यः उदारभानुः दीप्तरश्मिः ॥ ७३ ॥ कनुंयञ्ञं समनमत् सम्यक् नमस्कृतवा

भवंतोत्रैवतिष्ठंतु भवतोवीतसंभ्रमाः ॥ कृतकार्यउपैष्यामि कृतकाविक्रमानमे ॥ ६९ ॥ ममानि
ष्पततोवीर्यं नसहेतमहीतलं ॥ पंकवत्पारिदार्येत ह्लवयास्मान्महीतलात् ॥ ७० ॥ हनूमंतिंदुब-
त्येवं भूषयामासुरुत्थताः ॥ वनमालांगदाढ्यास्त मंगदाद्याः प्लवंगमाः ॥ ७१ ॥ पालयन्वानरकु
लं कालयन्रक्षसांकुलं ॥ जयवीरजयेत्युच्चै श्चुक्रुशुर्वानरेश्वराः ॥ ७२ ॥ स्मितंहरीणांवदनारविंदं
कुर्वन्हनूमानधिकंचकाशे ॥ माहेंद्रमारुह्यमहीधरेंद्रं यथोदयंभानुरुदारभानुः ॥ ७३ कनुमिवहरि
तुष्टेः विक्रमंकर्तुकामः प्लुतिमथसकरिष्यन्दीक्षणीयामिवेष्टिं ॥ रघुकुलतिलकंश्रीकांतमेकांतभक्तः
समनमदसमानंराममेकाभिरामं ॥ ७४ ॥ इति श्रीसंग्रहरामायणे किष्किंधाकांडे रामांके नारा
यणपंडिताचार्यकृतौ अष्टमःसर्गः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

न् एकाभिरामंमुख्यतोमनोहरं अथसहनूमान दीक्षणीयामिष्टिमिवप्लुतिंकरिष्यन्कर्तुमिव हरितुष्टेः विक्रमंकर्तुकामः एकांतभक्तः मन रघुकुलतिलकं श्रीकांतं असमानं एकाभिरामं श्रीराममनमदित्यन्वयः ॥ ७४ ॥ ॥ इति श्रीकिष्किंधाकांडटीकायां अष्टमःसर्गः ॥ किष्किंधाकांडःसमाप्तः ॥



श्रीरामायनमः ॥ सम्यक्साष्टांगतया उच्चैरवर्धतअत्यंतमभिवृद्धोभूत् महाद्रौमहेंद्रपर्वते दिधक्षन्दग्धुकामः धूमकेतुः अग्निःतत्रहनुमदाख्यायौ घनौघःमेघसमूहः ॥ १ ॥ लांगूलंपुछं आविध्यआवर्तयित्वा सरोमहर्षरोमांचनसहितंयथाभवतितथाकर्णौविकुंच्यउत्तब्धीकृत्वा कवलमूर्ध्वाग्रीकृत्वेत्यर्थः । करौदस्तौ अंघ्रीचागिरौपर्वते अवष्टभ्यअवष्टब्धौकृत्वासन्नद्धौकृत्वेत्यर्थः । उत्पातिष्यन् उत्पतनंकरिष्यन् वीरःअध्यवसितकार्यांतगामी ॥ २ ॥ समायम्यसं-

श्रीगुरुभ्योनमः ॥ प्रणम्यसम्यक्पुरुषंपुराण मवर्धतोच्चैर्हनुमान्महाद्रौ ॥ लंकांदिधक्षन्निवधूमकेतु र्धूमोपमांतत्रययौघनौघः ॥ १ ॥ लांगूलमाविध्यसरोमहर्षं विकुंच्यकर्णाववलोक्यलंकां ॥ गिरावष्टभ्यकरावुतांघ्री सउत्पतिष्यन्विरराजवीरः ॥ २ ॥ प्राणान्समायम्यसमर्जुकायो ध्यायन्सयोगीवरघुप्रवीरं ॥ व्यचीकसद्व्यक्तमथात्मतेजः फणासहस्रंफणिनामिवेशः ॥ ३ ॥ स्यान्नः पुनर्दर्शनमित्युदीर्य मगद्गदंसन्नगिरःकपींद्रान् ॥ आल्हादयन्स्माहसमेघघोषः सुमेरुसंकाशतनुर्हनूमान् ॥ ४ ॥ रामस्यभून्नःशरवत्त्वरेयं प्रेक्षेयसीतामधुनैवनोचेत् ॥ लंकामहंपन्नवदानयेयं बध्वादशास्यंपशुवद्धरेयं ॥ ५ ॥ सिंधूनथांधूनिवशोषयेयं गिरीन्गुरून्कंदुकवत्क्षिपेयं ॥ सुरासुरानप्यजवज्जयेयं तथापिदेवींध्रुवमानयेयं ॥ ६ ॥ ॥ ॥



नियम्यसमर्जुकायः व्यचीकसत् विकासितमकरोत् ॥ ३ ॥ सन्नगिरःशांतवचनान् आल्हादयन्सुखयन् आहस्म अब्रवीत् समेघघोषःमेघघोषसमानध्वनिमान् यथाभवतितथाभूत्वाअत्युच्चैरित्यर्थः । सुमेरुसंकाशतनुःमहामेरुपर्वतसमानरूपः ॥ ४ ॥ त्वरेयंवेगवान् भवेयंप्रेक्षेयंपश्येयंहरेयंअपहरेयं ॥ ५ ॥ अंधूनिवक्षुद्रनदीरिव शोषयेयंशुष्कान्कुर्यां गुरून् अतिस्थूलान् अजवत्छागवत् ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

समीरवत् मुख्यवायुवत्वलेयंपरिवर्तयेयं वलपरिवर्तनइतिधातुः । हेमखागःवानराःपावमानिश्चासिमुख्यमाणमुतश्चास्मिहि ॥ ७ ॥ गांअभगवबनांत्य
कां स्वबंधुतायैस्वबंधुजनसमूहाय आललंबे आश्रितांभूत् ॥ ८ ॥ धंक्षुशीघ्रं तत्रतादृशेपर्वते धातुधाराः॥ शिलारसाः असुस्रवन् परिस्रुताः मूवुः । अ
स्रधाराः रक्तधाराः ॥ ९ ॥ अमुष्मिन्हनुमतिउत्पातिसति परिलोड्यमानात् क्षोभ्यमाणात् ॥ शैलात् माहेंद्रगिरेःशिलाजालंपाषाणसमूहः ससुंदरीकंस्व
भार्यादिसहितंउत्पपातऊर्ध्वंपपात ॥ १० ॥ रामचरः रामदूतःदिदृक्षुःद्रष्टुकामःएकपातनमध्येक्राप्यनाश्रित्यतथैवपुप्लुवे ततारअतरत् क्रांतादृक्षं पर्या

समीरवत्सर्वजगद्बलेयं पश्येयमार्यांपुनरानयेयं ॥ सत्यंसखायःपुनरेवसत्यं रामैकदासोस्मिहिपा
वमानिः ॥ ७॥ इत्थंसगांकामदुघांप्रदाय स्वबंधुतायैसुखजीवनाय ॥ निष्पीड्यमाहेंद्रमिमंपदा
भ्यां विनिष्पतन्नंबरमाललंबे ॥ ८ ॥ तत्पीडितोद्रिर्भुविमंक्षुमग्नो महाभराक्रांतइवप्लवोप्सु ॥
असुस्रवंस्तत्रचधातुधारा विदारितेदेहइवास्रधाराः ॥ ९ ॥ पतत्यमुष्मिन्परिलोड्यमाना च्छैला
च्छिलाजालमधःपपात ॥ विद्याधराणांचतपस्विनांच ससुंदरीकंकुलमुत्पपात ॥ १० ॥ रामप्रि-
यांरामचरोदिदृक्षु र्नन्वेकपातेनततारर[illegible]ं ॥ तंविस्मयंवक्तुमिवात्रिलोक्यां पर्यानशेतत्राहिसिंहना
दः ॥ ११ ॥ देवोपदेवर्षिगणाअगण्या वधूयुताविस्मयिनःखमाप्य ॥ विकासिभिश्चारुतरप्रसूनै
रपूजयंस्तंनयनांबुजैश्च ॥ १२॥ कुतूहलात्यायतलोचनासु सर्वासुतास्वायतलोचनासु ॥ वदत्सु
सर्वेष्वपिसाधुसाध्वि त्युच्चैर्मुनींद्रामुदिताअवोचन् ॥ १३ ॥ ॥ ॥

नशेव्याप्तोभूत् । आशूव्याप्ताविितिधातुः ॥ ११ ॥ विद्याधिनःविस्मयसहिताः खमाप्यआकाशंप्राप्यप्रसूनैःपुष्पैःतंहनुमंतंनयनांबुजैश्चापूजयन्नितिमकथमद[illegible]
नित्यर्थः ॥ १२ ॥ तासुगगनतलस्थितासुसर्वास्वायतलोचनासुस्त्रीषुकुतूहलात्यायतलोचनासुकुतूहलेनात्यायतलोचनासुसतीषु तत्रस्थितेषुगंधर्वादिषु
धर्वादिषुसाधुसाध्वितिवदत्सुसत्सुतदामुदिताःसंतुष्टाःमुनींद्राःउच्चैरवोचन्नित्यन्वयः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

गुणेनअनुनयनेन इतरत्रगुणोतिधनुस्तंतुनास्वपक्षदक्षः शरोपिभ्रपरवर्हादिपक्षपूलयत्वात्स्वपक्षदक्षोभवति सफलः अयोनिशपमाविनःशरः ॥ १४ ॥ अ स्यहनूमतःऊरुवेगैः अंकसंजातवेगैः परिकृष्यमाणाः अन्वाकृष्यमाणाः नानानगाःनानावृक्षाः सुमनोभिसारैःपुष्पवर्षैःवारिपारंसमुद्रजलतीरं ॥ १५ ॥ एनमुपर्युपरि अस्योपर्युपरीत्यर्थः तरसावेगेनअभिकृष्टाः अन्वाकृष्टाःसितासिताः धवलानीलाइतितथोक्ताः रक्तरुचःरक्तवर्णाः ॥ १६ ॥ निपातवातैः

गुणेनसंधायगुणार्णवेन रामेणमुक्तोरणपंडितेन ॥ स्वपक्षदक्षःसफलोहनूमान् शरोपमोरीस्त्वरतं निहंतुं ॥ १४ ॥ अस्योरुवेगैरनुकृष्यमाणा नानानगाश्चंदनचंपकाद्याः ॥ कृत्वानुयानंसुमनोभि सारैर्नमंतिभक्ताइववारिपारे ॥ १५ ॥ उपर्युपर्येनमथोअधोऽधो लसंतिमेघास्तरसाभिकृष्टाः ॥ सितासितारक्तरुचश्चयद्व त्धरिप्रवीराःपरिवारभूताः ॥ १६ ॥ निपातवातैःपारिलोड्यमानः फेना यमानःसकलोपिसिंधुः ॥ आशंक्यतेरामयशोंबुधिर्वा पयोंबुधिर्वात्यपिहारगौरः ॥ १७ ॥ द्रोणीक रोत्येषसमुद्रमध्यं वेगानिलेनानिलदेवसूनुः ॥ सेतुंविधातुंहरिवाहिनीनां पुरेवकुर्वन्निवलक्ष्मरेखां ॥ १८ ॥ इंद्रध्वजाभंस्फुरतिद्युसंगि लांगूलमस्याखिलमंगलाय ॥ तद्वैजयंतीमिवमेघपालिं दो लायमानामवलोकयध्वं ॥ १९ ॥ ॥ ॥ ॥

॥ ९३ ॥

नितरांपातसंजातवायुभिःपारिलोड्यमानःआलोड्यमानः अत्यंतफेनायमानः फेनपरिपूर्णतयावर्तमानः ॥ १७ ॥ द्रोणीकरोतिपरिखांकरोति वेगानि- लेनवेगवायुना लक्ष्मरेखांचिन्हरेखां ॥ १८ ॥ इंद्रध्वजाभंइंद्रध्वजइतिसेतोरुपरिराजादिभिः उत्सवविशेषे ऊर्ध्वसंस्थापनीयंशदंडविशेषः । द्युसंगिआ काशस्पर्शनकारि । तद्वैजयंतीतस्येंद्रध्वजसमस्यलांगूलस्यवैजयंती पताकासमांमेघपालिं मेघपंक्तिंडोलायमानांलंबायमानांअवलोकयध्वंपश्यत ॥ १९ ॥

उदस्तौउत्क्षिप्तौ लसतइतिप्रथमपुरुषाद्विवचनं । अर्धोद्गतौअर्धनिर्गतौपर्वतपार्श्वयुग्मात् पर्वतस्यपार्श्वद्वयात् पंचास्यवंतौ पंचफणावंतौ पन्नगेंद्रौसर्पश्रेष्ठौ॥ ॥ २० ॥ अस्यहनुमतःएतिप्राप्नोति दशसंतीत्यर्थः ॥२१॥ सहएकवारमेवनवधातुताम्रे नूतनधातुशिलाभिःताम्रवर्णे उदयाद्रिशृंगेत्यन्वयः । तर्हि एवंतर्हिअभूतोपमोयं ईक्षणेनयनेइतिद्वितीयाद्विवचनं विडंबयेतांअनुकुर्वेतां ॥ २२ ॥ अर्धोद्गमेअर्धनिर्गते सद्भक्तिवध्वासमीचीनहारिभक्त्याख्यास्त्रिया

हस्तावुदस्तौलसतोस्यदीर्घौ पीनौसुवृत्तौपवमानसूनोः ॥ अर्धोगतौपर्वतपार्श्वयुग्मा त्पंचास्यवंतौविवपन्नगेंद्रौ ॥ २० ॥ शस्त्रंविनाशत्रुपुरीमुपैति मत्तोहनूमानितिमास्तुशंका ॥ नन्वेकवज्रोरिपुमेतिवज्री दशास्यघोरानखनामवज्राः ॥ २१ ॥ सहोदयेतामुदयाद्रिशृंगे रवींदुदिद्धौनवधातुताम्रे ॥ तर्हीक्षणेताम्रतरेसुवृत्ते ताम्राननस्यास्यविडंबयेतां ॥ २२ ॥ अर्धोद्गतेइंदुकलेइवद्वे दंष्ट्रेअमुष्यस्फटिकस्फुटाभे ॥ सद्भक्तिवध्वास्थिरयोगभाजां सुखायदुःखायवियोगभाजां ॥ २३ ॥ मेरुःसुरेंद्रेणसुराचलत्वा दछिन्नपक्षोद्रवतीहनूनं ॥ इतिप्रतर्कैतनुतेप्रजानां शरीरमस्यातनुहेमधाम ॥ २४॥ अलंकरोत्यस्यविशालकीर्ते रुरोविशालंवनमालिकेयं ॥ आकाशमाकाशसुरापगेव समुद्रसीमेवभुवोवकाशं ॥ २५ ॥ ॥ ॥ ॥

स्थिरयोगभाजांस्थिरयोगःसंबंधःतद्भाजां तद्वतांपुरुषाणां सुखायभवतः सद्भक्तिवध्वावियोगभाजां दुःखायभवतइत्यन्वयः ॥ २३ ॥ अछिन्नपक्षः पर्वतानांपक्षछेदनसमये आछिन्नपक्षःइहगगनेनूनं इदानींद्रवति पक्षिवत्पतति डिङ्विहायसगतावितिधातुः प्रतर्केऊहे तनुतेकुरुते अतनुबहुलं हेमधामस्वर्णवत्तेजोयुक्तं ॥ २४ ॥ उरइतिभिन्नंपदं आकाशसुरापगाआकाशगंगा ॥ २५ ॥ ॥ ॥ ॥ ॥

अस्यहनूमतःइयंछायाविस्तीर्णभावे विस्तीर्णेदशयोजनादशयोजनपरीयिता अंबुधौतात्रिगुणायतात्रिंशद्योजनपरिमिता कवींद्रैःउपमानभूमिः उपमा नस्थानंलब्धाप्रादित्यन्वयः त्रिलोक्यांअपराछायातिरिक्ता अन्याउपमानभूमिः नलब्धाहीत्यन्वयः ॥ २६ ॥ सुराधिराजंदेवेंद्रं पतगाधिराजःगरुडः जिहिर्षुःअपहर्तुकामः जवेनवेगेन प्लवंगराजः वानराधिपतिः हनुमान् पतंगराजंगरुडं ॥ २७ ॥ वानरेंद्रस्यहनूमतः समानतायांसमानत्वेकःपुरुषोवर्त ते यस्यवानरेंद्रस्यानिलएवमुख्यप्राणएवतुल्यः समानःयःहनुमानरेंद्रस्यराजचूडामणेः रामस्यसमानतायांसम्यग्विस्तृतायां कृपाख्यलतायांभाति शोभते । कोवावायुरिवेत्यन्वयः । कः शब्दोवायुवाचकः वाशब्दउपमार्थकः । वाब्रह्मवाचतुर्मुखइत्येवमर्थोनावाच्यः॥ २८ ॥ दिव्यश्रीतनूमान् अवि

विस्तीर्णभावेदशयोजनास्य छायांबुधौतात्त्रिगुणायतेयं ॥ लब्धाकवींद्रैरुपमानभूमिं र्हनूमतोन ह्यपरात्रिलोक्यां ॥ २६ ॥ सुराधिराजंपतगाधिराजः सुधांजिहीर्षुर्जितवान्जवेन ॥ प्लवंगराजो हिपतंगराजं सीतांजिहीर्षुर्जितवानवश्यं ॥ २७ ॥ कोवानरेंद्रस्यसमानतायां वर्ततयस्यानिलए वतुल्यः ॥ कोवानरेंद्रस्यसमानतायां रामस्ययोभातिकृपालतायां ॥ २८ ॥ जयतिजगतिदिव्य श्रीतनूमान्हनूमा नहितमवहितात्माबाह्यमभ्यंतरंच ॥ लसतिवसतिभूतेयस्यचित्तेविचित्रे भुवन भवनपूर्णोरामदेवःसदेति ॥ २९ ॥ इति श्रीसंग्रहरामायणे सुंदकांडे रानांके पंडिताचार्यकृ तौ प्रथमःसर्गः ॥ १ ॥ ॥ ॥ ॥

बहुलंश्रीमद्रूपवान् अवहितात्मावशीकृतमनाःहनुमान्बाह्यमहितंशत्रुंराक्षसादिकंजयति। आभ्यंतरंअंतर्विद्यमानं कामक्रोधादिकंचाहितंजयति । भुवनभ वनपूर्णःसमस्तलोकाख्यग्रहपरिपूर्णःरामदेवः सदायस्यहनूमतः चित्तेमनसिवसति भूतेआत्मनोवस्थानार्थं आवासभूतेअतएवविचित्रे अत्यद्भुतेसदा लसतीत्यन्वयः। इतिमुदिताःमुनींद्राःअवोचन्नितिपूर्वेणान्वयः । रामःसदातच्चित्तेवसतीतिरामंसदास्मरत्यसावित्यर्थः ॥ २९ ॥ इति सुंदरकांडटी कायां प्रथमःसर्गः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥

सत्यपिविद्यमानेसत्यपि ॥ १२ ॥ १३ ॥ सुरसांसुरसानामिकां सरमाःमस्नेहः ॥ १४ ॥ जिज्ञास्यामः ज्ञातुमिच्छामः ॥ १५ ॥ १६ ॥ पिंगाक्षेंद्रः

स्थानेसत्यप्यविश्रांतं तंशशंसुःसुरेश्वराः ॥ पुंसःप्रभावसामग्र्यां नैरपेक्षंहिलक्षणं ॥ १२ ॥ इं-
द्रोगिरींद्रमाचष्ट तोषितस्तेनकर्मणा ॥ अभयंतेमयादत्तं रामशुश्रूषणादिति ॥ १३ ॥ प्लवमानं
तमालोक्य द्विगुणंवेगमागतं ॥ न्यगदन्नागजननीं सुरसांसरसाःसुराः ॥ १४ ॥ मारुतेःकुरुवि-
घ्नंत्वं जिज्ञास्यामोस्यतद्बलं ॥ यद्यदिच्छसितत्तत्ते वक्ष्मेतुवरेणनः ॥ १५ ॥ दक्षादाक्षायणीत्यु-
क्ता भूत्वासारूक्षराक्षसी ॥ तस्थावास्यंविवृण्वाना मार्गमावृत्यमारुतेः ॥ १६ ॥ तामवेक्ष्यकरा
लाक्षीं पिंगाक्षेंद्रोभ्यभाषत ॥ मारुतीरामदासोस्मि मार्गोमेदीयतामिति ॥ १७ ॥ योवाकोवाभ
वेदानीं वदनंप्रविशाशुमे ॥ इत्युक्तासाट्टहासांतां कपींद्रःकुपितोब्रवीत् ॥ १८ ॥ कथंमांग्रससी-
त्युक्ता विग्रहंजगृहेहरिः ॥ आयामेष्वथविस्तारे समानंबहुयोजनं ॥ १९ ॥ व्यादात्साद्विगुणंव
क्त्रं तद्देहपरिमाणतः ॥ सोंगुष्ठमात्रस्तद्वक्त्रं प्रविश्यनिरगात्प्रभुः ॥ २० ॥ तस्यप्रभावंसंभाव्य
सरसासुरसाब्रवीत् ॥ जीवन्नेवामरवरं तातरक्षितवानसि ॥ २१ ॥ सत्यंलंकामुपेत्यत्वं जानीया
जनकात्मजां ॥ तामेवंवादिनींवीरः परिपूज्यप्रपुप्लुवे ॥ २२ ॥ ॥ ॥ ॥



वानरेंद्रः ॥ १७ ॥ साट्टहासां अट्टहाससहितां ॥ १८ ॥ विग्रहंरूपं ॥ १९ ॥ व्यादात् विवृतवती ॥ २० ॥ सरसाभक्तिसहिता ॥ २१ ॥ २२ ॥ ॥

॥२३॥२४॥२५॥२६॥ उत्क्रांतंनिर्गतं ॥२७॥२८॥२९॥ अंबरपक्षे उल्लोलमेघकल्लोलमिति अतिचंचलमेघाख्यतरंगयुक्तमित्यर्थः । समुद्रपक्षे उ
ल्लोलमेघकल्लोलं अतिचंचलमहामेघसदृशतरंगवंतमित्यर्थः । सत्वगणः नानाप्राणिसमूहः । तदुभयत्रापिसमानं ॥ ३० ॥ आलंबशिखरे आलंबमानशृंग

तमापतंतमालोक्य सिंहिकासिंहिविक्रमं ॥ दैवान्मेभोजनंपूर्णं प्राप्तमित्यन्वचिंतयत् ॥ २३ ॥
विधेर्वरादवध्यासा लंकापालनतत्परा ॥ छायाग्रहइतिख्याता छायांजग्राहमारुतेः ॥ २४ ॥ लो
कघ्नीमवलोक्यायं दानवींविवृताननां ॥ अभूदद्रिनिभःसोपि वक्त्रेणांबरमावृणोत् ॥ २५ ॥ स्व-
तनुंतनुतांनीत्वा हनुमानाविवेशतां ॥ हृदयंनिर्दयंतस्या बिभेदनखरैःखरैः ॥ २६ ॥ आंत्रमा-
लिनमुत्क्रांतं तान्निहत्यमहाहरिं ॥ नरसिंहमिवासंह्य मस्तुवन्सुरकिंनराः ॥ २७॥ हनुमन्सुरिम
हिमन् हतासर्वाहितास्त्वया ॥ खेचराःखेचरिष्यंति त्वांगायंतोभयंविना॥ २८ ॥इतिसंस्तुवतः
सर्वान् दिव्यपुष्पप्रवर्षिणः ॥ अपांगेनोपसंगम्य प्लवगेंद्रःप्रपुप्लुवे ॥ २९ ॥ उल्लोलमेघकल्लोलं
लोलसत्वगणाकुलं ॥ अंबरंचांबुराशिंच ससमंसमलंघयत् ॥ ३० ॥ आलंबशिखरेलंबे लं-
काप्राकाररूपके ॥ निपपातकपिश्रेष्ठः सत्रिकूटोपशोभिते ॥ ३१ ॥ आपाततोभ्यापततो वातपु-
त्रस्यनिस्वनात् ॥ खगामृगादशदिशो वित्रस्तादुद्रुवुर्द्रुतं ॥ ३२ ॥ ॥ ॥ ॥

सहितेलंबेलंबनामकेपर्वते त्रिकूटोपशोभिते त्रिकूटनामकपर्वतेनउपशोभिते ॥ ३१ ॥ आपततःवेगान् एकपातादेवनिवा वित्रस्ताःभीताः ॥ ३२ ॥ ॥

॥ ३३ ॥ अंधकारिता अंधकारयुक्तता ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ तांतिकार्योन्तिकार्या [illegible] ॥ ३८ ॥ [illegible]



पुष्पाणिवद्दृषुर्वृक्षा स्तस्मिन्नापतितेसति ॥ विक्रांतिमतिसंभ्रांता वांग्मिनात्स्वबांधवे ॥ ३३ ॥ व-
लात्मनोहनुमतो नग्लानिर्विक्रमेप्यभूत् ॥ नहितेजस्विनोवन्हे र्निशीथेप्यंधकारिता ॥ ३४ ॥ त्रि-
कूटशृंगमारुह्य प्रेक्षमाणोदिशोदश ॥ लंकामलंकारवतीं महेंद्रपुरीमिव ॥ ३५ ॥ गंभीरपरि-
खांभीमां बहुप्राकारदुर्गमां ॥ दृष्ट्वालंकांगिरिश्रेष्ठां नानायंत्रामचिंतयत् ॥ ३६ ॥ ननुवानरा
णांस्या ल्लंघनंलवणोदधेः ॥ अथापिलंघितवतां पुरीयंसुगमाकथं ॥ ३७ ॥ चिंतयानांतिकार्यो
किं नास्तिरामस्यदुष्करं ॥ रामदेवप्रसादेन किमप्यस्तिनदुष्करं ॥ ३८ ॥ अरुणीभवतीरूर्णी
तरणिस्तरुणोयथा ॥ अस्तंगतेस्मिन्यास्यामि माक्षुभ्यंतिहिराक्षसाः ॥ ३९ ॥ [illegible]
क्ष्य शंकरन्नीदृशाकृतिं ॥ अणुःपुरींप्रवेक्ष्यामि ततोन्वेक्षेनृपात्मजां ॥ ४० ॥ इतिसंचिंत्यसौलाभो
बिडालाभोबभूवसः ॥ योगैश्वर्यबलेनैव योगीशवरवल्लभः ॥ ४१ ॥ अनन्यमत्तस्त्रीपुंस्कं पुरंबु-
द्धिविवर्जितं ॥ आभिचारइवक्रूरः प्रदोषेप्राविशत्कपिः ॥ ४२ ॥ आछिन्नवप्रवसनां मणिहर्म्यवि-
भूषणां ॥ सपुरींस्त्रीमिवाद्राक्षीत् पीनोन्नतगृहस्तनीं ॥ ४३ ॥ ॥ ॥ ॥ ॥

स्यंतु ॥ ३९ ॥ ४० ॥ बिडालाभाःमार्जारसमानदेहः ॥ ४१ ॥ आभिचारःकृत्या प्रदोषे रात्रिमुखसमये ॥ ४२ ॥ ४३ ॥ ॥ ॥

इंदुरेवहासोयस्याःसाविंदुहासः ताद्दशेनसंदीप्तसौधगंडेन संदीप्तःसौधःप्रासादःएवगंडोगंडस्थलंयेनपांडुनाधौतिहनकैलगृक्षा लंकानामिकाह्वी हरिमाव्हयदित्यन्वयः ॥ ४४ ॥ पतौनाथेधूमपत्याधूमाख्यपर्टेन ॥ ४५ ॥ ४६ ॥ पातःमनाक्ईरःमनाक्किंचित् ॥ ४७ ॥ ताडितेनताडनेनप्रव्हतांनि

इंदुहासेनसंदीप्त सौधगंडेनपांडुना ॥ आव्हयत्साहरिंनूनं पाणिकांत्यापताकया ॥ ४४ ॥ पत्यौ
धनपतौयाते भजंत्युपपतिंखलं ॥ लक्ष्मितेयत्पुणोलंका धूमपत्यानिजंवपुः ॥ ४५ ॥ कस्त्वंपुरम्
वेशीति भर्त्सयंतीनदंत्युत ॥ ताडयामासतंचंडी सीरूपापुरदेवता ॥ ४६ ॥ अविकीर्पुःकपिवं-
रः स्त्रीवधंसंजुगुप्सितं ॥ वामोवामकराग्रेण तांमनाक्प्रत्यताडयत् ॥ ४७ ॥ पीडितातांडितेना
स्य विव्हलाप्रव्हतांगता ॥ गद्गदाक्षरमूचेसा बांजलिंकृतांजलिः ॥ ४८ ॥ स्वागतंतेमहाभाग
जानेत्वांब्रह्मणोगिरा ॥ लंकासंकटकालेत्वां कपिर्जेताबलाद्दिति ॥ ४९ ॥ वीरवीरप्रणायेनीं मृ-
गयस्वमृगेक्षणीं ॥ व्यालैरप्यनुकंप्यायाः क्षमस्वागःस्त्रियोमम ॥ ५० ॥ तामेवंवादिनींदीनां मा
भीरितिविसृज्यसः ॥ अद्वारेणबलोदारः प्रविवेशारिपोःपुरीं ॥ ५१ ॥ द्विषांमूर्ध्निपदंन्यस्य नक्तंनि
द्रामुपेयुषां ॥ पश्चात्करिष्यन्सरणे दीर्घनिद्रामुपेयुषः ॥ ५२ ॥ सुंदरेमंदिराकारे मंदिरेमंदिरेहं-
रिः ॥ ददर्शराक्षसान्रूक्षान् नानावस्थानवस्थितान् ॥ ५३ ॥ ॥ ॥ ॥

नयावनतत्वं असौपुरदेवता ॥ ४८ ॥ ४९ ॥ ५० ॥ भीःभीतिःप्रागल्भ्यं ॥ ५१ ॥ नक्तंनिद्रांरात्रौनिद्रांगतानां ॥ ५२ ॥ नानावस्थानवस्थितान्नानाव- वस्थायुक्तान ॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मत्तान्गर्वयुक्तान् प्रमत्तान् प्रमादयुक्तान् उन्मत्तान् मद्यपानादिना भ्रांतान् ॥ ५४ ॥ अह्नीन जुव्हतःहोमंकुर्वतः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥
॥ ६० ॥ ६१ ॥ मानिनीःअहंकारयुक्ताःकामिनीःकामसहिताः ॥ ६२ ॥ पोतानबालान् ॥ ६३ ॥ चतुरंगंगजादिचतुरंगसहितं कार्यंइत्यनुसारेणांते

मत्तान्प्रमत्तानुन्मत्तान् नानापानरतानपि ॥ सुरतोत्सवसंसक्तान् रमणीभिरवैक्षत ॥ ५४ ॥ जु
व्हतोग्निंचजपतो ध्यायतोब्रह्मराक्षसान् ॥ नानायुधधरांश्चान्या नपश्यत्पुररक्षिणः ॥ ५५ ॥ वै
ष्णवंविष्णुगायंतं सदासत्यरतंततः ॥ विभीषणंलोकहिते रतंमंगलमैक्षत ॥ ५६ ॥ दुरुश्वासंगा
ढनिद्र मुन्मत्तंपर्वतोपमं ॥ कुंभकर्णसमालोक्य शिरोधुन्वन्समारुतिः ॥ ५७ ॥ ततोविघ्नांसभ-
गिनीं राक्षसेंद्रस्यदुष्कृतिं ॥ विवासिनींराक्षसानां पलपानाशनैर्युतां ॥ ५८ ॥ नग्नांस्त्रस्ताशिरः
केशां पानादुन्मत्तचेतसां ॥ गायंतींविस्वरंहास्या दुर्भगांश्लक्ष्णेतरां ॥ ५९ ॥ करोभयेनाशिरसा
धुन्वताप्रभयंकरीं ॥ अत्यंतमिवनृत्यंतीं सहितांपिहिताशिभिः ६० ॥ इंद्रजिन्मुख्यपुत्राणां रा-
वणस्यगृहेगृहे ॥ तत्रतत्रसमालोक्य जानकींकिलनैक्षत ॥ ६१ ॥ राक्षसीरैक्षतानेका मानिनीः
कामिनीरपि ॥ विलासिनीर्भोगिनीश्च योगिनीश्चवियोगिनीः ॥ ६२ ॥ क्रीडितान्पीडितान्पोतान्
मुदितान्रुदितानपि ॥ लालितान्भर्त्सितान्कांश्चित् मातृभिर्दृष्टवानसौ ॥ ६३ ॥ चतुरंगंतुका
मंनो युद्धंस्यादितिगर्जितं ॥ चतुरंगंतुकामंनो निद्रांसैन्यमवैक्षत ॥ ६४ ॥ ॥ ॥

क्रियाविशेषणमेतत् गर्जितंगर्जनयुक्तं चतुरंकुशलं गंतुकामं गंतुंप्राप्तं कामोयस्येतितत्गंतुंकामं सहनुमान् तत्रसैन्यमवैक्षतेत्यन्वयः । कीदृशंचतुरंगंनोस्माकं
कर्मयुद्धंस्यादितिगर्जितं चतुरंनिद्रांनोगंतुकाममित्यन्वयः । नोनिद्रांगंतुकाममितिजागरणपरमित्यर्थः ॥ ६४ ॥ ॥ ॥ ॥ ॥

रामाननाभं हनूमान् अयंतं खे वीक्ष्यपूर्णेंदुं अमान् अयंतंनाथंहंससमार । समाःनयंतंभक्तान् सुखेनैव समाः नयंतंइतिपदच्छेदः अमान अतिबहुळश क्त्यादिमान् सोयंहनूमान्खेआकाशे अयंतंआगछंतं समाःसंवत्सरान् नयंतंपारिवर्तयंतं रामाननाभंश्रीरामदेवश्रीमुखवत् कांतियुक्तं पूर्णेंदुंपूर्णचंद्र अ वेक्ष्यतादृशंनाथंस्वस्वामिनंरामदेवंससमारस्मृतवान्बभूवहेत्यन्वयः । कीदृशंभक्तान्सुखेनैवमानयंतं संभावयंतमित्यन्वयः ॥ ६५ ॥ इति सुंदरकांडटी

रामाननाभंहनुमानयंतं खेवीक्ष्यपूर्णेंदुममानयंतं ॥ नाथंहससस्मारसमानयंतं भक्तान्सुखेनैवस
मानयंतं ॥ ६५ ॥ इति श्रीसंग्रहरामायणे सुंदरकांडे द्वितीयःसर्गः ॥ २ ॥ ॥
श्रीः ॥ प्रहस्तकुंभकर्णादि राक्षसानांगृहेगृहे ॥ सविमृग्यसरोजाक्षीं रावणांतःपुरंययौ ॥ १ ॥
वाहरत्नैर्वधूरत्नै रत्नैर्वासोविभूषणैः ॥ आश्चर्यरत्नैःसर्वैश्च संपूर्णपुरमैक्षत ॥ २ ॥ यानियानिव
रींयांसि वस्तूनिभुवनत्रये ॥ तानितान्युपनीतानि रक्षसेक्षतमारुतिः ॥ ३ ॥ अंतःपुरांतरेऽपश्य
त्केवलंरावणालयं ॥ अर्धयोजनविस्तारं सार्धयोजनमायतं ॥ ४ ॥ मणिहेममयेतस्मिन् भवने
भुवनाद्भुते ॥ दीप्तंविमानमाचष्ट सज्योतिरिवतेजसि ॥ ५ ॥ मणिश्रेणिश्रियागौरे पुष्पकेपुरुष
र्षभः ॥ अपश्यद्रावणंसुप्तं शशिबिंबेशशंयथा ॥ ६ ॥ परिवार्यपतिंवीरं शयानंशयनोत्तमे ॥ म
हस्रंवरनारीणां तत्रसर्वांगसुंदरं ॥ ७ ॥ ॥ ॥ ॥

काया द्वितीयःसर्गः ॥ २ ॥ ॥ श्रीः ॥ १ ॥ वाहरत्नैःहयरत्नैः ॥ २ ॥ वरीयांसिउत्तमानि ॥ ३ ॥ ४ ॥ आयतदीर्घं ॥
॥ ५ ॥ ६ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मदिरांमधं ॥ ८ ॥ ९ ॥ विकस्वराभ्यांविकसनशीलाभ्यां ॥ १० ॥ ११ ॥ आकल्पैः आभरणैः शपंदनकेणानवत् मेचकेश्यामले अजीयतजितोभव



विसृज्यसुचिरंपीत्वा मदिरांमदिरेक्षणाः ॥ कांतारतिपरिश्रांताः शेरतेस्मानिनिद्रया ॥ ८ ॥ स्त्री
रत्नमालावलये तस्मिन्रुचिररोचिषि ॥ महानीलमणिःश्यामो रावणोनायकायितः ॥ ९ ॥ हं
तसोयंखलइति प्रैक्षतैनंसमारुतिः ॥ विकस्वराभ्यांनेत्राभ्या मुपसृत्याकुतोभयः ॥ १० ॥ वज्र
पातांकितातस्य भुजगेंद्रोपमौभुजौ ॥ रक्तचंदनसंसिक्तौ पर्यंकेपरिसारितौ ॥ ११ ॥ देदीप्यमा
नैराकल्पै स्तद्देहेमाषमेचके ॥ नीलांबुदतटित्प्रख्यै र्दीपदीप्तिरजीयत ॥ १२ ॥ अतिप्रमाणप्रा
णस्य घ्राणोत्थाःश्वासवायवः ॥ दीपान्नशमयांचक्रु र्व्यक्तंमणिमयत्वतः ॥ १३ ॥ विलोक्यैवंवि
धाकारं सुप्तंतंतदुपांतिके ॥ मंडोदरीमथापश्य त्कांतामंतःपुरेश्वरीं ॥ १४ ॥ किंदेवीदानवीकिं
वा कान्येषाकामवल्लरी ॥ इत्याशंक्यनसीतेति तार्किकःसमतर्कयत् ॥ १५ ॥ सहस्रशःसहस्रैष्टैः
पानभूमिमुपेयुषीः ॥ ददर्शदर्शनीयांगी रंगनाःसप्लवंगमः ॥ १६ ॥ बभौपानस्थलंरूप्य चषका
नांशतान्वितं ॥ तस्योपमापदंस्याच्चे छतचंद्रंनमस्थलं ॥ १७ ॥ यत्रयत्रविलासिन्यो विलसंति
पुलंदधुः ॥ हरिःसतत्रतत्रागा द्रामसेवैकभूषणः ॥ १८ ॥ ॥ ॥



त् ॥ १२ ॥ अतिप्रमाणप्राणस्य अतिदीर्घेंद्रियस्य ॥ १३ ॥ १४ ॥ कामवल्लरी कामलता ॥ १५ ॥ सहस्रैष्टैः प्रियैः ॥ १६ ॥ १७ ॥ १८ ॥ ॥

प्रकोष्ठमितिमंदिरोपरिविशालतया अवस्थानार्थंकृतंस्थलं चैत्यचत्वररथ्यासु चैत्यमितिअश्वत्थमूलदंसनादिकमुच्यते । चत्वरमितिचतुष्पथं । रथ्याराज
वीथी विचिक्यंनिमार्गितवान् ॥ १९ ॥ जालांतरणगवाक्षविवरेण ॥ २० ॥ जलाशयान्तटाकान् अभ्यसः निःसंगमः ॥ २१ ॥ नगर्यांचरन्निर्विनाद

गृहोर्ध्वगृहसौधेषु प्रकोष्ठेवलभीषुच ॥ चैत्यचत्वररथ्यासु विचिक्येछलजानकीं ॥ १९ ॥ क्वचिद्वा
रंविवृण्वानः क्वचिच्चविवृतंविशन् ॥ क्वचिज्जलांतरेणैव प्राविशत्प्राणनंदनः ॥ २० ॥ अन्वास्ववापी
नन्विष्यन् देवालयलतालयान् ॥ जलाशयाश्चविविधां श्चचारासंगमोहारिः ॥ २१ ॥ बहिरंतश्चविचर
न्वायुवद्वायुनंदनः ॥ चतुरंगुलमात्रंच पुर्यानव्यचिनोन्नहि ॥ २२ ॥ चिंतयामासहनुमा नदृष्टाजानकी
तनुं ॥ मयानदृष्टासादेवी कार्यंसकलमाकुलं ॥ २३ ॥ नागांगनानाकनारी नंगर्याराक्षसीरपि ॥ अ-
द्राक्षंयास्ववस्थासु तानहंतसभोचिताः ॥ २४ ॥ नावस्थास्त्रियईक्षेत ब्रह्मचारीविशेषतः ॥ इतिशा
स्त्रगतिंनाह मद्राक्षंकार्यगौरवात् ॥ २५ ॥ लवणाब्धिर्वृथातीर्णो नकार्याब्धिर्महानयं ॥ नालानार्यो
वृथादृष्टा रामनारीनहावत ॥ २६ ॥ ममत्वसंगमनसो नदोषोविषयेक्षणात् ॥ विषयैर्नहिलेपोस्ति
वन्हिवायुविवस्वतां ॥ २७ ॥ यन्नदेवीमयादृष्टा संकटःसहिनापरः ॥ तामदृष्ट्वाकपीन्प्राप्य किंनुवक्ष्या
मिषंढवत् ॥ २८ ॥ सीतानदृष्टेतिकथं वक्ष्येसंवंद्यराघवं ॥ अवेक्षिष्येकथंतस्य पूर्णचंद्रोपमंमुखं ॥ २९ ॥

सर्वमेवस्थलंअचिनोदेव ॥ २२ ॥ २३ ॥ ताःअवस्थाः सभोचिताःन सभायांवक्तुंयोग्याः ॥ २४ ॥ २५ ॥ २६ ॥ विषयान गर्हः ॥ २७ ॥
॥ २८ ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १० ॥ ११ ॥ १२ ॥ अशोकवनितां अशोकस्यरामस्यवनितांस्त्रियं । अशोकवनिता मितिशोकराहितास्त्रियमिनेवा ॥ १३ ॥ १४ ॥ भ-
वींतरायसर्वांतर्यामिणे ॥ १५ ॥ अशोकरोचिषा अशोकवृक्षतेजसा शोणंरक्तछायं ॥ १६ ॥ हरितोपलपर्वतंइंद्रनीलपर्वतं ॥ १७ ॥ सीमंतसीमाल्लला

सीताक्कापिनदृष्टेति वचनंविषमंविषं ॥ नरेंद्रवानरेंद्राणां कुलयोर्विलयप्रदं ॥ ३० ॥ सर्वैविक्र-
मजालंहि निष्फलंहींद्रजालवत् ॥ देवीमपश्यतोयद्व ह्यालित्यंफेनसंपदः ॥ ३१ ॥ मुष्टिघा
तैर्दुराचारं रावणंमारयामिवा ॥ अथवापशुवद्बध्वा रामपार्श्वंनयामिवा ॥ ३२ ॥ अशो
कवनिकांयायां मशोकवनितांवरां ॥ ३३ ॥ अथाप्यहंविचेष्यामि स्याद्यत्नःसफलोयतः॥
नमोस्तुरामरामायै रामायापिनमोनमः ॥ ३४ ॥ भूम्नेसर्वांतरायापि सर्वसिध्दिप्रदायिने ॥
इत्यालोच्यविविच्यासौ कार्यंनिर्धार्यवीर्यवान् ॥ ३५ ॥ अशोकवनिकांप्राया त्सर्वर्तुफलपुष्पि
णीं ॥ अशोकरोचिषाशोणं वनमैक्षतवानरः ॥ ३६ ॥ पद्मरागैरिवाकीर्णं हरितोपलपर्वतं ॥
नदीत्रिकूटात्पातिता वनमध्यंव्यराजयत् ॥ ३७ ॥ रम्यंसीमंतसीमेव सीमंतिन्याःशिरोरुहं ॥
भवनेपवनस्याथ वनेपवननंदनः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

दांतरमध्येशिरसिकेशपाशेषुद्विधाविभक्तेषुसत्सु यारेखासासीमंतइत्युच्यते तत्सीमासीमंतिन्याःस्त्रियः भवनेगृहायिते ॥ १८ ॥

कांचनीनांस्वर्णमयानां वल्लीनांलतानां शाखिनांवृक्षाणां ॥ ३९ ॥ जैत्रंजयशीलंजंतुंशीलमस्येतिजैत्रमित्यर्थः ॥ ४० ॥ तुच्छेतरछाये अनितिविरलवृ
वृक्षनानाछायायुक्ते ॥ ४१ ॥ प्रवालसोपानं प्रवालरत्ननिर्मितसोपानयुक्तंचैत्येविद्यमानःप्रासादः॥ ४२ ॥ ४३ ॥ ४४ ॥ संवृतःतिरोहितः ॥ ४५ ॥

विजहारयथाकामं प्लवमानइतस्ततः ॥ कांचनीनांचवल्लीनां कांचनानांचशाखिनां ॥ ३९ ॥ स
मभ्यनंदत्संयोगं दंपतीनामिवप्रभुः ॥ जैत्रंचैत्ररथस्येदं कांत्यानंदननंदनं ॥ ४० ॥ मणिहेम
मयंसर्वं उद्यानंसससमैक्षत ॥ वनेतुच्छेतरछाये ददर्शपवनात्मजः ॥ ४१ ॥ शिंशुपांकांचनमयीं
मेघेसौदामनीमिव तत्रप्रवालसोपानं चैत्येप्रसादमद्भुतं ॥ ४२ ॥ सहस्रस्तंभमैक्षिष्ट श्रीमत्कन
कवेदिकं ॥ इमांनदींशिवजलां शिवछायांचाशिंशुपां ॥ ४३ ॥ सातन्वींसेवतेनन मित्यमन्यत्तमा
रुतिः ॥ तस्यएकतमांशाखां शाखामृगपतिःशनैः ॥ ४४ ॥ आरुह्यसंवृतःपर्णैः ददर्शसदिशोद
श ॥ तत्रदीनामिवादीनां मलिनामिवचामलां ॥ ४५ ॥ कृशामिवोपवासेन ह्यकृशांप्रकृतिंश्रियः
पुल्लपद्मपलाशाक्षीं पूर्णचंद्रनिभाननां ॥ ४६ ॥ निस्तप्तस्वर्णवर्णांगीं साक्षात्सर्वांगसुंदरीं ॥ आ
लंबिनींकेशवेणीं कृत्वाजघनमंडले ॥ ४७ ॥ आसीनामवनीपृष्ठे संततास्रांबुसंततिं ॥ हंतैकवस
नांकैश्चि द्भूषितांभूषणैरपि ॥ ४८ ॥ मारुतिःशिंशुपामूले मायासीतामवैक्षत ॥ राक्षसारेःप्रिया
भार्यां राक्षसीगणमध्यगां ॥ ४९ ॥ ॥ ॥ ॥ ॥

॥ ४६ ॥ निस्तप्तस्वर्णवर्णांगीं सम्यक्संतप्तस्वर्णसदृशांगवतीं आलंबिनीं अतिदीर्घत्वाद्वलंबमानां ॥ ४७ ॥ ४८ ॥ राक्षसारेःरामस्य ॥ ४९ ॥ ॥

श्वगणगांश्वगणमध्यगतां ॥ ५० ॥ ह्रियमाणापूर्वंरावणेनाह्रियमाणा ॥ ५१ ॥ ५२ ॥ ५३ ॥ [illegible] ॥ ५४ ॥ [illegible]
यचन् मरुतःवायोःआस्तकालारुगुवृक्षमध्येस्थिताभूत् कृशानुःअग्निः ॥ ५५ ॥ हनूमतश्चित्तंस्फुरति [illegible] ॥ ५६ ॥



मृगीमिवश्वगणगां दृष्ट्वाचिंतामवापसः ॥ रामदेवस्यदेवीयं व्यक्तमाक्तलोचना ॥ ५० ॥ इदंमो लक्षणंतेन कीर्तितंपुण्यकीर्तिना ॥ ह्रियमाणामयादृष्टा सेयमेवेतिभातिमे ॥ ५१ ॥ तस्योत्त रीयस्यसम मुत्तरीयमिदंध्रुवं ॥ कथंविश्वेश्वरीसीता स्वयंविश्वेश्वरप्रिया ॥ ५२ ॥ दुःखिनीतिम हाचोद्यं प्रतिभामेनिरस्यति ॥ अनुकुर्वाणयोर्लोकान् देवदेव्योरदीनयोः ॥ ५३ ॥ दुःखमोहा दिकामिथ्या नटनट्योरिवध्रुवं मायामयीमिमांसृष्ट्वा सीताप्रतिकृतिंनिजां ॥ ५४ ॥ स्वयमंतर्हि ताव्यक्त मित्थंमेप्रतिभाशुभा ॥ मनसाविमृशन्नेवं मरुतस्तनुजोमुहुः ॥ आस्तेपर्णैर्निलीनात्मा कृशानुरिवभस्मभिः ॥ ५५ ॥ चित्तंबभौस्फुरंतिरामपदारविंदे नेत्रंरमाप्रतिकृतेश्चरणारविंदे ॥ कोपोदयोहनुमतोदशवक्त्रसैन्ये प्रेमोदयःसपदिवानरराजसैन्ये ॥ ५६ ॥ इति श्रीसंग्रहरामायणे सुंदरकांडे रामांके तृतीयःसर्गः ॥ ३ ॥ ॥श्रीः ॥ परितःपद्मनयनां परिवारत्वमागताः ॥ राक्षसीरैक्षतहरि र्वरटामिवटिट्टिभीः ॥ १ ॥

इति सुंदरकांडटीकायां तृतीयःसर्गः ॥ ३ ॥ ॥ श्रीः ॥ वरटांहंसस्त्रियं टिट्टिभीःटिट्टिभनामकस्यपक्षिस्त्रियः ॥ १ ॥

॥ २ ॥ ३ ॥ त्रिगुणोत्कटैः शैत्यमांद्यसौरभ्यगुणत्रयोत्कटैः ॥ ४ ॥ तेनकामाग्निनादेदीप्यमानः नितरांदह्यमानः ॥ ५ ॥ ६ ॥ ७ ॥ म्लानवासोभ्यां मलिनवस्त्रयुक्ताभ्यां ॥८॥ पंचसायकसायकैःकामबाणैः ॥९॥ लावण्यवल्ली पुष्पाणिलावण्याख्यकल्पलतापुष्पाणि स्मरेषवःकामबाणायितानि । १० ॥

नानामृगपतंगानां सुरूपवदनादिकाः ॥ एकहस्तांघ्रिनेत्राद्या द्विनासाजठरादिकाः ॥ २ ॥ पा
दादिस्थमुखीःकाश्चि द्व्यत्यस्तावयवास्तथा ॥ दृष्ट्वानैकांतिकींमेने स्त्रष्टुःसृष्टिंसपावनिः ॥ ३ ॥ स
पद्मपररात्रोत्थैः पवनैस्त्रिगुणोत्कटैः ॥ उद्दीपिदशास्यस्य मायाश्रीमन्मथानलः ॥ ४ ॥ तेन
तातप्यमानोसौ तल्पतःसहसोत्थितः ॥ अशोकवनिकांप्रायान्मन्मथांधःस्खलंनिव ॥ ५ ॥ चा
वेंग्यश्चामरछत्र प्रदीपैःप्रतिदीप्तिताः ॥ अन्वयुःकिंचिदुन्निद्राः प्रमदास्तंमदालसाः ॥ ६ ॥ त
मापतंतमालोक्य विवर्णवदनासती ॥ ससृजेवेपथुमती श्वासान्दीर्घानशीतलान् ॥ ७ ॥ ऊरु
भ्यांम्लानवासोभ्यां छादयंतीलनूदरं ॥ स्तनावप्यतनूदोर्भ्यां साबभूवपराङ्मुखी ॥ ८ ॥ राव
णोविव्यथल्हृदयः पंचसायकसायकैः ॥ चापलंविपुलंप्राप्य तांसांत्वेनेदमब्रवीत् ॥ ९ ॥ मन्येत्वा
मिंदिरेशौरो मंदिरामिंदिरामहं ॥ लावण्यवल्लीपुष्पाणि तवांगानिस्मरेषवः ॥ १० ॥ विश्वैश्वर्यमि
दंपश्य मममानिनिमानिनः ॥ अस्मिन्मेयौव्वनवने लसत्वंललनालते ॥ ११ ॥

हेमानिनिमानिनः अभिमानवतः हेललनालते स्त्रीनामकलते लसविलासंकुर्वित्यर्थः । लसविलासइतिधातुः ॥ ११ ॥

॥ १२ ॥ १३ ॥ अंतरतःमध्येकृत्वानिक्षिप्य ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ काकुस्थानेनकुत्सितध्वनिना ॥ २० ॥ ग्रामसिंहंश्वानं ॥



कथंद्रक्ष्यतिरामस्त्वां दृष्ट्वावानेष्यतेकथं ॥ तस्मात्त्वंतापसंहित्वा भजमांभुवनेश्वरं ॥ १२ ॥ मां कृत्वाकृपयादासं लक्ष्मीमेनामवाप्नुहि ॥ दास्यामिराज्यंरत्नानि जनकायापिजानकि॥ १३ ॥ एवं विलोभयंतंतं कुपितासापतिव्रता ॥ तृणमंतरतःकृत्वा युक्तमुक्तवतीशनैः ॥ १४ ॥ शूद्रेणब्रह्म विद्येव खद्योतेनैवभानुभाः ॥ त्वयारावणदुष्प्रापा रामस्याहंप्रियासती ॥ १५ ॥ पुलस्त्यस्यकुलेजातो नधर्मंवेदकिंभवान् ॥ परदारप्रसंगोयं जगन्मंगलभंगदः ॥ १६ ॥ तुभ्यंचमाभ्यसूयामि हितंसत्यंवदामिते ॥ रामायमांप्रदायाशु कृपालुंतंक्षमापय॥ १७॥ यदीदानींनमन्येथा मन्येथास्त्वमथाचिरात् ॥ शरैर्विदीर्णहृदयो रामलक्ष्मणलक्षणैः ॥ १८ ॥ अथापिचेदनंगस्ते निद्राविघ्नंकरिष्यति ॥ रामस्त्वामप्रमेयांगो दीर्घनिद्रांप्रणेष्यति ॥ १९ ॥ राक्षसाधमतेवाचा जानकीनविलोभ्यते ॥ काकस्यकाकुस्थानेन राजहंसीवमानसी ॥ २० ॥ ग्रामसिंहंयथासिंहो गरुडः पन्नगंयथा ॥ गजोयथाजंहंतात्वा मप्रयत्नेनराघवः ॥ २१ ॥ ननाशयामिशक्तापि त्वांनृशंसदशानन ॥ विनारामाज्ञयाकिंतु त्वांहत्वासभजेद्यशः ॥ २२॥ इमांचवाचमत्युष्णा मश्रुधारांचसंततां ॥ विसृज्यसासरोजाक्षी परिरेभेप्रभुंहृदा ॥ २३ ॥ ॥ ॥

॥ २१ ॥ २२ ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रातराशंप्रातःकालाहारं सूदजनैःपाककर्तृजनैः ॥ २४ ॥ मयजामंडोदरी ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ स्वादंतभक्षयन्त स्वादंभक्षणकर्तव्या

इत्युक्तःक्रोधवान्क्रूरः क्रूरमाचष्टराक्षसः ॥ एवंचेत्प्रातराशंत्वां कुर्यांसूदजनैरिति ॥ २४ ॥ सां त्वयंतीवतन्वीता मपांगेनवरांगना ॥ मयजामैवमित्येन माश्लिषत्कुपितंपतिं ॥ २५ वशीकृतैस मादिश्य राक्षसीर्विकृताकृतीः ॥ सामादिभिरुपायैस्तां विवेशांतःपुरंखलः ॥ २६ ॥ निशाचर्योथ तामेकां जटाभूरिजटादिकाः ॥ पृथक्पृथक्सामपूर्वं दंडगर्भंवचोवदन् ॥ २७ ॥ पुलस्त्यस्यकुलेजा तो वेदवेदांगपारगः ॥ प्रजापतिसमःसीते विश्वैश्वर्येणराघवः ॥ २८ ॥ संत्यज्यनिर्गुणंरामं भ- जभद्रेदशाननं ॥ स्वयंकामयमानंतं नत्वंकामयसेकथं ॥ २९ ॥ इतिश्रुत्वाब्रवीद्बाला निर्गुणःस- गुणोपिवा ॥ रामएवगतिःस्यान्मे काममखादतमामिति ॥ ३० ॥ विनताविकटाचाश्व मुखीचंडो दरीतथा ॥ विघसायोमुखीशूर्प णख्याद्याराक्षसस्त्रियः ॥ ३१ ॥ विवृत्यनेत्रवक्त्राणि समुद्यम्या युधानिच ॥ तांशिंशुपामुपायंतीं परिद्रुत्याभ्यभर्त्सयन् ॥ ३२ ॥ नचेद्रावणभार्यास्या विदार्यां गानितेधुना ॥ खादंखादंप्रनृत्यामः पायंपायंसुरामिति ॥ ३३ ॥ इत्यादिराक्षसीभिःसा आघा- सीताप्रभार्त्सिता ॥ रुरोदसुस्वरंनाथ हारामकभवानिति ॥ ३४ ॥ विलापंविदधेचित्रं सीताप्र- तिकृतिर्हिसा ॥ यत्रसामग्र्यमगम त्रिलोक्यांकरुणारसः ॥ ३५ ॥ ॥ ॥

तुः ॥ ३० ॥ ३१ ॥ ३२ ॥ खादंखादं खादित्वाखादित्वा पायंपायंपीत्वापीत्वा ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ॥ ॥

॥ ३६ ॥ ३७ ॥ खादत भक्षत अनार्याः नीचाः ॥ ३८ ॥ राक्षस्यः राक्षसस्त्रियः ॥३९॥४०॥ दांतीं गजदंतनिर्मितां ॥४१॥ ४२ ॥ चतुर्दंतिनिदंतींद्रे चतुः



श्रुत्वाविलापंतस्यास्तं रावणायनिवेद्यच ॥ राक्षस्योभक्षयिष्याम स्त्वामित्यभ्यपतन्निमां ॥ ३६ ॥
तत्रैवात्रिजटानाम शुद्धभावानिशाचरी ॥ शयानाशयनेदृद्धा गामुदारामुदाहरत् ॥ ३७ ॥ आ-
त्मानंखादतानार्या नस्त्रींतांसाधुसंमतां ॥ नेयंशोच्याममस्वप्न दर्शनंतन्निदर्शनं ॥ ३८ ॥ इत्थं
वदंतींत्रिजटां राक्षस्यःपर्यवारयन् ॥ भीताःसंत्यज्यतांतन्वीं स्वप्नंब्रूहीतिचाब्रुवन् ॥ ३९ ॥ रा
मायांजलिमाबध्य त्रिजटावाक्यमब्रवीत् ॥ अदर्शिराघवःक्षोणीं संग्रसन्रुधिरंपिबन् ॥ ४० ॥
अध्यास्तेशिबिकांदांतीं हंतहंससहस्रिणीं ॥ सानुजःसीतयादेव्या मोदतेपुष्पकेपुनः ॥ ४१ ॥
श्वेतमालांबरधरा श्वेताद्रौभातिजानकी ॥ सागरेणपरिक्षिप्ता चंद्रलेखेवसुंदरी ॥ ४२ ॥ चतु-
र्दंतिनिदंतींद्रे चंद्रवर्णेमयापुनः ॥ रामःसलक्ष्मणोदृष्टः शुक्लमाल्यांबरोवरः ॥ ४३ ॥ प्रकाशमान
माकाशे गजेंद्रेगजविक्रमं ॥ रामंदृष्ट्वान्वगात्सीता हंसीहंसमिवोत्सुका ॥ ४४ ॥ कांतस्यांकंततः
प्राप्ता सीतेयंप्रेक्षितामया ॥ स्पृशंतीपाणिपद्माभ्यां दिवाकरनिशाकरौ ॥ ४५ ॥ उपर्युपरिनोलंकां
रामस्ताभ्यांसहास्थितः ॥ यानेश्वेतवृषैर्युक्ते श्वेताकल्पोव्यदर्शिसः ॥ ४६ ॥ रावणःपतितोदृष्टः
पुष्पकादधुनामया ॥ कृष्यमाणःस्त्रियानीचै र्मुंडःकृष्णांबरोहसन् ॥ ४७ ॥ ॥ ॥

र्युक्ते दंतींद्रेगजेंद्रे ॥ ४३ ॥ ४४ ॥ ताभ्यांसूर्यचंद्राभ्यां ॥ ४५ ॥ ४६ ॥ नीचैः अधमैः ॥ ४७ ॥ ॥ ॥ ॥ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ वामैःवामभागस्थितैः प्रियंवदैरित्येकंपदं धंभम्रूचकैः अकंप्यतपरिकंपनंप्राप्त ॥ ५६ ॥

रथेनखरयुक्तेन रक्तमाल्यानुलेपनः ॥ यातियाम्यांदिशंतत्र प्रविष्टःकर्दमंन्हृदं ॥ ४८ ॥ रावणो
यंवराहेण शिंशुमारेणशक्रजित् ॥ उष्ट्रेणकुंभकर्णश्च यातायाम्यामहोदिशं ॥ ४९ ॥ खरयुक्तरथेना
पि याम्यांयातिदशाननः ॥ राक्षस्योराक्षसाश्चामी रक्तवस्त्राहसंत्यहो ॥ ५० ॥ तैलंपीत्वाप्रनृत्यं
ति गायंत्योराक्षसांगनाः ॥ गोमयन्हृदगाःसर्वे लंकेयंभस्मसादभूत् ॥ ५१ ॥ श्वेतातपत्रःश्वेता
द्रा वेकस्त्वास्तेविभीषणः ॥ चतुर्भिःसचिवैःसार्धं मेवंस्वप्नोममत्वभूत् ॥ ५२ ॥ संपत्तिरस्तिसीता
या विपत्तिर्निशिचारिणां ॥ व्यक्तमेवंविधेस्वप्ने माभर्त्सयतमैथिलीं ॥ ५३ ॥ नाशोभनार्हाभद्रे
यं सीतासर्वांगशोभना ॥ प्रत्यागतंसूचयति काकोयंजानकीहितं ॥ ५४ ॥ वंदंत्यामितिराक्ष
स्यां व्यलपच्छलमैथिलीं ॥ हारामरामनाथेति पालयेतिपुनःपुनः ॥ ५५ ॥ वामैःप्रियंवदैस्तस्या
हस्तोरूनयनैरथ ॥ शिरीषमालाकदली नलिनाभैरकंप्यत ॥ ५६ ॥ इमामवस्थामखिलां पश्य
न्पवननंदनः ॥ चिंतयामासबहुधा कार्यगौरवयंत्रितः ॥ ५७ ॥ राक्षसीभिरविज्ञातः सीतांवि
श्वासयन्नहं ॥ संवदिष्येइतिह्यासां निद्रांप्रत्यैक्षतप्रभुः ॥ ५८ ॥ मानुषीमाशुमधुरां संस्कृतांश्री
तनुप्रियां ॥ नीतिमान्हनुमान्वाचा मुवाचविटपाश्रयः ॥ ५९ ॥ ॥ ॥ ॥

॥ ५७ ॥ संवदिष्यंसहसंवादंकरिष्ये ॥ ५८ ॥ श्रीतनुप्रियां सीताप्रतिमाप्रियां विटपाश्रयःशिंशुपाशाखामाश्रित्यस्थितः ॥ ५९ ॥ ॥ ॥

॥ ६० ॥ ६१ ॥ ६२ ॥ पृच्छतइतिप्रथमपुरुषाद्विवचनं ॥ ६३ ॥ मामृगाक्षीएवंवक्तारं विटपिविटपसंसंगिनं वृक्षशाखामध्यस्थंमंगलांगंसौदामिनीवत्तडिद्वत् पिंगंपीतवर्णं धवलनिवसनं अतिधवलवस्त्रं पद्मरागारुणास्यं एवंरामस्यदूतं दोष्णाहस्तेनकेशानउत्सार्य अपसारयित्वा मुखविधुंमुखचंद्रं अशनैःशीघ्रं

ईशोदाशरथिःश्रीमान् रामोराजीवलोचनः ॥ निधिःसर्वगुणानांहि वारिणामिववारिधिः ॥ ६० ॥
कांतोस्याःपितृसंदेशा त्कांतारंससमःविशत् ॥ कांतासक्तमनाःप्राया त्कांनातस्यचजानकी ॥
॥ ६१ ॥ विचिन्वानस्यरामस्य रावणेनहृतांप्रियां ॥ सलक्ष्मणस्यदूतोहं दृष्टवानस्मितामिमां ॥
॥ ६२ ॥ देवित्वांदेवदेवोसौ देवरश्चतवानघे ॥ कुशलंपृच्छतःप्रीतौ सत्यंदूतमुखेनहि ॥ ६३ ॥
एवंवक्तारमेनंविटपिविटपसंसंगिनंमंगलांगं पिंगंसौदामनीवंत्धवलनिवसनंपद्मरागारुणास्यं ॥
केशानुत्सार्यदोष्णामुखविधुमशनैरुन्नमय्याकुलाक्षी दृष्ट्वारामस्यदूतंसरणरणिकयासामृगाक्षीददृ
श ॥ ६४ ॥ ॥ इति श्रीसंग्रहरामायणे सुंदरकांडे रामांके चतुर्थःसर्गः ॥ ४ ॥ ॥

श्रीः ॥ एवंप्रियंवदंदृष्ट्वा द्रुमाग्रेविद्रुमाननं ॥ तर्कयामासबहुधा तर्कज्ञाननुमध्यमा ॥ १ ॥ हनू
मानवतीर्याथ विनीतोनीतिमत्तमः ॥ प्रश्रयावनतःप्रोचे प्रांजलिःकंजलोचनां ॥ २ ॥ राक्षसीम
ध्यमापन्ना कात्वंत्रैलोक्यसुंदरी ॥ कच्चिद्रामस्यपत्नीत्वं कच्चिन्नःसफलःश्रमः ॥ ३ ॥ इत्युक्तातरु
णीसोचे विधिमारामवल्लभा ॥ स्नुषांदशरथस्यांग जनकस्यसुतामिति ॥ ४ ॥ ॥

उन्नमय्य उन्नतंऊर्ध्वाभिमुखंकृत्वेतियावत् । आकुलाक्षी व्याकुललोचना सरणरणिकया रणरणिकया उत्कंठासहितया ददर्शेत्यन्वयः ॥ ६४ ॥ ॥
इति श्रीसंग्रहरामायणे सुंदरकांडटीकायां चतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ क्षमाभूमिः वृषाईद्रः ॥ १० ॥ ११ ॥ एकरूपःप्रधानरूपः एकःप्रधानइतिनिघानात् । सर्वधर्मसर्वांगताधिनतः । द्विशुक्लः द्वाभ्यां मातापितृभ्यां शुक्लः शुद्धः शुद्ध मातापितृद्वयवानित्यर्थः । अथवाद्विशुक्लः शुद्धगंधद्वयवान कन्याशंखप्रभृतिवानित्यर्थः । कुसुमगंध गंधेनज्ञातव्या महीभुजोमनुजाः मधुगंधवत्समत्स्यामादंबहून्यपत्यानीतिवचनात् दंतनयनयोर्विशेषेणशुभ्रमणयकशीतना । त्रिसमः केशाग्रवृषणजानुसमः । केशाग्रंवृषणंजानुसमायस्यसभूपतिरितिवचनात् । केशविषमैरधमास्युः तत्रवबहुदुःखदेतिवचनाच्च । त्रिपुउन्नतश्च कुक्षिनासिकाहृदयउन्नतः कुक्षिः

मातर्लोकपितारामः कुशलंत्वानुपृच्छति ॥ प्राप्तोरामस्यदूतोहं सितिमारुतिरब्रवीत् ॥ ५ ॥ उप
सृत्यततस्तस्या हनुमान्भक्तिमत्तमः ॥ चरणावरुणाब्जाभौ धन्योस्मीत्यभ्यवंदत ॥ ६ ॥ किं
चित्ततोपसर्पंती प्रोवाचासाहरिणेक्षणा ॥ नूनंसरावणोसित्वं हंतरूपांतरंगतः ॥ ७ ॥ यदिराम
स्यदूतोसि वदरामस्यलक्षणं ॥ वार्ताचार्तोऽहदांतस्य पुण्यकीर्तेःप्रकीर्तय ॥ ८ ॥ आकर्ण्यजानकी
तंतस्या वाक्यज्ञोवाक्यमब्रवीत् ॥ लक्षणंदेवदेवस्य कोवक्ताथापिलक्ष्यते ॥ ९ ॥ क्षमाक्षमांगि
स्तेजः कामःकांतिंवृषायशः ॥ अन्येचान्यान्गुणान्देवाः शिवादिभेदपरांबके ॥ १० ॥ शमीदूर्वा
न्मणिश्यामः पद्माक्षःसिंहविक्रमः ॥ एवंलोकप्रवादोत्र सत्यंतन्नृपसत्तमे ॥ ११ ॥ एकरूपोहि
शुक्लोसौ त्रिसमस्त्रिपुचोन्नतः ॥ त्रिपुताम्रस्त्रिपुस्निग्धस्त्रिवलीस्त्रिजगद्गुरुः ॥ १२ ॥ ॥

क्षितिपइतिवचनात् । परिमंडलोन्नतातिविस्तीर्णनाभिः क्षितिपास्तदल्पेनपृथुसमोन्नतयांचलंबनाभीर्मतिवि । त्रिपुताम्रः
खानयेपुष्टानपुताम्रवर्णः । रक्ताभिःसुखयाप्रांतिकृष्णाभिर्दुःखिताभवति । त्रिपुस्निग्धः
निनांव्यत्ययेनतु । दारिद्र्यंपरिक्षयमितिवचनात् । स्निग्धोक्तनखसमयाःसर्वनिःशेषसंस्कारोति । स्निग्धाभिः
भिर्व्यंजकसमंगिराइतिच । त्रिवलिःउदरेरेखात्रयवान् ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चतुष्कलः चतुर्वेदरेखायुक्तांगुष्ठमूलइत्यर्थः । मूलेंगुष्ठस्यरेखानांचतस्रास्तिस्रएववा । एकाद्वेवायथायोगंरेख्याज्ञेयाद्विजन्मनामिति च । चतुष्किष्कुः चतांत्रिंशत्यंगुलःकिष्कुःतादृशकिष्कुचतुष्टयपरिमाणवान् । षण्णवत्यंगुलोछ्रयइत्यर्थः । चतुर्लेखः ललाटरेखाचतुष्टयवानित्यर्थः । चतुःसमः मानोन्मानसंहतिवर्णैःसमः । तत्रमानंनामांगप्रत्यंगप्रमाणं पदादिशिरोंतं यत्परिमाणंतदुन्मानमित्युच्यते । संहतिर्नामात्यंतसंहननं । अंगप्रत्यंगानांसुस्थिरत्वमित्यर्थः । वर्णानामधूमादिवर्णराहित्यं एकप्रकारवर्णोपेतत्वमित्यर्थः । तथाचतुःसमइतिन्यूनाधिकभावरहितः मानोन्मानसंहतिवर्णैःसहितइत्यर्थः । चतुर्गतिः सिंहव्याघ्रगजवृषभगतिसमानगमनवानित्यर्थः । चतुर्द्रंष्ट्रः समानचतुर्दंतः ॥ १३ ॥ पंचस्निग्धः पंचभिः चक्षुर्दंतत्वक्पाणिभिःस्निग्धः अष्टर्जुः पृष्ठवंशशरीरहस्तपादांगुल्ली

चतुष्कलश्चतुःकिष्कु श्चतुर्लेखश्चतुःसमः ॥ चतुर्गतिश्चतुर्दंष्ट्रो चतुर्वेदोदितःप्रभुः ॥ १३ ॥ पंचस्निग्धोष्टर्जुरसौ षड्गुणाढ्यःषडुन्नतः ॥ सप्तेशोष्टाक्षराख्यानो देवोनवनतोध्रुवं ॥ १४ ॥ बिंबोष्ठःकंबुकंठोयं सुंदरोदुंदुभिःस्वनः ॥ गजराजगतिःस्वामी सौगण्यगुणवारिधिः ॥ १५ ॥ अनुरूपोनुजस्तस्य लक्ष्मणःशुभलक्षणः ॥ त्वांवनेषुविचिन्वानो देवरोदेविदूयते ॥ १६ ॥ ऋश्यमूके भवत्ताभ्यां संगमोमंगलायनः ॥ मयासख्यंकृतंतत्र वानरेंद्रनरेंद्रयोः ॥ १७ ॥ सुग्रीवायददौराज्यं रामोहत्वाथवालिनं ॥ विचिन्वतेचतुर्दिक्षु त्वांहरींद्रास्तदाज्ञया ॥ १८ ॥ ॥ ॥

नासिकाचक्षुःऋजुरायतश्चेत्यर्थः । पृष्ठवंशशरीरहस्तपादांगुल्लीतथा । नासिकाचक्षुषीकर्णौऋजवोयस्यचायता । तस्यराज्यंविजानीयादिति च । षड्गुणाढ्यः ऐश्वर्यादिषड्गुणाढ्यः षडुन्नतः कक्षकुक्षिवक्षोघ्राणस्कंधललाटिकासून्नतइत्यर्थः । कक्षःकुक्षिश्चवक्षश्चघ्राणःस्कंधोललाटिका ॥ सर्वभूतेषुनिर्दिष्टाउन्नतांगाः शुभावहाइतिवचनात् । सप्तेशः अमात्यामांत्रणोदूताश्रेणयश्चपुरोहिताः । पुरंजनपदंचेतिसप्तप्रकृतयस्त्विमाइत्युक्तानांसप्तप्रकृतीनांईश्वरइत्यर्थः । सप्तलोकेशइत्यादितुस्पष्टं । अष्टाक्षराख्यानः श्रीमदष्टाक्षरमंत्रप्रतिपाद्यः । देवः क्रीडादिगुणसंपन्नः । नवनतः सूक्ष्माण्यंगुलिपर्वाणिकेशरोमनखत्वचः । शेफश्चसूक्ष्मां येषांस्युस्तेनरादीर्घजीविनइत्युक्तप्रकारेणनवनतइत्यर्थः ॥ १४ ॥ १५ ॥ दूयतेपरितप्यते ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥

प्रभंजनादंजनायां जातोहंहनुमान्हरिः ॥ तीर्णार्णवोरामदूतः सत्यंप्राप्तोस्मिशोभने ॥ १९ ॥
इत्युक्त्वारामनामांकं सप्रादादंगुलीयकं ॥ जग्राहसानुरागात्तं तद्रामारामसागतं ॥ २० ॥ प्र-
त्ययंप्राप्यसासीता प्रत्यभाषतमारुतिं ॥ वीरोसिरामदूतोसि प्राज्ञोसि प्लवगेश्वर ॥ २१ ॥ क-
च्चित्पालयतेलोकान् रामःसौमित्रिणासह ॥ कच्चिदेष्यतिकाकुत्स्थः कच्चिन्मांप्रतिनेष्यति ॥ २२ ॥
द्वादशेकिलमासेमां भ्रंत्येतेदशमोह्ययं ॥ विभीषणस्यकन्यामां नलनामेदमब्रवीत् ॥ २३ ॥ ए
वंब्रुवाणाकरुणं विलपंतीशुकालपा ॥ स्वामिन्रामप्रसीदेति प्ररुरोदपुनःपुनः ॥ २४ ॥ हनुमा-
न्प्रांजलिःप्रोचे पादयोर्देवितेशपे ॥ क्षिप्रमेष्यतिकाकुत्स्थः सानुजःसकपिव्रजः ॥ २५ ॥ दशा
ननोरामबाणै र्दशांतंद्रुतमेष्यति ॥ निद्रावान्कुंभकर्णोपि दीर्घनिद्रांगमिष्यति ॥ २६ ॥ अप
नेष्यत्यप्रियांस्ते रामस्त्वांनेष्यतिध्रुवं ॥ अथवास्मिन्मुहूर्तेत्वां नयेयंरामसन्निधिं ॥ २७ ॥ इत्यु
क्तोवाचवामोरूः कथंमान्नेष्यसेकपे ॥ अल्पस्त्वंराक्षसकुला दुःसहाद्रमणैरीति ॥ २८ ॥ इत्यन्ह-
नूमान्संगृह्य रूपंहेमाद्रिसन्निभं ॥ वज्रदंष्ट्रनखस्तांच ताम्रवक्त्रोस्यभाषत ॥ २९ ॥ उत्क्षेप्स्येध
रामेनां क्षणेस्मिन्नाब्धिमेखलां ॥ किमुतात्पीयसींलंकां रामदासाग्रणीरहं ॥ ३० ॥ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ वायसस्यकाकस्य अक्षितक्षणं अक्षिनाशं अभिज्ञां अभिज्ञानं ॥ ३४ ॥ ३५ ॥ पंथानःमार्गाः शिवाःकल्याणदाः ॥ ३६ ॥

तिष्ठमातर्मुहूर्तंमे पृष्ठेमंदरसुंदरे ॥ शतयोजनविस्तीर्णं शरधिंक्षिप्तमेधुना ॥ ३१ ॥ इत्युक्तोमा
चतन्वंगी जानेज्ञानंबलंचते ॥ लंकांसपालांसंचूर्ण्य त्वंनुमानिकरीश्वरः ॥ ३२ ॥ किंतुरामस्य
मेकीर्तिः स्याद्दशास्यनिषूदनात् ॥ स्वयंममाप्याहरणा त्कथंसामन्यतेभवान् ॥ ३३ ॥ प्रकाशय
मकांतेन वायसस्याक्षितक्षणं ॥ मद्दर्शनेवदाभिज्ञां प्रणामंचनिवेदय ॥ ३४ ॥ [illegible]
नं रावणंमारयिष्यति ॥ मासात्पूर्वमिहागत्य प्राणांस्त्यक्ष्यामिमारुते ॥ ३५ ॥ [illegible]
छ भ्रातरौरामलक्ष्मणौ ॥ सुग्रीवमपिसामात्यं पंथानःसंतुतेशिवाः ॥ ३६ ॥ [illegible]
ष्टं ददौचूडामणिंसती ॥ इमंदेवायदेहीति चिन्हमेकांतिकंनिजं ॥ ३७ ॥ चूडामणिंतंसंगृह्य प्र
णम्योवाचपावनिः ॥ रावणारिंपतिंदेवि त्वंद्रक्ष्यस्यचिरादिति ॥ ३८ ॥ पावनिःपर्वताकारः प-
रिक्रम्यप्रणम्यतां ॥ ततस्थलांतरंप्राप्य कार्यशेषमचिंतयत् ॥ ३९ ॥ स्वदूतस्यविलीनत्वं न-
रामस्ययशस्करं ॥ तस्मादाविर्भवन्शत्रून् हत्वास्यांराघवार्दकः ॥ ४० ॥ इतिसंचिंत्यहनुमान्
कोपयन्राक्षसेश्वरं ॥ वनंविनाशयामास विनातांशिंशुपातरुं ॥ ४१ ॥ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ वनं अशोकवनं ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

खर्जूरंतिंत्रिणींचाम्रं तिलकंबिल्वमर्जुनं ॥ अश्वत्थंचंपकंचूतं जंबुनिंबकदंबकान् ॥ ४२ ॥ कपि
त्थकदलीभूर्जं तमालान्गुग्गुलान्वटान् ॥ आमलकान्नारिकेल मल्लिकार्जुनान् ॥ ४३ ॥
पनसागरुतालांश्च देवदार्वादिकान्द्रुमान् ॥ नानापुष्पसुवल्लीभि र्युक्तांश्चानाशयत्कपिः ॥ ४४ ॥
सरःकमलकल्हारान् करीवकमलेक्षणः ॥ पादघातेनलांगूल हस्तघातेनचोरसा ॥ ४५ ॥ लां
गूलेनपदांगुल्या जानुनाचहरीश्वरः ॥ निपात्योत्पत्यसंछिद्य विभिद्योन्मूल्यचद्रुमान् ॥ ४६ ॥
मारुतिर्मारुतइव रावणोद्यानमाक्षिपत् ॥ अघौघंरामनामेव पद्मषंडमिवद्विपः ॥ ४७ ॥ तुलम्
ग्निरिवारामं रामदूतोक्षिणोत्क्षणात् ॥ सिंहनादेनमहता लंकामुत्कंपयन्कपिः ॥ ४८ ॥ युद्धमु
तमन्विच्छ न्नारुरोहाथतोरणं ॥ उद्बुद्धास्तेननादेन दृष्ट्वातंपर्वतोपमं ॥ ४९ ॥ राक्षस्यश्चाकिताभी
ता मायासीतामथाब्रुवन् ॥ कांतेकोयंकपिश्रेष्ठो यस्तसंवादगोचराः ॥ ५० ॥ इत्युक्तासाब्रवीत्त
न्वी मायेयंरक्षसांध्रुवं ॥ मायाविनांगतिंलोके जानंत्येवहिमायिनः ॥ ५१ ॥ अहिरेवह्यहेःपादा
न्विजानातिनचापरः ॥ इत्यस्यावचंश्रुत्वा राक्षस्योविद्रुताद्रुतं ॥ ५२ ॥

॥ उदंतंवृत्तांतं ॥ ॥ ५३ ॥ साशीतिकोटियूथपं अशीतिकोटिपरिमित सेनानायकसहितं सपुरोगाष्टकायुतं सहितपुरोगाष्टकाशीतिकोटिरक्षसमन्वितमित्यर्थः ॥५४॥ आववारसमावृणोत् । हरिंहनूमंतं रक्षोजीमूतसंघानां राक्षसनामकमेघसमूहानां ॥ ५५ ॥ नानाहेतिमयैः नानाविधायुधमयैः आविध्यभ्रमयित्वा ॥ ५६ ॥ जयतिसर्वोत्कृष्टतयावर्तते प्लवगवृषभः सुग्रीवः अनुवृत्तौ वर्तते विवृत्तौ स्थिरत्वदयादियुक्तौ इतःआस्फोटनाद्या महुरुच्चैरवमुदाह

न्यवेदयन्नुदंतंतं लंकापालायशंकिताः ॥ तदाकर्ण्यभृशंक्रुद्धो रावणोथसमादिशत् ॥ ५३ ॥ अवध्यान्शंकरवरा त्किंकरान्नामराक्षसान् ॥ साशीतिकोटियूथपं सपुरोगाष्टकायुतं ॥ ५४ ॥ आववारहरिंवीरं तद्बलंलोकभीषणं ॥ रक्षोजीमूतसंघाना मूर्जितानांप्रगर्जतां ॥ ५५ ॥ नानाहेतिमयैर्वर्षै र्नाचलद्वानराचलः ॥ आविध्यभुविलांगूलं तिर्यक्संप्रेक्ष्यराक्षसान् ॥ स्फुटमास्फोट्यहनुमा नुच्चैरेवमुदाहरत् ॥ ५६ ॥ स्वामीरामोजयतिजगतिश्रीधरोनंतवीर्य स्तंसौमित्रिःप्लवगवृषभश्चानुवृत्तौविवृत्तौ ॥ सीतांनत्वारणमुखमितोनन्वहंरामदूतो नालंनालंमुहुरहहहेरावणानांसहस्रं ॥ ५७ ॥ ॥ इति श्रीसंग्रहरामायणे सुंदरकांडे रामांके पंचमःसर्गः ॥ ५ ॥ ॥

श्रीः ॥ वाणीतिवाणीपतिनंदनस्य व्यक्तंचचारानुसभंसुराणां ॥ वियद्गजेयुःकथमन्यथाते वैमानिकायुद्धदिदृक्षयात्र ॥ १ ॥ तलप्रहारेणबहून्निहत्य सतोरणस्थंपरिघंदधद्राक् ॥ शिष्टानशिष्टांश्चनिहत्यतेन प्रासादमासाद्यमुहुर्जगर्ज ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

रदित्यन्वयः । मुहुःबहुसहस्रामितिवा । अहहेतिशत्रूणामाभासीकरणंकुतूहलोक्तिः ॥ ५७ ॥ ॥ इति सुंदरकांडटीकायां पंचमःसर्गः ॥ ५ ॥

श्रीः ॥ वाणीपतिनंदनस्य भारतीपतेर्वायोःपुत्रस्य चचारव्याप्ताभूत् अनुसभं सभायां वियतआकाशं तेसुराःवैमानिकाःविमानारूढाः अत्राशोकवनेपरिघंधत् दधानः ॥ १ ॥ शिष्टान् तत्रस्थितान् अशिष्टानदुष्टान् ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रप्रसादे उदहरत् उन्मूलयामास हनूमान् चैत्यपालान् उद्यानपालकान् तेनस्तंभेन अंबरगः आकाशमाश्रितः ॥ ३ ॥ सहस्रंबहुसहस्रं कंडूतिचंडः कंडू यांकंडूयनेनचंडः युद्धार्थमितिकंडूत्याघुकइत्यर्थः ॥ ४ ॥ प्रगर्जतिसति सप्तशिखोपमान् अग्निसमान् ॥ ५ ॥ सुवर्णमालीस्वर्णमाला विभूषितः ॥ स्व-

स्तंभंचतत्रोदहरत्धनूमान् सचैत्यपालांश्चजघानतेन ॥ प्रासादमप्यंबरगोददाह स्तंभानलेनाग्र मुवाचचोच्चैः ॥ ३ ॥ यंमादृशानांभजतेसहस्रं रामःससुग्रीवगुरुःपतिर्मे ॥ कंडूतिचंडोममबाहुदं डो विजृंभतेवैरिणमाह्वयामि ॥ ४ ॥ प्रगर्जतीत्थंहनुमत्युदारे प्रहस्तपुत्रप्रमुखान्प्रचंडान् ॥ समादिशत्सप्तशिखोपमाना न्समंत्रिपुत्रान्कुपितोदशास्यः ॥५॥ प्रहस्तपुत्रस्त्वथजंबुमाली प्रा भंजनिंप्राप्यसुवर्णमाली ॥ ववर्षबाणान्खरयुक्तयानः शिलांविशालांहनुमान्मुमोच ॥ ६ ॥ शरैः शिलायांशकलीकृतायां सालेचमुक्तेरिपुणानिकृत्ते ॥ तेनैववीरःपरिघेणपापं संचूर्णयामाससयानमेनं ॥ ७ ॥ रणोत्कटान्मंत्रिसुतानवाप्ता नन्यान्ससैन्यान्यहनत्धनूमान् ॥ तलेनकांश्चिच्चरणेन कांश्चि दन्यान्नखैःकांश्चननादमात्रात् ॥ ८ ॥ संचिंत्यकिंचित्सनिशाचरेशो दुर्धर्षयूपाक्षविरूपपू र्वान् ॥ सभासकर्णप्रघसानुवाच सेनाग्रनेतॄनितिपंचवीरान् ॥ ९ ॥ स्युर्वालिसुग्रीवमुखाःकपींद्रा लोकाधिकानेदृशविक्रमास्ते ॥ इदंमहद्भूतमहोक्षयाय प्राप्तंहिनःसंप्रतिगृह्यतांतत् ॥ १० ॥ ॥

खरयुक्तयानःखरैःसंयोजितरथः ॥ ६ ॥ मुक्तेहनुमताक्षिप्ते रिपुणाजंबुमालिनामकेन निकृत्तेखंडितेसति तेनैवपूर्वतोरणेविद्यमानेनैव सयानंसरथं ॥ ७ ॥ ॥ ८ ॥ सरावणइत्यर्थः ॥ ९ ॥ स्युःबभूवुःस्युस्थिताःपूर्वमितिवा । तत्‍ भूतं ॥ १० ॥ ॥ ॥ ॥

परीत्यपरीवार्यस्थिताः निशातान्निशितान् अकिरन् ववृषुः ॥ करालाङ्गः ॥ ११ ॥ निर्घातवत् अशनिवत् निर्घातमशनिर्निक्षिप्य विभजात । प तत्प्लवमानः दुर्धर्षदेहः पताशितिसंबंधः । महानगाभः महापर्वतसमः पिष्टफेनोपमतां संपिष्टफेनसमानतां ॥ अन्वंतमेतानिर्त्यर्थः ॥ १२ ॥ पांडुकीर्तिः

इतीरितास्तेचतुरंगिणींस्वां चमूमुपानीयरणाभियाताः ॥ परीत्यदीप्तेपवमानसूनौ शरांन्निशाता
नकिरन्करालाः ॥ ११ ॥ निर्घातवद् घोरतरातिघोषः पतन्हनूमान्गगनात्सकोपः ॥ दुर्धर्षदेहोथम
हानगाभः संपिष्टफेनोपमतांजगाम ॥ १२ ॥ क्रुद्धोविरूपाक्षइमंयुयोध यूपाक्षनामाप्यथमुद्गरेण ॥
सालेनसंचूर्णितवान्हनूमान् तौपांसुपिंडाविवपांडुकीर्तिः ॥ १३ ॥ तंभासकर्णःशितशूलशाली
सपट्टिशश्चप्रघसोभियातौ ॥ तौद्वौचपंचत्वमहोनिनाय महाद्रिशृंगेणमहाबलोसौ ॥ १४ ॥ गजै
र्गजेंद्रांस्तुरगैस्तुरंगान् रथैरथानेषभटैर्भटांश्च ॥ अपातयत्कर्मसुलाघवज्ञो विनाशिलासालविसा
र्गणेन ॥ १५ ॥ तृतीयमंशंस्वपताकिनीनां विज्ञायभग्नंकपिपुंगवेन ॥ सर्विशदक्षःसकलाक्षिभिश्च
कुमारमक्षंस्थितमैक्षताथ ॥ १६ ॥ पितुर्नियोगंचतुरःसविद्वान् बालार्कभासंरथमारुरोह ॥ धनुर्धरं
वीरवरंप्रयांतं तमन्वगछन्पृतनाअसंख्याः ॥ १७ ॥ क्रोधारुणाक्षःकपिमैक्षताक्षो विस्फारयन्का
र्मुकमुग्रकर्मा ॥ सतोरणस्थस्तरुणार्कवक्त्र स्तूर्णंनदंनंबरमाललंबे ॥ १८ ॥ ॥ ॥

विचित्रकीर्तिः ॥ १३ ॥ शितशूलशाली अतिनिशितशूलयुक्तः । सपट्टिशःपट्टिशाख्यायुधसहितः पंचत्वंमरणंनिनाय प्रापयामास ॥ १४ ॥ १५ ॥
स्वपताकिनीनां स्वसैन्यानां विंशदक्षःरावणः अक्षं अक्षनामकं ॥ १६ ॥ पृतनाःसेनाः ॥ १७ ॥ तरुणार्कवक्त्रः उदयार्कइवाकरमुखः ॥ १८ ॥ ॥

तंताद्दशं ॥ २७ ॥ यस्यशक्रशत्रोरितियोजना ॥ लक्ष्यच्युतानेतिसंबंधः ॥ २८ ॥ सुरारिःइंद्रजित् ॥ २९ ॥ अवेध्यंवेद्धुमशक्यं ॥ ३० ॥ ३१ ॥
शणचीरबंधः शणनिर्मितरज्जुभिःचीरवस्त्रैश्चबंधः । सेहेसहनशक्तिमाश्रित्यस्थितोभूत् ॥ ३२ ॥ अपकृतःअपकारःकृतः ॥ ३३ ॥ जातिस्वभावभु

तंमेघनादंससमुद्रनादो विलोक्यभूयोववृधेहनूमान् ॥ शरानसंख्यान्सववर्षयाव त्तावद्धरिस्तोर
णतःखमाप ॥ २७ ॥ नपाक्षिपक्ष्मस्वपियस्यबाणा लक्ष्यच्युताजात्वपिशक्रशत्रोः ॥ तस्येषवःखं
परिपूरयंत्यो सर्वाहनूमत्यभवान्विलक्ष्याः ॥ २८ ॥ तंवंचयंतंसकलांश्चबाणा नभ्युत्पतंतंचभुजौ
प्रसार्य ॥ प्रक्रीडितंप्रेक्ष्यकपिप्रवीरं चिंतामनंतांसययौसुरारिः ॥ २९ ॥ अवेध्यमेनंभुवनेष्ववे
ध्यं पितामहास्त्रेणवशीकरिष्ये ॥ इत्थंसनिर्धार्यमहामनस्वी ब्रह्मास्त्रमस्मैसहसामुमोच ॥ ३० ॥
विष्णोःप्रसादात्मकलास्त्रतेजो नमांस्पृशेद्देवमपीहबद्धः ॥ द्रक्ष्यामिवक्ष्यामिचरावणंत मितिस्म
रन्नस्त्रवशोभवत्सः ॥ ३१ ॥ सराक्षसैस्तैःशणचीरबंधः सभांप्रणीतःप्रतिभर्त्सितश्च ॥ राज्ञःपु
रस्तान्निहितोखिलंच शक्तोपिसेहेनिजकार्यसिध्यै ॥ ३२ ॥ कस्त्वंकपेत्वंकुतआगतोसि कस्यासि
दूतोपकृतःकिमर्थं ॥ इत्थंदशास्येनसपृच्छ्यमानः प्रणम्यरामंहनुमानुवाच ॥ ३३ ॥ जातिस्वभावो
वनलोपनंत त्क्षमस्वराजन्फलजीविनांनः ॥ ॥ ३४ ॥

तः वनलोपनंवनछेदनादिकं ॥ ३४ ॥

जिघांसयाहंतुमिछया अभ्यापततःअभ्यागछतःपुरुषान्जिजीविषुः जीवनकामः नक्षपयेत्ननाशयेत् प्रभुःशक्तिमांस्तर्हीत्यर्थः। सुतविक्रमेइंद्राजेनन्परा क्रमे मास्यात्मास्तु ॥ ३५ ॥ आर्यःरामः ॥ ३६ ॥ ईष्टेसमर्थोवर्तते ॥ ३७ ॥ विग्रहःकलहः नप्रशस्तइतियोजना ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥

जिघांसयाभ्यापततःकएव जिजीविषुर्नःक्षपयेत्प्रभुश्चेत् ॥ नब्राह्ममस्त्रंममबंधकंस्या न्माकौतु
कंतेसुतविक्रमेस्यात् ॥३५॥ मांरामदूतंमरुतस्तनूजं विधिस्वयंद्रष्टुमुपागतंत्वां ॥ कृपाकरःक्षाम्य
तिचौर्यमार्यः प्रणम्यदेवींप्रतिदीयतेचेत् ॥ ३६ ॥ नोचेद्द्रुतंद्रक्ष्यसिराघवौत्वं तंचाथवीरंकपिपृ
थनाथं ॥ रामेषुरेकःससुरासुरादीन् संहर्तुमीष्टेसकलांश्चलोकान् ॥ ३७ ॥ त्वामल्पसारंकिमुता
ल्पबुद्धे माविग्रहोभूच्छरणंव्रजैनं ॥ शक्तोप्यहंत्वांसबलंनहन्यां भूम्नःस्वयंशत्रुवधेयशःस्यात् ॥
॥ ३८ ॥ एवंब्रुवाणेपवमानसूना वाज्ञापयत्तस्यवधंदशास्यः ॥ राज्ञोनदूतस्यवधःप्रशस्तः पुच्छं
कपेरस्यदहामशीघ्रं ॥ ३९ ॥ विभीषणेनेत्यभिभाषितोसौ तत्पुच्छमस्यंकिलदग्धुमैच्छत् ॥ राजाज्ञ
यापुच्छममुष्यवस्त्रैः संवेष्टितंसंववृधेतिमात्रं ॥ ४० ॥ यत्नेनसंवेष्ट्यनिशाचरेंद्रा स्तत्राग्निमुच्चै
रुददीपयंस्ते ॥ ४१ ॥ पुनःपुनस्तैःपरिणीयमानः संप्रीयतेस्मैषपुरींदिधक्षुः ॥ ज्वलंश्चसोनज्वल
नोददाह मरुत्स्वरूपंहिमरुत्सखत्वात् ॥ ४२ ॥ ॥ ॥ ॥

उददीपयन्ज्वलयामासुः ॥ ४१ ॥ तैःराक्षसैःपरिणीयमानःपरितः आनीयमानःएषहनूमान् संप्रीयतेस्म अत्यंतप्रीतोभवत् दिधक्षुःदग्धुकामः ॥४२॥

॥ ४३ ॥ रक्षिणःरक्षाकर्तॄन् सद्मानिगृहाः राजावरोधादि राजांतःपुरं ॥ ४४ ॥ ४५ ॥ दंडधरेण पवित्रपाणिना ॥ ४६ ॥ वितानकर्म यज्ञकर्मनदाधिराजेसमुद्रे मारुतियायजूकः हनुमदाख्ययजमानः ॥ ४७ ॥ नवदग्धेतियोजना ऋषीणामितिवचःश्रुत्वेत्यन्वयः ॥ ४८ ॥ हृत्प्रांतर्गतं



सशैलसंकाशशरीरआसीत्तं क्षणाद्बिडालप्रतनुश्चपश्चात् ॥ बंधाद्विमुक्तोथचपर्वताभो योगीश्वर
स्तच्चपुरंददाह ॥ ४३ ॥ सतोरणस्थंपरिघंगृहीत्वा तद्रक्षिणस्तेननिहत्यसर्वान् ॥ लंकांसभागो
पुरसौधसद्म राजावरोधादिमतींददाह ॥ ४४ ॥ जज्वालतत्रज्वलनोतिमात्रं जज्वालतस्माद्वि
गुणंहनूमान् ॥ सर्वत्रचैकक्षणएवदृष्टः सविश्वरूपत्वमवापनूनं ॥ ४५ ॥ आक्रंदनैःसंदहनैर्नि
पातै र्विलोडनाद्यैर्भयदुःखपूर्णैः ॥ हनूमतादंडधरेणदग्ध्वा लंकानरे[illegible]पमाना ॥ ४६ ॥
वितानकर्मेत्थमिदंविधाय नदाधिराजेवभृथंचकृत्वा ॥ समर्पयामाससमर्पणीयं रामायतन्मारुति
याय जूकः ॥ ४७ ॥ दग्धांपुरीमारुतिनासमस्तां सीतान्विता[illegible]पासा ॥ स्याद्विक्रमो
नीतियुतःप्रभूणां श्रुत्वेत्यृषीणांसवचोभ्यनंदत् ॥ ४८ ॥ शांतोभवाग्नेमरुतःसुतेत्थं प्रागेवही
त्याशिषमुक्तवत्यै ॥ संसांत्वितायैसरमावचोभि र्ननामतस्यैहनुमान्यियासुः ॥ ४९ ॥ क्षिप्रंससागं
तुदेवइत्थं तयोदितोबाढमितिप्रणम्य ॥ गिरींद्रमारुह्यगिरिप्रकाशस्ततीर्षुरब्धिंपवनेपुरेव ॥ ५० ॥

॥ १११ ॥

तस्यैसीतायैः यियासुःगंतुकामः ॥ ४९ ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥ ॥

उदीचींउत्तरांदिशं नानानगालीः नानापर्वतपङ्क्तीः ॥ ५९ ॥ राज्ञःसुग्रीवस्यपपुः मधुपपुरिसर्थः ॥ ६० ॥ ६१ ॥ आर्यकमपिपूजार्हमपिदेवमार्गंअपा नं॥६२॥ वृत्तंवृत्तांतंआवेदयतिस्म ज्ञापयामास॥६३॥ राजासुग्रीवः तद्वनलोपनं दधिमुखात् दधिमुखनामकात्स्वमातुलात् श्रुत्वामुदासंतोषेण रघुनाथमूचइ



आलोच्यतेकार्यमथार्यवर्या निश्चित्यसर्वेहनुमन्मतेन ॥ आशामुदीचींप्रययुस्तरंतो नानानगाली
र्नगरीर्नदीश्च॥ ५९ ॥ संप्राप्यराज्ञोमधुमद्वनंते ययाचिरेतत्रमधूनिलोलाः॥ श्लाघ्यंहनूमंतमथां
गदंच तयोर्नियोगेनपपुर्निकामं॥ ६० ॥ क्रुद्धोतिमात्रंवनपालनाथो योमातुलःसूर्यसुतस्यराज्ञः॥
अभ्यद्रवत्तान्मधुपानमत्ता न्सालंदधानःसहितःस्वदासैः॥ ६१ ॥ अप्यार्यकंतंमधुमत्तचित्त स्त
त्रांगदोभूमितलेपिपेष ॥ परेपरान्जानुभिराक्षिपन्द्राक् तेदेवमार्गंप्रतिदर्शयंतः॥ ६२ ॥ मुहूर्तमा
त्रःप्रतिलब्धसंज्ञो सहस्रभृत्यैरुपगम्यतूर्णं ॥ सुग्रीवमावेदयतिस्मवृत्तं तन्मातुलोराघवसन्निधा
ने ॥ ६३ ॥ राजातदामधुवनस्यविलोपनंत छ्रुत्वामुदादधिमुखाद्रघुनाथमूचे ॥ सीताध्रुवंहनुम
तादृशेमधूनि तस्मात्पिबंतिकृतकृत्यधियस्तएवं ॥ ६४ ॥ आनंदीदिनकरनंदनःकपींद्रा नानेतुं
दधिमुखमादिशद्द्रुतंतान् ॥ प्राप्तस्तान्समधुवनेप्रणम्यचोचे राजावःसपदिदिदृक्षतेमुदेति॥६५॥
आयांतोवियतिघनाघनायमानाः संमोदात्सकिलकिलारवाःकिलैते ॥ संप्राप्तारविसुतसेवितंपरे
शं सन्नेमुःसहमहताहनूमताथ ॥ ६६ ॥ ॥ ॥ ॥ ॥ ॥ ॥



त्यन्वयः ॥ ६४ ॥ आनंदी अतिमतुष्टः सपदिइदानीमेव दिदृक्षते द्रष्टुमिच्छति ॥ ६५ ॥ आयांतः आगच्छंतः वियति आकाशे घनाघनायमानाः महानी लमेघसमानाःसंमोदात् संतोषोद्रेकात् सकिलकिलारवाः सहितकिलकिलशब्दाः वानराणांध्वनिविशेषः किलकिलेत्युच्यते॥ ६६ ॥ ॥ ॥

दृष्टेति दर्शनवचनस्य प्राथम्यकथनं उत्तमदूतबललक्षणं सूचितं सूचयितुं मेत्यादिकथने दृष्टा किंनवेति संशयःप्राप्तःपश्चाद्दृष्टेतिवचनस्य चानुकम्पनात् संदृष्टे सति सैरविजलक्ष्मणे सुग्रीवेणलक्ष्मणेनचसहिते प्रोचे प्रोवाच अखिलवृत्तं स्वस्यप्लवनादिकं समस्तमपिवृत्तांतं शुकालपायाः सीतायाः ... अभिज्ञान् संदेशानपिप्रोवाचेत्यन्वयः ॥ ६७ ॥ चित्रकूटेपर्वतेकांतायाः सीतायाःमनःशिलःमनःशिलारसस्यसंबंधिनं तिलकविधिंतिलकनिक्षेपणंचाचिन्हार्थंप्रोचे। काकाक्षिक्षतिमपिकाकस्यनयननाशमपि सीतासंदर्शनेचिन्हंप्रोचे। पूर्वंचित्रकूटेस्थितेलीलायात्वयाकदाचित् शिलारसेनसीतायाः तिलकंकृतंकिं

दृष्टासाजनकसुतेतिवाक्यमात्रात्संदृष्टेसरविजलक्ष्मणेमहेशे ॥ त्प्रोचेसौपवनसुतोखिलंचवृत्तं
संदेशानपिविशदांछुकालपायाः ॥ ६७ ॥ कांतायास्तिलकविधिंमनःशिलायाः काकाक्षिक्षतिम
पिचित्रकूटऊचे ॥ तंचूडामणिमपिदत्तवान्हनूमान् सोभिज्ञाइतिविदधेखिलज्ञपार्श्वे ॥ ६८ ॥
निर्दुःखःपरमसुखानुभूतिरेको रामोयंजगतितथैवरामरामा॥ वेदायंपवनसुतोहितत्वतस्ता वप्येवं
व्यधुरधिकंविडंबनंते॥ ६९ ॥ जातांसेवासमुद्रात्स्वपदसरसिजेस्वार्पितांस्वप्रकाशां निर्दोषामर्थ
हीनांजगतिहनुमतोभक्तिमाणिक्यमालां॥ दृष्ट्वातस्मैप्रदातुंसकलमसदृशंचिंतयन्रामदेवः प्रादा
दात्मानमेवप्रमदमहपरिष्वंगलीलाछलेन ॥ ७० ॥ ॥ इति श्रीसंग्रहरामायणे सुंदरकांडे
रामांके नारायणपंडिताचार्यकृतौ षष्ठःसर्गः ॥ ६ ॥ सुंदरकांडः समाप्तः॥ श्रीकृष्णार्पणमस्तु॥

ल तत्रकदाचित्कस्यचित् काकस्य अक्षिचपातितंकिल इत्यादिकंसीतोक्तवचनमुक्तवानित्यर्थः। सीतादर्शने अभिज्ञानानिविश्वासकारणानीत्यर्थः॥६८॥ रामरामा रामस्यभार्यासीता तौरामरामेश्वेतितौ व्यधुः कृतवंतःदर्शितवंतइत्यर्थः। विडंबनं लोकानुकारणं ते रामसीतापवमानसुताः ॥ ६९ ॥ तस्मै तादृशाय हनुमते असदृशं अतदर्थ्यार्थंअननुकूलं प्रमदमहपरिष्वंगलीलाछलेनसंतोषाख्योत्सवेवाप्रमानोनयंपरिष्वंगः आलिंगनंतान्द्रपयायालीला सैवछलं तेनआलिंग्य तंतस्मिन् स्वात्मानुग्रहंपुनरपिसंपूर्णमकरोदित्यर्थः ॥ ७० ॥ ॥ इति सुंदरकांडटीकायां षष्ठःसर्गः ॥ ६ ॥

॥ इति श्रीसंग्रहरामायणे सुंदरकांडः ५० ॥

## ॥ अथ श्रीसंग्रहरामायणे युत्धकांड प्रारंभः ॥

॥ श्रीगुरुभ्योनमः ॥ आचष्टअब्रवीत् ॥ १ ॥ २ ॥ निश्चिक्येनिश्चितवान् ॥ ३ ॥ ४ ॥ समूलतूलंसर्वमपिराक्षसारण्यमूलंतूलवदित्यर्थः । मूलेनचाग्रेण चसहितंयथाभवतितथासमूलतूलंसर्वात्मनेत्यर्थः ॥ ५ ॥ निशाचरध्वांतभिदंराक्षसाख्यांधकारविनाशयितुं सवितासूर्यः ॥ ६ ॥ ७ ॥ ८ ॥ कुक्षिमध्य



श्रीरामचंद्रायनमः ॥ वाणींश्रुत्वाहनुमतो वाणीमाचष्टराघवः ॥ कुर्वन्प्रसादसामग्रीं निर्व्याजां सर्वतोधिकां ॥ १ ॥ पौरुषेपुरुषःकोन्यो विद्यतेहनुमत्समः ॥ रावणंयस्तृणीचक्रे सिंधुमुल्लंघ्यलीलया ॥ २ ॥ इत्युक्त्वासहसंमंत्र्य भगवान्वायुसूनुना ॥ कपीनांलंघनोपायं निश्चिक्येसेतुमंबुधौ ॥ ॥ ३ ॥ लंकापुरस्यदुर्गत्वं राक्षसानांचतद्बलं ॥ उक्तंश्रुत्वाहनुमता रामःस्मितमुखोब्रवीत् ॥ ४ ॥ समूलतूलंधक्ष्यामि रावणारण्यमुल्बणं ॥ उत्तराफल्गुनीह्यद्य मध्यान्हेगमनंशुभं ॥ ५ ॥ रामउक्तेतिरविज मारुरोहाथमारुतिं ॥ निशाचरध्वांतभिदं सवितेवोदयाचलं ॥ ६ ॥ आरुरोहाथसौमित्रि रंगदंकनकांगदं ॥ रामसुग्रीवयोर्वाक्या त्सर्वसैन्यानिनिर्ययुः ॥ ७ ॥ नीलःसेनापतिःसेना माकर्षन्नग्रतोययौ ॥ पार्श्वयोर्यूथनाथाव प्यृषभोगंधमादनः ॥ ८ ॥ सुषेणजांबवत्पूर्वा रक्षतःकुक्षिमव्रजन् ॥ सुग्रीवसौमित्रियुतः सेनामध्येययौप्रभुः ॥ ९ ॥ पनसाद्यावानरेंद्रा रामसुग्रीवशासनात् ॥ पर्यगुश्चक्रवच्चक्रं परितःपारिपालकाः ॥ १० ॥ जीमूताइवगर्जंतः सपक्षापर्वताइव रामदासाःकपींद्रास्ते रेजिरेगमनोत्सवे ॥ ११ ॥ ॥ ॥ ॥

भागं अव्रजन् आगच्छन् ॥ ९ ॥ पर्यगुःपरितो भ्याजग्मुः चक्रंसैन्यं ॥ १० ॥ अभितुताःगोप्ताः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

॥ १२ ॥ नचक्रमेनलंघितवान् अतिक्रम्यनगतवानित्यर्थः ॥ १३ ॥ दक्षिण कुशलः ॥ १४ ॥ प्रत्यनीकमिव प्रतिसैन्यमिवस्थितं ॥ १५ ॥ वेलांतं
सेनान्यासेनाप्रणेत्रानीलेन । नीलप्रत्युक्तेत्यर्थः ॥ १६ ॥ १७ ॥ अशेत विश्रममकरोत् उपधाय उपधानं शिरःपीठंकृत्वा दक्षिणं दक्षिणभुजं ॥

अदंतःफलमूलानि पिबंतोमधुरंमधु ॥ गायंतोराघवगुणान् स्वैरंयांतिस्मवानराः ॥ १२ ॥ रामा
ज्ञावेलयारुद्ध कपिसैन्यमहार्णवः ॥ पुरग्रामव्रजादीनि क्षुभितोपिनचक्रमे ॥ १३ ॥ दक्षिणःस
दिशंगच्छन् दक्षिणांलक्ष्मणाग्रजः ॥ विंध्यंसह्यंचाभ्यगच्छ न्मलयंचमहीधरं ॥ १४ ॥ महेंद्रवंद्यो
माहेंद्र मधिरुह्यमहीधरं ॥ प्रत्यनीकमिवापश्य द्वारिधिंसैन्यवारिधेः ॥ १५ ॥ वेलांविशालामा
पेदे माहेंद्रादवरुह्यसः ॥ सेनायास्तत्रसेनान्या रामोवासमकल्पयत् ॥ १६ ॥ प्रार्थयन्किलपंथा
नं सिंधुंसिंधुशयस्ततः ॥ विश्वेश्वरोपिभगवा न्मार्दवंधर्ममाश्रितः ॥ १७ ॥ अशेतानंतशयनो
वेलायांदर्भसंस्तरे ॥ भुजंभुजंगभोगाभा मुपधायाथदक्षिणं ॥ १८ ॥ रावणोमयमाहूय गृहह
र्म्याणिपूर्ववत् ॥ कारयामासचित्राणि सभांप्रापसभापतिः ॥ १९ ॥ तादृशंहनुमद्वीर्यं वीक्ष्यरा
क्षसपुंगवाः ॥ सभायांमंत्रिणांमध्ये चिंतातांतोब्रवीदिदं ॥ २० ॥ दृष्टंहितस्यवीरस्य कपेःपौरु
षमद्भुतं ॥ किंवर्णयामोरामस्य यस्यायंकिंकरःकिल ॥ २१ ॥ शोषयंस्तंभयन्वापि सिंधुंसीताप
तिस्तरेत् ॥ लंकायाःसंकटंकुर्या त्तत्रनीतिर्विधीयतां ॥ २२ ॥ ॥ ॥ ॥ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २३ ॥ २४ ॥ बालिशैःबालबुद्धिसमबुद्धिभिः किंनो प्रोच्यते रामायानंतवीर्यायेत्यादिकं नोच्यतेसर्वं प्रोच्यतएवेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥
जीवता जीवनवता यातंगतं भूयसा बलिष्ठेन ॥ २८ ॥ २९ ॥ गोप्यंरहस्यं ॥ ३० ॥ मंजुलामनोहरा पुंजकस्थला तन्नामिकाकाचनस्त्री ॥ ३१ ॥



इत्युक्तोरावणेनोच्चै प्रांजलिःसविभीषणः ॥ रामायानंतवीर्याय वैदेहीदीयतामिति ॥ २३ ॥ ब्र
ह्मरुद्रादयोदेवायस्य रामस्यकिंकराः ॥ करामलकवद्विश्वं वैदेहीदीयतामिति ॥ २४ ॥ कईश्वरः
कोविजयः मांविनाजगदीश्वरं ॥ बालिशैःप्रोच्यतेकिंनो इत्युच्चैरावणोब्रवीत् ॥ २५ ॥ तंप्रहस्त
प्रभृतयः सुपार्श्वाद्यास्तथापरे ॥ उच्चैरास्फोट्यगर्जंतो राजानमिदमब्रुवन् ॥ २६ ॥ लोकपाला
न्सलोकांस्त्व मिंद्रादीन्जितवाननु ॥ रामःकिलभयस्थानं मानवस्तापसस्तव ॥ २७ ॥ वानराः
किंनराहारा नस्मान्कुर्युःफलाशिनः ॥ कथंचिज्जीवतायातं कपिनाथेनभूयसा ॥ २८ ॥ त्वद्भ्रूवि
भ्रममात्रेण विभ्रांतंभुवनत्रयं ॥ कथंतापसपत्नींत्वं बलाद्राजन्नभोक्ष्यसे ॥ २९ ॥ मंत्रिणांवाक्य
माकर्ण्य सस्मितोरावणोब्रवीत् ॥ सत्यमेवमिदंकिंतु गोप्यांकिंचिद्वदामिवः ॥ ३० ॥ मयाबले-
नोपभुक्ता मंजुलापुंजकस्थला ॥ पितामहोलोकहितं तदाशापंहिमेददौ ॥ ३१ ॥ बलाच्चेद्भोक्ष्य
सेकांचि च्छिरःशीर्येततेतदा ॥ शापोयंननुसीतायाः पातिव्रत्यैकपालकः ॥ ३२ ॥ मद्बाहुवनानि
र्यातान् पत्रिणःप्राणहारिणः ॥ ननूनंवेत्तिरामोसौ तेनमांप्रतिगर्जति ॥ ३३ ॥ ॥ ॥

शीर्येत भिन्नं भवेत् ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३४ ॥ विकत्थनं आभासवचनं ॥ ३५ ॥ ३६ ॥ ३७ ॥ सिध्युपायगुणांगानि सिद्धयश्चउपायाः सामाद्याः गुणाः मंत्रिगुणाः अंगानि मंत्रांगानि राजनीतिज्ञत्वादीनितानि शक्त्युदयान् आत्मशक्तयः एवंविधाः परशक्तयः इदानीमेवं विधाइति शक्तयः । उदयाः कलहेनात्मनोभिवृध्दयः प॰

कुंभकर्णेंद्रजित्पूर्वे ष्वेकैकोलंरिपोर्वधे ॥ नमेदोर्दंडकंडूर्तिं विधिर्नूनंविनाशयेत् ॥ ३४ ॥ इत्थंवि
कत्थनंश्रुत्वा शुद्धबुद्धिर्विभीषणः ॥ प्राहस्मप्रहसन्वाक्य मुदारंहितमछलं ॥ ३५ ॥ अतार्किका
नशास्त्रज्ञा नवृद्धोपासकान्खलान् ॥ मुखरान्केवलंमूर्खान् वर्जयेन्मंत्रमंटपे ॥ ३६ ॥ विनीता
न्नीतिसंपन्ना नधर्माधर्मचक्षणान् ॥ पूर्वापराज्ञान्पुरुषान् मंत्रिणःप्रतिमंत्रयेत् ॥ ३७ ॥ सिध्युपा
यगुणांगानि नयेशक्त्युदयान्विदुः ॥ नतैर्मंत्रविधिंकुर्या त्षंढैरिवरतिंबुधः ॥ ३८ ॥ मंत्रिदोषाअ
शेषाश्च राजन्त्वन्मंत्रिषुस्थिताः ॥ गुणंनैकंचपश्यामि मन्येतेभयमागतं ॥ ३९ ॥ पुलस्त्यस्या
न्वयेजात स्त्वंश्रुतिस्मृतिपारगः ॥ परदारपरामर्शी नकुर्यालोकनिंदितं ॥ ४० ॥ यदित्रैलोक्यजैत्रंत्व
मात्मानंमन्यसेप्रभो ॥ कुसुमास्त्रमिमंदेवं जयमृत्युंतवागतं ॥ ४१ ॥ शिरीषमालामृदुलां यांत्वं
कामयसेसतीं ॥ व्यालींकरालींतांविध्धि सुप्तांकेनापिहेतुना ॥ ४२ ॥ अलंविरोधोरामेण
प्रणतेषुकृपालुना ॥ राजन्बध्धांजलिस्तुभ्यं देवीदेवायदीयतां ॥ ४३ ॥ बांधवाःसंत्यजेयुस्त्वा
मधर्मेणविनश्वरं ॥ तस्मादधर्मंनिर्धूय देवीदेवायदीयतां ॥ ४४ ॥ ॥ ॥ ॥

स्याभिवृध्यभावाइतितान् ॥ ३८ ॥ ३९ ॥ ४० ॥ त्रैलोक्यजैत्रं त्रैलोक्यजयशीलं ॥ ४१ ॥ व्यालीं सर्पवधूं करालींक्रूरां ॥ ४२ ॥ ४३ ॥ विन
श्वरं विनाशशीलं ॥ ४४ ॥

॥ ४५ ॥ गावः बाणाख्य रश्मयः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ मृषितं क्षांतं त्वयिक्षमाकृतेत्यर्थः ॥ ५१ ॥ ५२ ॥ संरब्धानक्रदस्यव धा येमुद्युक्तान् ॥ ५३ ॥ मन्यध्वंजानत ॥ ५४ ॥ अशरणः अविद्यमानरक्षकोहं भव भयवनवान्हिभर्जितानां संसार भयाख्यवनवन्हिना दावाग्निना

रामप्रसादप्रसरः सर्वासांसंपदांपदं ॥ तस्मैलोकैकनाथाय देवीदेवायदीयतां ॥ ४५ ॥ यावन्नरा
मसूर्यस्य गावःसप्तघ्नबंधवः ॥ हन्यूरक्षस्तमंताव द्देवीदेवायदीयतां ॥ ४६ ॥ नभयान्नचकार्प
ण्या न्नमोहान्नचडंभतः ॥ मयेदमुदितंराजं स्तवतथ्यंश्रुणोषिचेत् ॥ ४७ ॥ विभीषणेनैवमुक्ते
क्रुद्धःप्रोवाचशक्रजित् ॥ अस्मान्महेंद्रजयिनो मानवःकिंजयेदिति ॥ ४८ ॥ बालोयंबालिशोराज
न्वध्यस्तेकार्यदूषकः ॥ व्रजामशरणंराम मित्युवाचाविभीषणः ॥ ४९ ॥ मित्रवेषमामित्रंत्वां नि
त्यंवेद्मिविभीषण ॥ अन्यश्चेत्वादृशोहन्या मित्युवाचाथरावणः ॥ ५० ॥ मृषितंपरुषंवाक्यं ज्येष्ठत्वा
त्तवरावण ॥ स्वस्तितेस्तुगमिष्यामी त्युक्त्वोत्तस्थौविभीषणः ॥ ५१ ॥ चतुर्भिःसचिवैःसार्धं चतुरैःस
गदाधरः ॥ मुहुर्तेनांबरचरो रामपार्श्वमुपाययौ ॥ ५२ ॥ प्रकाशमानआकाशे संरब्धान्प्रेक्ष्यवानरान् ॥
मेघगंभीरनिर्घोषो बभाषेसविभीषणः ॥ ५३ ॥ रावणस्यानुजंप्राप्तं रावणेनावमानितं ॥ रामभक्तइति
त्यक्तंमांमन्यध्वंहरीश्वराः ॥ ५४ ॥ भवभयवनवन्हिभर्जितानां निरुपधिभक्तिरसामृताब्धिभाजां ॥ श
रणमशरणोव्रजामिरामं शरणमहंकरुणाकरंमुकुंदं ॥ ५५ ॥ इति श्रीसं० रा० युद्धकांडे रा० प्र० स० १

भर्जितानांदग्धानां निरुपधिभक्तिरसामृताब्धिभाजां निरुपधिः निर्व्याजः यः भक्तिरसनामकोमृताब्धिः अमृतसमुद्रः तत्साहितानांपुरुषाणां शरणं रक्षणकर्तारं करुणाकरंमुकुंदं रामंशरणंव्रजामिगच्छामीत्यन्वयः ॥ ५५ ॥ इति युद्धकांड टीकायां प्रथमःसर्गः ॥ १ ॥ ॥ ॥ ॥

॥ श्रीः ॥ पौलस्त्ये पुलस्त्य पौत्रे विभीषणे अश्रद्दधानः अविश्वसन् ॥ १ ॥ २ ॥ स्वांत्वांगौ ॥ ३ ॥ लेभृत्याः वानराः ॥ ४ ॥ स्नेहमिलेशत्रौ
सफलाः अयोविशेषसहिताः ॥ ५ ॥ ६ ॥ ७ ॥ आमयोरोगः रोगव्याधिगदामयइत्यमरः ॥ ८ ॥ ९ ॥ हेयभागात् परित्याज्यभागात् । अपका

श्रीः॥ इतिब्रुवाणेपौलस्त्ये सूर्यसूनुरमर्षितः॥ अश्रद्दधानस्तद्वाक्यं प्राप्यराममभाषत॥ १ ॥रावण
स्यानुजोनाथ शरणंत्वांकिलागतः ॥ मायिनांरक्षसामेनां मायांमन्येसवध्यतां ॥ २ ॥ कपिराज
वचःश्रुत्वा कपीनाभाष्यराघवः ॥ ब्रुवंतुसचिवाःसर्वे नीतिंस्वामित्यभाषत ॥ ३ ॥ किमस्त्यवि
दितंदेव त्रैलोक्येसचराचरे ॥ वक्ष्यामोथनियोगात्त इत्युक्त्वातेबभाषिरे ॥ ४ ॥ विपक्षवर्गनिर्मु
क्ताः सस्नेहाःसफलाअपि ॥ शराइवनिकृंतेयु रितितत्रांगदोब्रवीत् ॥ ५ ॥ स्नेहवांश्चापरिचितः
परीक्ष्योनाशुगृह्यतां ॥ गृहीतोविषवद्धन्या दितिलेशरभोब्रवीत् ॥ ६ ॥ देशकालस्वजातीनां दे
हाछंक्योहिराक्षसः ॥ मन्येपरीक्ष्यएवेति जांबवान्ध्यक्कमभ्यधात् ॥ ७ ॥ आकारैरिंगितैर्वाक्यैः
सोश्रद्धेयःपरीक्ष्यतां ॥ औषधैरामयोयद्व दितिमैंदोभ्यभाषत ॥ ८ ॥ नीलतारादिभिर्नीत्या निं
द्यमानेविभीषणे ॥ प्रतिभाजृंभितंवाक्यं हनुमान्राममभ्यधात् ॥ ९ ॥ हेयभागाद्गृण्हंति सा
रंसारविदोजनाः॥ सानुरागंमवित्रस्तं मणिंफणिकुलादिव ॥ १० ॥ ॥ ॥ ॥

रादि भागादित्यर्थः । गृण्हंति आददते सानुरागं शोभादिगुणोपेतं अवित्रस्तं भासाक्यदोषरहितं भासोनामममणेः कश्चनदोषविशेषः ॥ १० ॥

पौष्पंमधुपुष्पसंबंधिरसं ॥ मधुमद्येपुष्परसइत्यमरः ॥ तत्रउक्तेर्थेउदाहरणंदृष्टांतइत्यन्वयः ॥ ११ ॥ सारेणस्वमनसोनिर्मलत्वेन ॥ १२ ॥ प्रकृतिंपूर्वस्वभा
वं कमलाकरस्तटाकः तत्रपरीक्षानामावगाह्यात्यंत विलोडनं ॥ १३ ॥ अविनीतिमतां विशिष्ट नीतिपर्यायरहितानां ॥ १४ ॥ सर्वलोकशरण्येन सर्व

अपरीक्ष्यापरिचितं सारंगृण्हातिसारवित् ॥ तत्रोदाहरणंगृण्हन् पौष्पंमधुकरोमधु ॥ ११ देश
कालादिदुष्टोपि सारःसारेणशुध्यति ॥ नानामलेनमलिनं शुद्धंहेमेववन्हिना ॥ १२ ॥ अतिमा
त्रपरीक्षाभिः प्रसन्नःकलुषीभवेत् ॥ प्रकृतिंचत्यजेद्यद्व द्विमलःकमलाकरः ॥ १३ ॥ अविनीतिम
तांनीतिं नाहंमानदमानये ॥ सचिवानाममीषांते ममतावन्मतंश्रुणु ॥ १४ ॥ ऋजुःपरपरित्य
क्तो धार्मिकःशरणागतः ॥ सर्वलोकशरण्येन त्वयाग्राह्योविभीषणः ॥ १५ ॥ वीर्यौदार्यंतवज्ञात्वा
राक्षसानांचसंक्षयं ॥ साम्राज्यंभोक्तुमाप्तोयं पादोपांतंतवप्रभो ॥ १६ ॥ भ्रातृव्यंभ्रातरंहत्वारा
ज्यमस्मैप्रदीयतां ॥ अनुरक्तायदासाय सुग्रीवाययथापुरा ॥ १७ ॥ इतितन्मारुतेर्वाक्यं लाल
यन्नब्रवीत्प्रभुः ॥ मन्मतप्रतिबिंबंत न्मतंसाधुहनूमतः ॥ १८ ॥ अपरोक्षःपरोक्षंवा शरणंमामु
पागतं ॥ शत्रुंमित्रमथान्यंवा पालयेयेतिमेव्रतं ॥ १९ ॥ नमेभयंराक्षसतो यद्ययंछद्मसौहृदः ॥
मदंगुलिंचालयितुं नालंसर्वेसुरासुराः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥

लोकशरणप्रदेन ॥ १५ ॥ १६ ॥ भ्रातृव्यंशत्रुभूतं ॥ १७ ॥ मन्मतप्रतिबिंबं ममाभिप्रायसदृशं ॥ १८ ॥ अन्यंउदासीनं पालयेयपालितंकुर्यां व्रतं
स्वभावः ॥ १९ ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अवगछामि सम्यक्जानामि आव्हयन् आव्हापयामास वानरैः करणैः स्वयमेवाव्हयदितिवा ॥ २१ ॥ नगेकस्मिंश्चिद्वृक्षे पर्वतइतिवा ॥ २२ ॥
प्राज्यंबहुत्वं ॥ २३ ॥ २४ ॥ आल्हतेन आनीतेन ॥ २५ ॥ २६ ॥ चारः गूढपुरुषः ॥ २७ ॥ शुकं शुकनामकं राक्षसं ॥ २८ ॥ विहंगमः पक्षी वि

अवगछामिचस्वछं ममभक्तंविभीषणं ॥ इत्युक्त्वावानरैर्न्न माव्हयद्भक्तवत्सलः ॥ २१ ॥ आयु-
धानिनगेन्यस्य शांतंरूपांतरंगतः ॥ननामरामपादाब्जे सहभृत्यैर्विभीषणः ॥ २२ ॥ रावणंसगणं
हत्वा देवविप्रापराधिनं ॥ प्राज्यंराक्षसराज्यंते दास्यामीत्यवदत्प्रभुः ॥ २३ ॥ दास्यंतेदुर्लभंप्रा-
प्तं कैवल्यस्यैवकारणं ॥ योत्स्यामिराक्षसैःसार्धं मित्युवाचविभीषणः ॥ २४ ॥ ब्रह्मजेनाल्हतेनाथ
रामोवारिधिवारिणा ॥ लंकाधिपतिरित्युच्चै रभ्यषिंचद्विभीषणं ॥ २५ ॥ कपिराजेनसंपृष्टो निज-
गादविभीषणः ॥ समुद्रतरणोपायं सेतुबंधंमहामतिः ॥ २६ ॥ दृष्ट्वाकपींद्रसैन्यंत छार्दूलोनाम-
राक्षसः ॥ रावणस्यचरोगत्वा रावणायन्यवेदयत् ॥ २७ ॥ ध्यात्वामुहूर्तंनिश्वस्य संभ्रांतःमद-
शाननः ॥ शुकंदूतंकपींद्राय प्रेषयामाससत्वरः ॥ २८ ॥ शुकोविहंगमोभूत्वा निस्तीर्यलवणार्ण-
वं ॥ स्थितोवियतिसुग्रीवं रावणस्यवचोब्रवीत् ॥ २९ ॥ नरेंद्रस्याहरंभार्यां वानरेंद्रकृतागसः ॥
भवान्मेभ्रातृदेशीयो विरोधंकुरुतेकुतः ॥ ३० ॥ सुरासुरैरप्रधृष्या लंकावानरदुर्गमा ॥ तस्मात्ते
विग्रहोमाभू त्किष्किंधांकुशलीव्रज ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥

यति आकाशे ॥२९॥आहरं अपल्हतवानभवं कृतागसः शूर्पणखी नासाछेदादिकं खरादि वधादिकंचापराधं कृतवतः । भ्रातृदेशीयः भ्रातृसमः ॥३०॥३१॥

॥ ३२ ॥ ३३ ॥ माघानिनहन्यतां दूतंमन्यः दूतोहंदूतोहमिति भाषमाणः ॥ ३४ ॥ मित्रंइष्टः अमित्रः शत्रुः ॥ ३५ ॥ अनभियाताय अभ्यागमन मकृत्वास्थिताय ॥ ३६ ॥ क्षमिणंक्षमांकृत्वास्थितं क्षामंअशक्तं ॥ ३७ ॥ ३८ ॥ आलीढः संस्पृष्टः सार्पिः कलशदेशीयः घृतघटसमानः नातप्यतपुरा

इतिब्रुवाणंतंदृष्ट्वा कपींद्राअंगदादयः ॥ खमुत्पत्यनिपात्याधः पक्षंतस्योद्मूलयन् ॥ ३२ ॥ लौ
ड्यमानोधरापृष्ठे ताड्यमानश्चवानरैः ॥ हारामराजधर्मज्ञ दूतंपाहीतिसोरुदत् ॥ ३३ ॥ नदूतं
श्चोरएवायं चारइत्यंगदोब्रवीत् ॥ माघानिदूतंमन्योसा वित्यूचेसस्मितंप्रभुः ॥ ३४ ॥ नमेमित्र
ममित्रोयं रामामित्रोदशाननः ॥ गच्छेद्यमपुरीमित्थं सुग्रीवःशुकमब्रवीत् ॥ ३५ ॥ प्रतीक्षमाणो
भगवान् त्रिरात्रंचक्षमापरः ॥ चुक्रोधानभियाताय वीर्याब्धिर्लवणाब्धये ॥ ३६ ॥ मन्येनेक्षामि
णंक्षामं नीचोदंड्येनतृप्यति ॥ इत्युक्त्वादत्तभगवान् बाणंबाणासनंचसः ॥ ३७ ॥ आकर्षतोरा
घवस्य बाहुनाबाणमुल्बणं ॥ निसर्गरक्तोनेत्रांतो रक्तत्वमभजत्पुनः ॥ ३८ ॥ रामापांगानलज्वा
ला जालालीढोमहोदधिः ॥ सर्पिःकलशदेशीयो भृशंतातप्यतपुरा ॥ ३९ ॥ शुष्यत्यंभोनिधौ
मंक्षु क्षुभ्यत्यस्मिंन्जगत्रये ॥ प्रसीदलोकनाथेति देवाःसमुनयोब्रुवन् ॥ ४० ॥ कोपोविस्मृ
विपदे प्रसादःसंपदेतव ॥ क्षमस्वार्येतिधनुषि व्याललंबेसलक्ष्मणः ॥ ४१ ॥ संभ्राम्यन्नक्रचक्रा
दिः संभ्राम्यन्नंबुधिःस्वयं ॥ अर्हणांशिरसाबिभ्रद्रूपवान्प्रत्यदृश्यत ॥ ४२ ॥ ॥ ॥

असंतंसंतप्तोभूत् ॥ ३९ ॥ शुष्यतिशोषंप्राप्नुवतिसति मंक्षुक्षिप्रं क्षुभ्यतिक्षोभयुक्तेसति ॥ ४० ॥ व्याललंबेआश्रित्य अवलंबंगृहीत्वानिरुद्धः ॥ ४१ ॥ संभ्राम्यन्नक्रचक्रादिः संपरिवर्तमानग्राहसमूहादि प्राणिराशियुक्तः संभ्राम्यन्संभ्रमयुक्तः अर्हणंउपायनं ॥ ४२ ॥ ॥ ॥ ॥ ॥

॥ ४३ ॥ नवेदनजानामि अतिसंहारिष्यसि ॥ ४४ ॥ हेरामतेतवयशः समुद्रसेतुःकीर्तिनामकममद्रव्यमेतारिवाश्रितः । यथोक्तंभागवते । बध्नांहिसेतु
मिहतेयशसोवितत्यैइत्यादि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ दुकूलाख्यंदुकुलनामकं ममकुक्षौमध्यदेशे मरुदेशउपरप्रदेशे संस्थितः असुराः ॥ ४९ ॥

वैडूर्यमणिसंकाशो नानामणिविभूषितः ॥ गंगादिभिर्वृतोद्वारे रामंनत्वाभ्यभाषत ॥ ४३ ॥ नवे
दाहंजडमति स्त्वांविश्वाधीश्वराधुना ॥ त्रिगुणैस्त्रिजगंतित्वं सृजस्यत्सिचपास्यसि ॥ ४४ ॥ य
शःसमुद्रहेतुस्ते मयिसेतुर्विधीयतां ॥ तेनरावणमासाद्य सूदयाऽऽनयजानकीं ॥ ४५ ॥ उक्तोहं
मुनिनापूर्वं नलस्यकपिकर्मतः ॥ पीतेनमांकुंभजेन भविष्यत्कार्यवेदिना ॥ ४६ ॥ नलोविधेपि
तंसर्वं नगलेरितिशोभन ॥ तेनकार्यमिदंसेतु बंधनंभवदाज्ञया ॥ ४७ ॥ अगस्त्यस्यवराद्देव न
लोमत्सेतुबंधकः ॥ भवेदागोममस्वामिन् क्षम्यतांभक्तवत्सल ॥ ४८ ॥ ममकुक्षौदुकूलाख्ये म-
रुदेशेमहासुरान् ॥ निषूदयेदयंदेव शरोमोघेतरस्तव ॥ ४९ ॥ इत्यर्थितःसागरेण सगरान्वय-
शेखरः ॥ आभीरजन्मनोदैत्या नवधीत्तेनपत्रिणा ॥ ५० ॥ सीताकांतप्रसादेन मरुकांतारनाम
कं ॥ वनंतदभवत्पुण्यं फलमूलांबुपुष्पकं ॥ ५१ ॥ विश्वकर्मसुतंवीरं विश्वकर्मविशारदं ॥ आदि
देशनलंदेवः सेतुंकर्तुंमहार्णवे ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सगरान्वयशेखरः सगरराजवंशोत्पन्नानां राज्ञांचूडामणिभूतः रामः आभीरजन्मनः आभीरेभ्योमहाशूद्रेभ्योजातानित्यर्थः । आभीरांतुमहाशूद्रा
रः । आभीरजन्मनामकानितिवा पत्रिणाबाणेन ॥ ५० ॥ ५१ ॥ विश्वकर्मविशारदं सर्वकर्मकुशलं ॥ ५२ ॥ ॥ ॥ ॥ ॥

तृणस्तंबान्तृणगुच्छान् स्तंबोगुच्छस्तृणादिनइत्यमरः । कौकेपघ्नानांआहारार्थं शतसहस्रसंख्यां यस्यतृणंसपृष्ठवंधस्यतसतस्तंबशब्दनोच्यतइत्यर्थः ॥ ५३ ॥ मिपतेस्ममानंचक्रुः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ नगान्पर्वतान्वृक्षांश्च अंतरंअवकाशं ॥ ६१ ॥ ६२ ॥ ६३ ॥ शतयोजन

शैलेंद्रान्गंडशैलांश्च तृणस्तंबांश्चपादपान् ॥ आजन्हुःकपियूथानि शतशोथसहस्रशः ॥ ५३ ॥
केचित्सूत्राणिजगृहु र्दंडःस्ममिमतेपरे ॥ आपूरयन्परेवृक्षै र्वानरानलशासनात् ॥ ५४ ॥ कैलास
मंगदोगत्वा गृहीत्वातत्रशूलिना ॥ मानितोरामदासोस्मी त्युपपर्वतमाहरत् ॥ ५५ ॥ हिमवंतं
मैंदएत्य गृहीत्वातत्रतेनसः ॥ मानितोरामदासोस्मी त्युपपर्वतमाहरत् ॥ ५६ ॥ मेरुमुन्मूल्य
न्देवो हनूमान्ब्रह्मणाततः ॥ संभावितःस्ववीर्येण त्युपपर्वतमाहरत् ॥ ५७ ॥ माहेंद्रंजांबवाने
त्यगृहीत्वातत्रदेवतैः ॥ मानितोरामदासोस्मी त्युपपर्वतमाहरत् ॥ ५८ ॥सर्वैःस्वस्थानसंस्थैश्च
मानिताःसर्ववानराः ॥ देवर्षिभिःपरान्शैलान् हरन्नमितविक्रमाः ॥ ५९ ॥ देवोपदेवादेवीभिः
साकमाकाशमागमन् ॥ इदमत्यद्भुतंद्रष्टुं रामदासविचेष्टितं ॥ ६० ॥ नगानादायपततां नगार्थं
पततंद्रुतं ॥ बध्नतांचांतरेतेषां वेगिनानंव्यदृश्यत ॥ ६१ ॥ क्षुभ्यतःकपिसैन्यस्य क्षुभ्यतोवा-
रिधेरपि ॥ उपमानपदंनासी द्विनान्योन्यंजगत्त्रये ॥ ६२ ॥ परस्परंस्पर्धयेव प्रवृत्तौसेतुवारि-
धी ॥ मध्यस्थोभगवान्नूनं तयोर्वैरमवारयत् ॥ ६३ ॥ दशयोजनविस्तीर्णं शतयोजनमायतं ॥
सेतुंपंचाहतश्चक्रे नलिनाक्षप्रियोनलः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥

मायतं दशगुणायतं पंचाहतः पंचभिरहोभिः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दयितहनुमदंससक्त हस्तः दयितःप्रियोहनुमान्तस्य अंससक्तः हस्तोयस्यसतथोक्तः ॥ ६८ ॥
॥ ६५ ॥ ६६ ॥ सुवेलाद्रिंसुवेलनामकंपर्वतं ॥ ६७ ॥ इति युद्धकांडटीकायां द्वितीयःसर्गः ॥ २ ॥ ॥ ॥
अशेषसुरारिनाशं समुद्रांतःस्थिताशेषासुरविनाशं । तत्रसुवेलपर्वते ॥ ६९ ॥

श्रीमतासेतुनातेन समेनविमलेनच ॥ कपिकोटिसहस्त्राणि सहसाब्धिमतारयन् ॥ ६५ ॥ विभी
षणोगदापाणि रग्रतःसचिवैर्ययौ ॥ राघवौचससुग्रीवौ वायुजांगदवाहनौ ॥ ६६ ॥ कोसलेंद्रः
सुवेलाद्रिं समारुह्यसलक्ष्मणः ॥ सेनायाविश्रमंचक्रे सुग्रीवेणाभिनंदितः ॥ ६७ ॥ दशमुखन-
गरींविलोक्यलंकां शरमथपाणिगतंनिरीक्षमाणः ॥ दयितहनुमदंससक्तहस्तो गिरिशिखरेविर
राजवीरराजः ॥ ६८ ॥ अंभोधिशोषणमशेषसुरारिनाशं सेतोश्चबंधनमवेक्ष्यपरस्यवीर्यं ॥ देवो
पदेवमुनयोमुदिताउपेत्य रामस्यचक्रुरथतस्यमहाभिषेकं ॥ ६९ ॥ ॥ इति श्रीसंग्रहरामायणे
युध्दकांड रामांके द्वितीयःसर्गः ॥ २ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥
श्रीः ॥ विधायव्यूहविस्तारं रामःसुग्रीवसंयुतः ॥ शुकमेवमुमोचाथ तंदूतंरावणांतिकं ॥ १ ॥ क
पिभिर्मुष्टिपिष्टांगो लुप्तपक्षस्तथाशुकः ॥ जीवन्कथंचिद्वृत्तांतं रावणायन्यवेदयत् ॥ २ ॥ विक
त्थनपरःपापो रावणःशुकसारणौ ॥ रामसेनांगणयितुं चारौप्रेषितवान्पुनः ॥ ३ ॥ ॥

॥ श्रीः मुमोचमोचयामास ॥ १ ॥ २ ॥ शुकसारणौ तन्नामकौचारौकपिरूप धरौसंतौ ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अयतेतांप्रयत्नंचक्रतुः ॥ ४ ॥ शयितान् विश्रमंकृतवतः आसितान् उपविष्टान । यातान् इतस्ततः चरतः पैक्षेतांदृष्टवंतौ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥
संख्येयंसंख्यातव्यं ॥ १० ॥ ११ ॥ १२ ॥ बाणबर्हिःपरिस्तीर्णेबाणाख्यदर्भैः परिस्तृते वानरर्त्विक्समीडिते वानराख्यैर्ऋत्विग्भिः संस्तुते ॥ १३ ॥

कपिरूपधरौचारौ चरंतौराक्षसौचतौ ॥ इतस्ततोगणयितु मयतेतांप्रभोश्चमूं ॥ ४ ॥ पारेब्धि-
न्परपारेच सेतावद्रौवनेजले ॥ शयितानासितान्याता नैक्षतांतौकपिव्रजान् ॥ ५ ॥ ज्ञात्वाविभी
षणःप्रोचे तौचोरौछलवानरौ ॥ सुवृत्ताविवदुर्वृत्तौ प्रोत्पतंतावितस्ततः ॥ ६ ॥ महाबलैर्हन्य
मानौ कपिभिःक्रूरविक्रमैः ॥ क्षीणप्राणावथाक्रंदं चक्रातेतौजिजीविषू ॥ ७ ॥ रावणस्यचरावा
वां त्वत्सेनायाःपरीक्षकौ ॥ बद्धोंजलिरयंराम क्षमस्वजयधार्मिक ॥ ८ ॥ इत्युक्तऊचेभगवा न्प्र
हसन्शुकसारणौ ॥ माभयंरामभृत्येभ्यो युवयोर्न्यस्तशस्त्रयोः ॥ ९ ॥ संख्यातेचेदिदंसैन्यं ग-
म्यतांस्वामिनोंतिकं ॥ नोचेत्पुनश्चसंख्येयं सहायोस्तुविभीषणः ॥ १० ॥ अनंगबाणक्षुभितं हृ
दयंरावणस्यतत् ॥ अंगवंतोवयंबाणै र्भेत्स्यामइतिचोच्यतां ॥ ११ ॥ एवंरामेणगदिते सुग्रीवः
कुपितोब्रवीत् ॥ इदंचवचनंवाच्यं भवद्भ्यांस्वामिसंनिधौ ॥ १२ ॥ बाणबर्हिःपरिस्तीर्णे वानरर्त्वि
क्समीडिते ॥ रावणाख्यपशोर्होमो रामाग्नौसमुपस्थितः ॥ १३ ॥ इत्युक्ताराक्षसावतौ निर्मुक्तौ
चभयातुरौ ॥ प्रासादशिखरारूढं प्राप्यरावणमूचतुः ॥ १४ ॥ राघवोपिसुवेलाद्रे र्लंकाभिमुख-
माययौ ॥ सानुजोमुदितःसार्धं ऋक्षराक्षसवानरैः ॥ १५ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥ ऋक्षराक्षसवानरैरित्यत्र राक्षसाविभीषणमंत्रिणश्चत्वारः विभीषणश्चेतिपंच ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तौशुकसारणौ अवर्णयतां रावणसमीपेप्राक्तवंतौ ॥ १६ ॥ १७ ॥ १८ ॥ तल्लक्षनामांकोटीनां एकलक्षंशंकुनामकं संख्याविशेषमाहुरित्यर्थः । अपरेपि तल्लक्षमित्यादेस्तेषांलक्षमित्यर्थः । महाशंकुमित्यादिकाः सर्वेपिसंख्याविशेषा ज्ञातव्याः उत्तमाः प्राहुरित्यन्वयः ॥ १९ ॥ महावृंदसहस्रेण मित्यादि आहु

नीलांगदनलश्वेत कुमुदान्कपियूथपान् ॥ पनसंशरभंरंभं तावंवर्णयतांपृथक् ॥ १६ ॥ तारंधूम्रंजांबवंतं विनतंकत्थनंतथा ॥ केसर्याख्यंशतबलिं प्रमाथिगजपूर्वकान् ॥ १७ ॥ खर्वार्बुदाधिपत्यंच तेषांराज्यंचविक्रमं ॥ निगद्यविस्तरेणैव रावणंपुनरूचतुः ॥ १८ ॥ प्राहुर्लक्षशतंकोटिं तल्लक्षंशंकुनामकं ॥ शंकुलक्षंमहाशंकुंतल्लक्षंवृंदमुत्तमाः ॥ १९ ॥ वृंदलक्षंमहावृंदं तल्लक्षंपद्ममप्युत ॥ पद्मलक्षंमहापद्मं तल्लक्षंखर्वमभ्यधुः ॥ २० ॥ खर्वलक्षमहाखर्वं तल्लक्षंधूलिमप्युत ॥ धूलिलक्षंमहाधूलिं तल्लक्षंहिसमुद्रकं ॥ २१ ॥ समुद्रलक्षंकवयो महौघंकीर्तयंतिहि ॥ पश्यसंख्यामिमांराजन् स्वामिन्वानरमंडले ॥ २२ ॥ अवेध्यानामवध्यानां हरीणांवातरंहसां ॥ हंतकोटिसहस्रेण तेषां शंकुशतेनच ॥ २३ ॥ महावृंदसहस्रेण तथापद्मशतेनच ॥ महापद्मसहस्रेण तेषांखर्वशतेनच ॥ २४ ॥ तेषांकोटिमहौघेन समुद्रेणचसंवृतः ॥ रामोविभीषणसखः सुग्रीवोविजृंभते ॥ ॥ २५ ॥ कपिकोटिमहौघेभ्यो महौघगुणवीर्यवान् ॥ एकोहनूमान्ननंनो नाशयालंदशानन ॥ २६ ॥

रभ्यधुरित्यादिनान्वयोद्रष्टव्यः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ तेषांहरीणां ॥ २५ ॥ कपिकोटिमहौघेभ्यः ॥ २६ ॥

तेनरामानुजत्वेनवालिनोनुजत्वेनच प्रयत्यतांप्रयत्नः क्रियतां ॥ २७ ॥ अलंसमर्थः विरोधेनालमित्यलंशब्दस्योभयत्रान्वयः ॥ २८ ॥ २९ ॥ ३० ॥
मायीमायावान् तन्वींसीतामतिक्रांतिमति ॥ ३१ ॥ विद्युज्जिव्हः विद्युज्जिव्हनामकः इहसीतासमीपे ॥ ३२ ॥ अकृतार्थेअकृतवशीकरणरूपप्रयोजनेनि

रामानुजोलक्ष्मणोयं सुग्रीवोवालिनोनुजः ॥ तेनतर्क्यंतयोर्वीर्यं क्षेमायाशुप्रयत्यतां ॥ २७ ॥
रामस्त्रिलोकींसंहर्तु मेकएवकिलेश्वरः ॥ अलंराजन्विरोधेन दीयतामाशुमैथिली ॥ २८ ॥
श्रुत्वातयोरिदंवाक्यं दृष्ट्वारामचमूंचतां ॥ रावणोतिविषण्णोपि मानीतावाक्षिपत्क्रुधा ॥ २९ ॥
पुनश्चप्रेषितास्तेन चाराःशार्दूलपूर्वकाः ॥ वानरैःपीडितामुक्ताः प्राप्योदंतंन्यवेदयन् ॥ ३० ॥
संमंत्र्यमंत्रिभिःसार्धं मशोकवनिकांगतः ॥ मायीसरावणस्तन्वीं रामस्यापायमभ्यधात् ॥ ३१ ॥
विद्युज्जिव्होथमायावी रावणेनप्रचोदितः ॥ रामस्येदंशिरइति शिरःकिंचिदिहानयत् ॥ ३२ ॥
माययाप्यकृतार्थेथ रावणेनिर्गतेवनात् ॥ करुणंविलपंतींतां सरमोपययौसतीं ॥ ३३ ॥ रक्षणा
यानियुक्तापि राक्षसेंद्रेणराक्षसी ॥ मायासीतांभक्तियुक्ता विदितार्थेदमब्रवीत् ॥ ३४ ॥ मायामा
रक्षसांभद्रे मायायाःसतिसंकटं ॥ सबलस्तेसुवेलाद्रौ सबलःक्रीडतेपतिः ॥ ३५ ॥ चारावानर
निष्पिष्टाः श्वासमात्रावशेषिणः ॥ रामस्यतद्बलौदार्यं वंदृतोवीक्षितामया ॥ ३६ ॥ ॥

गतेसति सरमाविभीषणभार्या ॥ ३३ ॥ ३४ ॥ हेभद्रेपतिव्रतेसीते रक्षसांमायायाः सकाशात्संकटंमायायाः नभागुहि सबलः बाहुबलसंहितः सबलः
सर्वसैन्ययुक्तः ॥ ३५ ॥ वीक्षिताः दृष्टाः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शेष्यतेशयनंकारिष्यति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अनुकूपः अनुकूलः ॥ ४३ ॥ जंभारिस्तंभनः इंद्रस्यापिस्तंभनकर्ता ॥ ४४ ॥

रावणोबोध्यमानोपि मात्रावृद्धैश्चमंत्रिभिः ॥ नवांमुंचतिरंभोरू हतोशोकेनशोच्यतां ॥ ३७ ॥
एवमुक्तासरमया सारामामोदमाददे ॥ शुश्रावरामसैन्यानां नादंवाद्यस्वनोर्जितं ॥ ३८ ॥ मा-
तामहोमाल्यवांस्तं वृध्दोरावणमब्रवीत् ॥ श्रुणुवत्सहितंवाक्यं विदुषाभाष्यतेमया ॥ ३९ ॥ ध
र्मपक्षस्थितादेवा वयंचाधर्मपक्षिणः ॥ पराजयोत्यधर्मस्य धर्मोविजयतेधुना ॥ ४० ॥ पालितो
धर्मपक्षोयं विष्णुनाप्रभविष्णुना ॥ मन्येविष्णुमिमंजातं रामंतेजोभिरीदृशैः ॥ ४१ ॥ संधीय
तांराघवेण दीयतांतातमैथिली ॥ इतितेनोदितंश्रुत्वा क्रुध्दःप्रोवाचरावणः ॥ ४२ ॥ नानुकूल-
इतित्यक्तः पित्रादीनोवनंगतः ॥ जेताकिंमानवोरामः क्षुद्रैःशाखामृगैर्वृतः ॥ ४३ ॥ एकएवाद्रि
पेद्रामं जंभारिस्तंभनोभुजः ॥ भुजैरेकोनविंशद्भिः कृत्यंनैवोपलक्ष्यते ॥ ४४ ॥ मंत्रिरक्षार्थं
प्रहस्तप्रतिगम्यतां ॥ संनत्यतांप्रतिद्वारं स्थीयतांबलिभिर्युधे ॥ ४५ ॥ इतिब्रुवाणमालोक्य रा
क्षसंपक्षिरूपिणः ॥ चाराविभीषणस्याथ विभीषणमुपाययुः ॥ ४६ ॥ अनलानिलसंपाति हर्मा
ख्यैःसचिवैर्निजैः ॥ उदितंपुरिवृत्तांतं राममूचेविभीषणः ॥ ४७ ॥ भगवांश्चप्रतिद्वारं यथास्थं
कल्प्यवानरान् ॥ श्वःप्रभातेरणमिति सुवेलमधिरूढवान् ॥ ४८ ॥ ॥ ॥ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ अधिरूढवान आरुरोह ॥ ४८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

राघवाविति द्वितीयाद्विवचनं उपासतउपास्तिचक्रुः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ मेदस्वामिनइत्यन्वयः ॥ ५३ ॥ मत्तमातंगलीलं मत्तमातंगस्य
लीलायुक्तं मधुकरपरिघुष्टां भ्रमरैः कुतूहलनझंकृतां आकुलीकृतामितिवा वैजयंतीमालां चोदयामास युद्धार्थंप्रापयामास ॥ ५४ ॥ इतितृतीयःसर्गः ३
॥ श्रीः ॥ व्यभजत् विभज्यदत्तवानित्यर्थः । महायुयुत्सोत्सवदर्पवद्भ्यः योत्सुमिच्छायुयुत्सा तस्याः यामहानुत्सवः तत्रदर्पवद्भ्यः अंतोपदर्पवद्भ्यः-

ससुग्रीवौराघवौतौ हरयःसविभीषणाः ॥ उपासतसुवेलाग्रे सूर्यश्चास्तंगतस्तदा ॥ ४९ ॥ सुग्री-
वःसहितःप्रात दैवेनानंदमूर्तिना ॥ तुंगेशृंगेत्रिकूटस्य तांलंकामथदृष्टवान् ॥ ५० ॥ प्राकारगृ-
हहर्म्याढ्यां सर्वसंपत्समन्वितां ॥ तांदृष्ट्वाविस्मयंभेजे पुरंदरपुरीमिव ॥ ५१ ॥ तत्रप्रासादशिखरे
चारुचामरवीजितं ॥ रावणंप्रेक्षतकपिः सर्वभूषणभूषितं ॥ ५२ ॥ स्वामिनोद्धारचोरोमे सोय-
मास्तेखलःसुखं ॥ इतिसंरंभसंभिन्न श्चुक्षोभरविनंदनः ॥ ५३ ॥ मरकतमणिवर्णंमत्तमातंग-
लीलं मधुकरपरिघुष्टांवैजयंतींवहंतं ॥ हरिपरिषदिरामंसस्मितंवीक्ष्यमाणं हरिपतिरथनत्वाचो-
दयामाससेनां ॥ ५४ ॥ इति श्रीसंग्रहरामायणे युद्धकांडे रामांके पं० तृतीयःसर्गः ॥ ३ ॥
श्री ॥ रामानुजोरामनियोगतोथ मधूनिमूलानिफलानिचाशु ॥ यथेष्टमत्रव्यभजत्कपिभ्यो म-
हायुयुत्सोत्सवदर्पवद्भ्यः ॥ १ ॥ रामोथबाणासनबाणपाणिः सलक्ष्मणोव्यूह्यबलंसमस्तं ॥ लं-
कामलंकारवतीमवाप प्रस्फारविस्फारविनादिताशः ॥ २ ॥ तमन्वगच्छन्नरिमर्दनाय सौमित्रिसु-
ग्रीवविभीषणाश्च ॥ तेसत्यमैक्यंप्रययुस्ततोहि तेषांत्रयाणांचविभीषणत्वं ॥ ३ ॥ ॥ ॥

चतुर्थीबहुवचनमेतत् ॥ १ ॥ प्रस्फारविस्फारविनादिताशः प्रस्फारोनाम धनुष्टंकारः तस्यविस्फारेणध्वनिनाविनादिताशइत्यर्थः ॥ २ अरिमर्दनाय-
अरीणांमर्दनंकर्तुं ऐक्यंएकमत्यं एकबुद्धिमत्वमित्यर्थः । एतेनत्रयोविभीषणा जज्ञुरितिग्रंथांतरवचनस्याभिप्रायउक्तोभवति ॥ ३ ॥ ॥ ॥

राक्षसराजधानींलंकां ॥ ४ ॥ ५ ॥ सुंदरमंदिरमावसंतंददर्शेत्यन्वयः ॥ ६ ॥ ७ ॥ विवक्षतः वक्तुमिच्छतः अंगदः अपारज्ञानः ॥ ८ ॥

हरिप्रबर्हाहनुमत्पुरोगाः शिलाविशालादधतःकराग्रैः ॥ अभ्यापतन्राक्षसराजधानीं पक्षक्षया- त्प्रागिवपर्वतेंद्राः ॥ ४ ॥ सराजधर्मंभुवनैकराजो रामोविधातुंकिलवालिसूनुं ॥ विभीषणस्यानुम तेनदूतं प्रस्थापयामासदशास्यपार्श्वे ॥ ५ ॥ अथांगदोवन्हिरिवप्रदीप्तः प्राकारमुल्लंघ्यपुरंप्रवि श्य ॥ तन्मंदिरंसुंदरमावसंतं दशाननंमंत्रपरंददर्श ॥ ६ ॥ सिंहासनस्थोपरितंचदृष्ट्वा तदुच्चतः बालवरेनिषण्णं ॥ दृष्ट्वाबभाषेदशकंधरःकपे कःकस्यसूनुःकुतआगतस्त्वं ॥ ७ ॥ विवक्षतोरूक्षमु खस्यकिंचि दशाननस्यांगदआबभाषे ॥ मांपालिनःसूनुमवैहिराजन् किंसौम्यवालीभवतावबु- द्धः ॥ ८ ॥ भ्रूविभ्रमस्तंभितवारिराशेः सीतापतेर्विद्धिवचोहरंमां ॥ श्रेणीशराणांयदिदधाति दे वो वाणीमपीमांरुचिरांशृणीहि ॥ ९ ॥ गुरुद्रुहोब्राह्मणसूदनस्य अलच्छिदःसत्यकुलांगनानां ॥ देवद्विषस्तेफलतिप्रवृद्धो नूनंमहापातकपादपोयं ॥ १० ॥ अचूचुरस्त्वंमहिषींससारो वनेपरोक्षं पुरुषोत्तमस्य ॥ तन्मृष्यतेत्वंप्रतिदायदेवीं देवंशरण्यंशरणंव्रजेश्चेत् ॥ ११ ॥ नोचेत्प्रियाश्चो नुपभुंक्ष्वशीघ्रं कृत्येषुमाभूत्तवसंप्रमादः ॥ विदारणंदारुणरामबाणैः संप्राप्यशीघ्रंननुशोच्यसे त्वं ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रंदूतं इमांवाणींचविदधाति त्वंतयोर्मध्येरुचिरांप्रशस्तां शृणीहिवरय ॥ ९ ॥ १० ॥ असारः दुर्बलः परोक्षं अप्रत्यक्षतया तन्नारींमृष्यतेक्षमते ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ उन्मेषितवान् विकासितवान् प्रकाशितवानित्यर्थः। हरींद्रः अंगदः ॥ १५ ॥ तत्रवानरेषु । दोषेषु दीपेष्वित्यर्थः ॥ तत्रवायुर्दीपेष्वेवं नवकल्पेष्वविप्रहर्षणेषु ॥
॥ १६ ॥ महोदवाहैः महामेघैः ॥ १७ ॥ याम्यांदक्षिणस्यां ॥ १८ ॥ १९ ॥ प्रमाथींतदाख्यकपिवानरयूथनाथः संप्रेक्षकः अंगदरक्षकःसन वायुसुतस्य

उक्तंनिशम्येतिनिशाचरेंद्रः क्रोधारुणाक्षः सचिवानुवाच ॥ प्रगृह्यतामाशुनिगृह्यतांच शाखामृगो
दुर्वचनोयमित्थं ॥ १३ ॥ तमुग्रवेगाजगृहुर्नराशाः सतान्समादायखमुत्पपात ॥ ततेनमुक्ताभुवि
पेतुरार्ताः प्रासादभंगंविदधेंगदोथ ॥ १४ ॥ प्रासादभंगादथरावणस्य प्रसादभंगोनितरांबभूव ॥
प्रसादभंगाद्द्विषतोमुकुंदं प्रसादमुन्मेषितवान्हरींद्रः ॥ १५ ॥ दोषेषुतत्रप्रतिजृंभितेषु द्वाराणिदे
वान्यरुणत्पुरोस्य ॥ आयासनिश्वासपरंपुरंत त्पर्याकुलंमंक्षुबभूवशोच्यं ॥ १६ ॥ महाशिलाशैलन
गायुधाना महोमहौघैःकपिकुंजराणां ॥ आक्रम्यमाणानगरीस्थिरापि महोदवाहैरिवनौश्चकंपे ॥
॥ १७ ॥ समादिदेशाथदिशिप्रतीच्या मायोधनायेंद्रजितंदशास्यः ॥ प्राच्यांप्रहस्तंदिशिवज्र
दंष्ट्रं याम्यांस्वयंचागमदुत्तरस्यां ॥ १८ ॥ प्रभुःप्रतीच्यांदिशियोधनाय प्रभुंहनूमंतमथादिदेश ॥
प्राच्यांचनीलंदिशिवालिसूनुं याम्यांस्वयंचावसदुत्तरस्यां ॥ १९ ॥ नीलानुगामीविविदःसमैंद्रो
गजादयश्चांगदमन्वगच्छन् ॥ संप्रेक्षकोवायुसुतंप्रमाथी तस्थुःपरेसूर्यसुतस्यपार्श्वे ॥ २० ॥ ॥

गच्छदित्यन्वयः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

परीयुः पर्याप्तवतस्थुः ॥ २१ ॥ पश्चिमतः पृष्ठभागं ॥ २२ ॥ २३ ॥ विदधुः चक्रुः विषादं भयं ॥ २४ ॥ गजानामितिमल्लंकसंबंधः ॥ २५ ॥ परान् भंगंनिनीषंति पुरा शत्रून्पराजयं मापयितुमिच्छंतीत्यर्थः ॥ २६ ॥ अभूत् प्रकाशमानोभूत् ॥ २७ ॥ प्रतिघारुणाक्षाः कोपेनरक्तनयनाः ॥ २८ ॥ न

यूथान्वितावानरयूथनाथाः प्रत्येकमुच्चैर्बहुकोटिसंख्याः ॥ द्वारेष्ववर्ततसुषेणपूर्वा पुरीपरीयुर्हरि-
चक्रकल्पाः ॥ २१ ॥ कोट्योथषट्त्रिंशदतिप्रसिद्धा यूथाधिनाथानिजयूथयुक्ताः ॥ सुग्रीवमारात्प
रिवार्यतस्थुः काकुत्स्थयोःपश्चिमतोनिषण्णं॥ २२ ॥ प्राकारमध्यारुरुहुःकपींद्राः प्रासादमन्येथ
परेगृहाणि ॥ अन्येवकाशानवलोक्यपूर्णा नाकाशमापूरितवंतआशु ॥ २३ ॥ पुनस्त्रिकूटाद्रितटे
षुपूर्णाः सुवेलशैलंपरिपूरयंतः ॥ व्याप्तामहाब्धेश्चतटेकपींद्रा निशाचराणांविदधुर्विषादं॥ २४ ॥
केचिद्गजानांशततुल्यवीर्याः सहस्रवीर्याअपिलक्षवीर्याः ॥ समुद्रवीर्याश्चमहौघवीर्याः केचिन्महां
तोपरिमेयवीर्याः ॥ ऋक्षाश्चरूक्षाबहुकोटयोगो लांगूलकोटयश्चकटुस्वभावाः ॥ पृथक्पृथक्पर्वत
सन्निभांगा भंगंनिनीषंतिपुरापरास्ते ॥ २६ ॥ विश्वेशितुःकार्मुकबाणपाणे रेकत्रपार्श्वेरविजोररा
ज ॥ अन्यत्रचित्रांगदवान्गदावान् विभीषणःशत्रुविभीषणोभूत् ॥ २७ ॥ दंतान्नखानप्यशनि
प्रकाशा न्प्रकाशयंतःप्रतिघारुणाक्षाः ॥ तुच्छेतरंपुच्छमतोक्षिपंत स्तिर्यङ्निरीक्षंतरिपून्कपींद्राः ॥
॥ २८ ॥ यंत्राण्यकृंतन्परिखाअपूरयन् वप्राण्यभिंदंश्चवनान्यखंडयन् ॥ प्रासादमालाःसकलाअ
सादयन् युद्धोद्धताःकोसलनाथकिंकराः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

प्राणिप्राकारान् असादयन् विनाशयामासुः ॥ २९ ॥

साटोपंससंभ्रमं उदारां अर्थपुष्टिमतीं गांवाचं ॥ ३० ॥ रावण क्रोष्टुसिंहः रावणस्य जंबुकासिंहः ऋद्धैः अभिवृद्धैः ॥ ३१ ॥ इति युद्धकांड टी० अ० भ० ॥ ४ ॥



अन्योन्यतःपाणिपुटावपीडयन्न ताडयन्स्वोरुमथप्लवंगमाः ॥ साटोपमास्फोट्यगभीरनिस्वना उ-
च्चैरुदारामपिगामुदाहरन् ॥ ३० ॥ जयतिजगतिरामोरावणक्रोष्टुसिंहो जयतिननुहनुमान्रामपा
दाब्जभृंगः ॥ जयतिजगदधीशस्यानुजोलक्ष्मणोयं जयतिरवितनूजःसार्धमृद्धैश्चसैन्यैः ॥ ३१ ॥
इति श्रीसंग्रहरामायणे युद्धकांडे रामांके पंडिताचार्यकृतौ चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥
श्रीः ॥ कोपाटोपंकपींद्राणां वीर्यौदार्यंचशार्ङ्गिणः ॥ दृष्ट्वामुहूर्तंदध्यौस रावणोलोकरावणः ॥ १ ॥
धैर्यमालंब्यसंक्रुध्य उत्तिष्ठन्हेमपीठतः ॥ प्रबलंराक्षसबलं नगरान्निरयातयत् ॥ २ ॥ नानायुध
धरावीरा राक्षसारणकोविदाः ॥ प्रत्येकंप्रत्यगच्छंस्ते कपीन्कंपितपादपान् ॥ ३ ॥ रामरावणभृ-
त्यानां द्वंद्वयुद्धमभून्मिथः ॥ तीव्राणांपुण्यपापानां यथैवपुरसन्निधौ॥ ४ ॥ मुख्यप्राणसुतोमुख्यो
युयोधेंद्रजिताभृशं ॥ पराद्रवत्तद्बलज्ञो हस्तप्राप्तइवेंद्रजित् ॥ ५ ॥ संपातिनेप्रजंघोथ बाणां-
स्त्रीन्मुक्तवान्रणे ॥ आश्वेवसोश्वकर्णेन प्रजंघंनिजघानच ॥ ६ ॥ मुमोचलोहजांशक्तिं जंबुमा-
लीहनूमते ॥ हनूमत्तलचूर्णांगो मुमोचाथशरीरजां ॥ ७ ॥ नलःप्रतपनस्याग्रः पातयामासच
क्षुषी ॥ गजोद्रिशृंगमुष्टिभ्यां तापनंनिरपातयत् ॥ ८ ॥ ॥ ॥ ॥ ॥



श्रीः ॥ १ ॥ २ ॥ ३ ॥ पुरसन्निधौ देहसान्निध्यौ ॥ ४ ॥ ५ ॥ अश्वकर्णेन तंनामकवृक्षविशेषेण ॥ ६ ॥ जंबुमाली प्रहस्तपुत्रादन्यः शरीरजां शक्तिंमुमोचममारेत्यर्थः ॥ ७ ॥ ८ ॥

शरवर्षं शरवर्षैर्युक्तं ॥ ९ ॥ सप्तपर्णेन वृक्षविशेषेण ॥ १० ॥ अयानिकुंभोन्यः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ शोणितापगाः रक्तनद्यः ॥ १५ ॥

मित्रघ्नेनशरैर्विद्ध स्तंजघानविभीषणः ॥ शरवर्षंविरूपाक्षं शरेणैवचलक्ष्मणः ॥ ९ ॥ प्रहस्तंस-
प्तपर्णेन सुग्रीवोन्यहनद्बली ॥ मैंदस्यमुष्टिनिष्पिष्टो वज्रमुष्टिस्तदापतत् ॥ १० ॥ निकुंभेनश-
रैर्विद्धो नीलोनीलांजनप्रभः ॥ तस्यैवरथचक्रेण निकुंभस्याहरच्छिरः ॥ ११ ॥ शरानशनिसंका
शान् किरंतमशनिप्रभं ॥ विदग्धोविविदस्तत्र सालेनन्यहनद्रणे ॥ १२ ॥ सुषेणोथरथंभित्वा वि
द्युन्मालिनमाहवे ॥ गदयाताडितस्तेन शिलयातममारयत् ॥ १३ ॥ अन्यैश्चवानरैर्वीरै राक्षसा
विविधायुधाः ॥ नखदंतायुधैर्भग्नाः शिलासालायुधैरपि ॥ १४ ॥ अथरात्रिचरैस्तेषां रात्रियुद्ध
मवर्तत ॥ यत्रसुस्रुवुरत्युष्णा बहवःशोणितापगाः ॥ १५ ॥ चापहस्तप्रहस्तत्वं स्वस्तिद्रावयता
न्कपीन् ॥ मानवौसूदयेत्यूचे प्रहस्तंसदशाननः ॥ १६ ॥ रामेणयुद्धंविपदे संधानंसंपदेप्रभो ॥
आस्तांहिमंत्रोयोत्स्यामि इतिमंत्रीतमब्रवीत् ॥ १७ ॥ प्रहस्तोरथमारुह्य प्राच्यद्वारेणानिर्ययौ ॥
उत्पातान्भीतिदान्पश्य न्वृतोविपुलसेनया ॥ १८ ॥ युद्धंप्रवृद्धमत्रासी द्वानराणांनराशिभिः ॥
बलिष्ठंहतभूयिष्ठं वानरैरक्षसांबलं ॥ १९ ॥ अद्रावयन्कपीन्वीराः प्रहस्तसचिवास्तदा ॥ अभ्य-
धावन्नतिक्रुद्धा विविदाद्याःक्षणेनतान् ॥ २० ॥ ॥ ॥ ॥ ॥ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

धुरंधरेतन्नामकं राक्षसं समुन्नतंतन्नामकंराक्षसं ॥ २१ ॥ ॥ २२ ॥ २३ ॥ सेनानीः सेनानायकः नीलइत्यन्वयः सेनान्यंसेनानायक प्रहस्तमित्यन्वयः ॥ २४ ॥



विविदोगिरिशृंगेण धुरंधरममारयत् ॥ समुन्नतंनवृक्षेण दुर्मुखंचसमुन्नतं ॥ २१ ॥ सूदयामास
शिलया महानादंचजांबवान् ॥ तलेनतरसातारो निन्येकुंभहनुंक्षयं ॥ २२ ॥ चापहस्तप्रहस्तो
थ ववर्षामर्षितःशरान् ॥ शरीराणिकपींद्राणा मुदारोदारयन्मुहुः ॥ २३ ॥ सेनानीरथसेनान्यं
प्रहस्तंनीलआपतत् ॥ प्रहस्तेनशरैर्विद्ध स्तरुणातमताडयत् ॥ २४ ॥ नीलोनिमीलिताक्षोरं
शरवर्षासहोबली ॥ सालेनास्यजघानाश्वा न्मुसलीसोत्यजद्रथं ॥ २५ ॥ शिरोविभेदनीलस्य
प्रहस्तोमुसलेनसः ॥ तरुणाताडयन्नीलः प्रहस्तोभ्यपतत्पुनः ॥ २६ ॥ ज्ञात्वातंनीलदुर्धर्षं शि-
क्तिप्रास्यद्विभीषणः ॥ नीलःशिलांप्रहस्ताय ताभ्यांभग्नोममारसः ॥ २७ ॥ प्रहस्तेनिहतेतस्मि
न् राक्षसेंद्रनियोगतः ॥ वज्रदंष्ट्रोययौयोद्धुं ससैन्योदक्षिणांदिशं ॥ २८ ॥ निशाचरचमूंभीमां
विविधायुधधारिणीं ॥ शैलैःसालैर्नखैश्चोग्राः कपिसेनान्यषूदयन् ॥ २९ ॥ वज्रदंष्ट्रोधिकंक्रुद्धो
वीक्ष्यतंरक्षसांक्षयं ॥ शरैःशरीरांतकरै र्दारयामासवानरान् ॥ ३० ॥ पातितान्दारितान्कांश्चि
द्रावितानपितान्हरीन् ॥ युवराजोंगदोदृष्ट्वा वज्रदंष्ट्रमुपानयत् ॥ ३१ ॥ अंगदोवज्रदंष्ट्रेथ पात
यामासपादपं ॥ शरैस्तंशकलीचक्रे वज्रदंष्ट्रोहसन्निव ॥ ३२ ॥ ॥ ॥ ॥

॥ २५ ॥ २६ ॥ नीलदुर्धर्षं नीलेनजेतुमशक्यं ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शैलमुत्पाट्याचिक्षेप बलवान्वालिनंदनः ॥ अपासर्पद्वज्रदंष्ट्रो गिरिणाचूर्णितोरथः ॥ ३३ ॥ ग
दापाणिमसंभ्रांतं वज्रदंष्ट्रमवेक्ष्यसः ॥ शिरःशैलेनतस्याथ ताडयन्मोहमानयत् ॥ ३४ ॥ लब्ध
संज्ञोनिशिचरः सोंगदंगदयाहनत् ॥ घृष्टयोस्पष्टमनयो र्मुष्टियुद्धमवर्तत ॥ ३५ ॥ वानरोक्ष
मादत्त राक्षसःखड्गचर्मणी ॥ चिरंचित्रंरणंकृत्वा जानुभ्यांतौधरांगतौ ॥ ३६ ॥ अंगदःसहसो
त्थाय तन्निपात्यनिशाचरं ॥ यमक्षयंनिनायास्य शिरोमर्दननिर्दयः ॥ ३७ ॥ तेजसांगदचंद्रस्य
विष्णोःपदमुपेयुषः ॥ ध्वस्तंनक्तंचरतमः कपिचक्राब्धिरुत्थतः ॥ ३८ ॥ धूम्राक्षःपश्चिमद्वारा
न्निरगाद्रावणाज्ञया ॥ खरैःसिंहमुखैर्युक्ते रथेतिष्ठन्बलैर्वृतः ॥ ३९ ॥ राक्षसान्वानरैर्भग्नान् दृष्ट्वा
बाणान्ववर्षसः ॥ धूम्राक्षःक्रोधधूम्राक्षो धुन्वानश्चापमुत्तमं ॥ ४० ॥ स्वांचमूंचंचलांदृष्ट्वा मारुति
र्मारुतोपमः ॥ शिलयाथोविपुलया धूम्राक्षरथमक्षिणोत् ॥ ४१ ॥ गदयाताडितस्तेन हनुमांस्त
दचिंतयन् ॥ गिरिशृंगेणधूम्राक्षं चूर्णयामासलीलया ॥ ४२ ॥ गर्ववान्शर्ववरतो रावणेनप्रचो
दितः ॥ अकंपनःकपिवरान् द्रावयामाससायकैः ॥ ४३ ॥ पर्वताद्भ्रकायोथ पर्वतान्पादपान
पि ॥ हनूमानाक्षिपत्तस्मै सशरैस्तानखंडयत् ॥ ४४ ॥ पावमानिरथोत्पाट्य पादपंप्रहसन्निव ॥
जघानाकंपनंतेन चक्रेणेवाहितंहरिः ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥

उल्मुकपाणय अलातहस्ताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ हेकांतइतिसंबुद्धिः ॥ ४९ ॥ जनकदुहितृचेतः कैरवश्वेत भानुः सीतायाश्चित्ताख्य कैरवकम् मोद्बोधनेश्वेत भानुश्चंद्रः । निशिचरचयसत्रध्वंसने राक्षसाख्यवनविनाशे चित्रभानुःवन्हिःजगत् व्यजयत् जितवान् रामनेत्रांतभानुः रामस्यापांगोत्र

रामाज्ञयाततोलंका मदहन्निशिवानराः ॥ उच्चावचःप्रगर्जंत उच्चैरुल्मुकपाणयः ॥ ४६ ॥ जा
ज्वल्यमानज्वलनै रलातैरस्त्रमंत्रितैः ॥ विकीर्यमाणैःकपिभि र्लंकाःसर्वाप्यदह्यत ॥ ४७ ॥ बाला
नामबलानांच प्रबलानांचरक्षसां ॥ सीताहेलनदोषेण विनाशोभूदचिंतितः ॥ ४८ ॥ हापुत्रमा
तस्तातेति कांतेकांतेतिवासकृत् ॥ अश्रूयंतात्रदग्धानां प्रजानांकरुणारवाः ॥ ४९ ॥ कपिकुल
कमलप्रोज्जृंभणोतिग्मभानु र्जनकदुहितृचेतःकैरवश्वेतभानुः ॥ निशिचरचयसत्रध्वंसनेचित्रभानु
र्व्यजयतजगदेकोरामनेत्रांतभानुः ॥ ५० ॥ इति श्रीसंग्रहरामायणे युद्धकांडे पंचमःसर्गः ॥ ५ ॥

॥ श्रीः ॥ ततोनिकुंभःकुंभश्च कुंभकर्णसुतौउभौ ॥ वानरानुल्मुकधरा न्प्रापतूरावणाज्ञया ॥ १ ॥
यूपाक्षःशोणिताक्षश्च प्रजंघःकंपनस्तथा ॥ निर्ययुःकौंभकर्णाभ्यां सार्धंनानायुधायुधे ॥ २ ॥ वा
नराराक्षसान्जघ्नुः पादपोपलपर्वतैः ॥ आयुधैर्वानरांस्तेपि बभौयुद्धंतदद्भुतं ॥ ३ ॥ अंगदोगद
यागुर्व्या कंपनेनाभिताडितः ॥ जघानगिरिशृंगेण कंपनंकोपकंपितः ॥ ४ ॥ क्षुरार्धचंद्रनाराचा
न्वत्सदंतान्शिलीमुखान् ॥ कर्णिशल्यविपाटाश्च शोणिताक्षोंगदेकिरत् ॥ ५ ॥ अनादृत्यांगदो
वेधं धनुर्बाणरथानथ ॥ अचूर्णयद्रक्षसोस्य सोपिखड्गीखमापतत् ॥ ६ ॥ ॥ ॥

लामः ॥ ५० ॥ इति पंचमःसर्गः ॥ ५ ॥ ॥ श्रीः ॥ १ ॥ २ ॥ उपलाः पाषाणाः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ॥ ॥ ॥

॥ ७ ॥ ८ ॥ वनौकोभिर्वानरैः मर्कटोवानरःकीशोवनौकाइत्यमरः ॥ अनोकहान्वृक्षान् अनोकहःकुटःसालइत्यमरः ॥ ९ ॥ अश्वकर्णेनतन्नामकं

अंगदःखड्गमाछिद्य छित्वासंतस्यरक्षसः ॥ तेनैवासिंहनादोग्रः खड्गेनाखंडयत्परान् ॥ ७ ॥
प्रजंघयूपाक्षयुतः शोणिताक्षोभ्ययाद्गदी ॥ अंगदोवारयामास तान्मैंदद्विविदान्वितः ॥ ८ ॥
उत्पाट्योत्पाट्यविक्षिप्तान् वनौकोभिरनोकहान् ॥ गदाखड्गशरैराशु चिच्छिदुस्तेनिशाचराः
॥ ९ ॥ अश्वकर्णेनसंताड्य मुष्टिपातेनचांगदः ॥ प्रजंघस्यकरात्खड्ग माछिद्यप्राहरत्क्षतं ॥ १० ॥
प्रजंघोमुष्टिपातेन तंतारेयममोहयत् ॥ लब्धसंज्ञोमुहूर्तेन वालिजोस्याशिरोहरत् ॥ ११ ॥ यूपा
क्षंविविदोरौत्सी द्युवराजाभिगामिनं ॥ उरस्याहत्यतंदोर्भ्यां जग्राहचमहाबलः ॥ १२ ॥ भ्रात
रंमोचयन्वीरो गदयोरस्यताडयत् ॥ शोणिताक्षोथविविदं तांगदांविविदोग्रहीत् ॥ १३ ॥ नखै
र्मुखंपरिक्षिण्वन् विविदोभुविपातयन् ॥ पिपेषशोणिताक्षंतं मैंदोयूपाक्षमक्षिणोत् ॥ १४ ॥ का
ल्यमानांकपिवरैःकुंभोदृष्ट्वानिजांचमूं ॥ अभ्यधावन्शरेणाशु विविदंभुव्यपातयत् ॥ १५ ॥ अ
थापतंतंमैंदंच शरेणापातयत्क्षितौ ॥ मातुलौमोहितौदृष्ट्वा तमभ्यद्रवदंगदः॥ १६॥ विध्यमानः
शरैस्तीक्ष्णै र्बलवान्वालिनंदनः ॥ ववर्षाथशिलासालान् कुंभस्तांश्छिनच्छरैः ॥ १७॥ अंगद
स्यापिपततो भ्रुवोर्बाणान्समुक्तवान् ॥ रुधिरव्याकुलाक्षोपि वृक्षांचिक्षेपसोंगदः ॥ १८ ॥ ॥

नवृक्षविशेषेण ॥ १० ॥ तारेयंअंगदं ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ भ्रुवोरितिसप्तमीद्विवचनं ॥ १८ ॥ ॥ ॥

॥ १९ ॥ २० ॥ २१ ॥ द्विपःगजः ॥ २२ ॥ जितकाशी जितगुरुः जितकाशी जिताहवकृत्परः । जयकाशीतिपाठे जयेनशोभमानइत्यर्थः ॥ संहृतःकोपसंपूर्णः ॥ २३ ॥ नियुद्धंबाहुयुद्धं ॥ २४ ॥ २५ ॥ २६ ॥ पुप्लुवेउत्प्लुत्यगतोदिवसर्गः ॥ २७ ॥ प्रतिघात्क्रोधात्कोपाद्विषः सुरवारण

कुंभोवृक्षंशरैश्छित्वा युवराजमताडयत् ॥ इहकालेमहाभासी तत्राभूद्वानरमंडले ॥ १९ ॥ सुषे-
णोजांबवान्नीलो नलस्तारःशरभस्तथा॥ अभ्यद्रवंद्विखाहरताः कुंभस्तानजयच्छरैः ॥ २० ॥ भ्रा-
तृजंघातितंदृष्ट्वा वानरेंद्रांश्चविद्रुतान् ॥ क्रुद्धोद्विद्रुमवर्षेण सुग्रीवःकुंभमाद्रवत् ॥ २१ ॥ शीर्यमा
णान्रिपुशरैः शिलावृक्षान्विलोक्यसः कुंभस्यधनुराच्छिद्य चिच्छेदक्षुभितद्विपः ॥ २२ ॥ जित-
काशीभवान्कुंभ पौरुषंपश्यमेऽधुना ॥ इत्युक्त्वाजगृहेराजा कुंभंसंरंभसंहृतः ॥ २३ ॥ नियुद्धंवी
रयोरासी च्चित्रंचित्रंसमंतयोः ॥ कुंभमंभोनिधौप्रास्य त्कपींद्रोब्धिरस्तदोत्थितः ॥ २४ ॥ अर्ण-
वात्तूर्णमुत्पत्य ससुग्रीवमताडयत् ॥ सुग्रीवोमुष्टिघातेन तंाननाययमालयं ॥ २५ ॥ कुंभंतंनिह
तंदृष्ट्वा निकुंभोभानुनंदनं ॥ संरंभारुणताम्राक्षो गंभीरःप्रैक्षतज्वलन् ॥ २६ ॥ धनुःशतमितंदे
शं पुप्लुवेप्लवगेश्वरः ॥ पश्यन्निकुंभसंरंभं किमुतान्येप्लवंगमाः ॥ २७ ॥ परिघंप्रतिघान्नत्थः सुरवा
रणदारणं ॥ अविभ्रमन्निकुंभोथ दंडंदंडधरोयथा॥ २८ ॥ परिघभ्रमणेनास्य संभ्रांतंभुवनत्रयं॥
विषसादलयेयद्व त्ससुरासुरमानवं ॥ २९ ॥ अवध्यःशंकरवरा दवध्यातान्दनाकिनां ॥ जाज्व-
ल्यतेस्मतस्मिन्स कालेकालानलोपमः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

दारणंदेवगजानदारयतीतितथोक्तः तंदेवश्रेष्ठविदारकमितिवा ॥ अविभ्रमत्भ्रामयामास ॥ २८ ॥ २९ ॥ अवध्याता अवज्ञादनां नाकिनांदेवानां ३०

ऐक्षयत्तदर्शयास ॥ ३१ ॥ ३२ ॥ पविःवज्रं कुलिशं भिदुरं पविरित्यमरः ॥ ३३ ॥ ३४ ॥ ३५ ॥महासंख्यमरवे महायुद्धाख्ययज्ञे प्रमाथ्यप्रकर्षेणमथित्वे

विषादंवीक्ष्यहनुमान् विश्वस्यतमुपास्थितं ॥ निकुंभाग्रतआप्लुत्य विशालंवक्षऐक्षयत् ॥ ३१ ॥
अभीरोवीरकिंकृत्यं भीरुभिर्विद्रुतैस्तव ॥ अत्रप्रहरतेहेतिमित्यूचेहनुमानिमं ॥ ३२ ॥ अमोघं
परिघंघोर मुद्धाम्यप्रजहारसः ॥ हनूमतिसमोघोभू त्पतत्रींद्रेपविर्यथा ॥ ३३ ॥ मारुतेर्मुष्टिपि
ष्टोथ मूर्छितःकुंभसोदरः ॥ आश्वस्तस्तंहनूमंत मसैन्यस्याद्रवद्द्रुतं ॥ ३४ ॥ नीतेहनूमत्यारब्धं
क्रंदितंकपिमंडलैः ॥ जातंसपदिहासांतं पातितेस्मिन्हनूमता ॥ ३५ ॥ महासंख्यामखेतस्मि न्प्र
माथ्यावीक्षतंहरिः ॥ तंनिकुंभपशुंतत्र यज्ञेश्वरमतोषयत् ॥ ३६ ॥ कुंभकर्णात्मजेतस्मि न्कुंभक
र्णोपमेहते ॥ नंदितंनाकलोकेभू क्रंदितंरक्षसांपुरे ॥ २७ ॥ ससुप्तघ्नोयज्ञकोपो रश्मिकेत्वग्निके
तवः ॥ प्रेषितारावणेनाजौ क्षणाद्रामेणसूदिताः ॥ ३८ ॥ यमशत्रुश्चदुर्धर्षौ महापार्श्वोमहोदरः ॥
वज्रदंष्ट्रोमहाकाय स्तौचोभौशुकसारणौ ॥ ३९ ॥ समेन्यारावणादिष्टा हतारामेणलीलया ॥ उ
दारविक्रमेणाजौ मृगेंद्रेणमृगाइव ॥ ४० ॥ निकुंभादीन्हतान्श्रुत्वा विलपंतंदशाननं ॥ आश्वा
स्यानिर्ययुर्योद्धुं कुमारास्तदनुज्ञया ॥ ४१ ॥ त्रिशिरा[illegible] [illegible]सत्वरांतिकौ ॥ तेसराघु
त्योन्मत्ताभ्यां [illegible] ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥

कृत्वा ॥ ३६ ॥ नंदितंसंतोषः क्रंदितंविलापः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदग्रगाःतेपामग्रेगछंती ॥ ४३ ॥ ४४ ॥ ४५ ॥ दीनंदैन्यंप्राप्तं दुःतंदुःखंप्राप्तं ॥ ४६ ॥ ४७ ॥ ४८ ॥ सःअश्वः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

उग्रातदग्रगामेना वानरान्पर्यपीडयत् ॥ नानाहेतिमतींदीप्तां तांकपींद्रान्व्यवारयन् ॥ ४३ ॥
वानरावारणैर्भग्नै र्वारणांश्चहयैर्हयान् ॥ रथैरथान्राक्षसांश्च राक्षसैःसममृद्यन् ॥ ४४ ॥ नरां
तकोंतकनिभः क्रुध्धोवाजिवरेस्थितः ॥ कपिसप्तशतान्येकः प्रासेनादारयत्क्षणात् ॥ ४५ ॥ दी
नंदूनंकुमारेण हरिचक्रंविलोकयन् ॥ नरांतकंप्रतिययौ सुग्रीवप्रेषितोंगदः ॥ ४६ ॥ तिष्ठाकिंप्रा
कृतैरेतैः प्रासंमेप्रहरोरसि ॥ इत्यंगदस्यब्रुवतः प्रासंप्रास्यत्सवक्षसि ॥ ४७ ॥ अंगदोरसिसप्रा
सः पातितःखंडितोपतत् ॥ तारेयस्तरसातस्य तलेनाश्वमताडयत् ॥ ४८ ॥ ताडितादश्ववदना
न्नयनेभुविपेततुः तारीकेइवमेघाग्रा त्सपपातममारच ॥ ४९ ॥ तुष्टधीःपातयामास मुष्टिमंगद
मूर्ध्निसः ॥ मूर्छितःप्रापसंज्ञांस रक्तोरुधिरधारया ॥ ५० ॥ तन्मुष्टिपीडितःक्रुध्धो दध्रेखड्गंनरां
तकः ॥ खड्गमाछिद्यतेनैन मंगदोप्यंगमारयत् ॥ ५१ ॥ नरांतकेनिपातिते क्रुध्धोदेवांतकोभ्य
यात् ॥ जांबवत्प्रमुखाःसर्वे तंदृष्ट्वैनपराद्रवन् ॥ ५२ ॥ देवांतकादपिक्षेप वृक्षान्वालिसुतोबहून् ॥
सतांछित्वाशरेणाशु वालिसूनुममोहयत् ॥ ५३ ॥ अथातिसंक्रुतनयः शैलंप्रज्वलपादपं ॥ अ-
भिदुद्रावसंगृह्य चिक्षेपचानिशाचरे ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥

॥ ६३ ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ५५ ॥ आव्हयत आहूतवान् ॥५६ ॥ ५७ ॥ ५८ ॥ सुवर्णानामुवर्ण सृदगणां नानासुंदरनाम शोभनाक्षरैर्मनोहरैः ५९ ॥ ६० ॥ बलचंचुना
बलचतुरेण ॥ ६२ श्रीहनुमान् मुहुः बहुवारंपुनःपुर्नारितिवा ॥ जगर्जगर्जितवानित्यन्वयः ॥ कीदृशःअभिहिरश्रीः सूर्यवत्तासमानः ॥ अस्मानः॥
रणरणरणिकायां रणेयुत्थेविद्यमानायारणरणिका उत्कंठातस्यांविद्यमानः अत्यंतंयुध्याकांक्षावानित्यर्थः ॥ परमपरमाहिष्टे परमपराःपरमाणांउत्तमा

सशैलंशकलीकृत्य शरैर्देवांतकोबली ॥ त्रिशिरास्त्वारांधोरं कपिराजंव्यमोहयत् ॥ ५५ ॥ बलम
प्रतिमंवीक्ष्य सुरशत्रोस्तुमारुतिः ॥ तमाहवायाव्हयत केशवःकैटभंयथा ॥ ५६ ॥ तस्यापतत
एवाशु रथंसहयसारथिं ॥ चूर्णयित्वाधनुश्चास्य चिच्छेदाछिद्यमारुतिः ॥ ५७ ॥ अथखड्गिन
मायांतं पातयित्वासपावनिः ॥ शिरःपादेननिष्पीड्य जघानामरवैरिणं ॥ ५८ ॥ सुवर्णसुंदरैरे
ष मारुतिःप्रत्यपूज्यत ॥ अमराणांकपीनांच स्तवनैर्नयनैरपि ॥ ५९ ॥ युद्धोन्मत्तंप्रमत्तंच वी
रावन्वर्थनामकौ ॥ जघानमुष्टिघातेन मारुतिःक्षिप्तवानरौ ॥ ६० ॥ अंगदादीन्प्लवंगेंद्रान् द्रावयं
तंशरोत्तमैः ॥ प्राप्यात्रिशिरसंतस्य हनूमान्यानमाक्षिणोत् ॥ ६१ ॥ संछिद्यचाखड्गौच बले
नबलचंचुना ॥ त्रिमूर्धानममूर्धानं चक्रेचक्रायुधप्रियः ॥ ६२ ॥ परमपरमाहिष्ठे मानयंतंनयंतं
जयमखिलकपींद्रान् राममत्राभिनंदन् ॥ रणरणरणिकायां वर्तमानोसमानो मुहुरपिमिहिरश्रीः
श्रीहनूमान्जगर्ज ॥ ६३ ॥ इतिषष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

नामध्येपराःउत्तमाः येअत्यत्तमाइत्यर्थः ॥ तेषामपिमहिष्टंपूज्यं तान्अखिलकपीन् मानयंतं तान्जयंतंनयंतंप्रापयंतं रामंअभिनंदन् हर्षयंस्तुष्यन् राम
मुद्दिश्यात्यंतंसंतुष्य जितिवा इत्यन्वयः ॥ ६३ ॥ ॥ इति युद्धकांडटीकायां षष्ठःसर्गः ६ ॥ ॥ ॥ ॥ ॥ ॥

श्रीः ॥ अद्रिकायोतिकायोथ संतप्तोभ्रातमारणात् ॥ रथंस्वयंभुवादत्त मारुरोहार्कभास्वरं ॥ १ ॥
ब्रह्मणोवरदप्तोसौ ब्रह्महादेवहारणः ॥ विष्फारयन्महच्चापं कोपाटोपमुपाययौ ॥ २ ॥ कुमुदंवि-
विदंमैंदं जित्वानीलादिकान्शरैः ॥ विजित्यांगदसुग्रीवौ लीलयाप्रापराघवं ॥ ३ ॥ विपक्षवक्षो
नावेक्षे मच्छरानैवपृष्ठगाः ॥ निवर्तिष्येनिराशोह मित्यूचेरावणात्मजः ॥ ४ ॥ मानेनासहमानेन
तत्रसौमित्रिणाक्षणात् ॥ वार्षकेणशरान्घोरा नतिकायोभ्यपद्यत ॥ ५ ॥ ननुबालोसिसौमित्रे न-
बलीनापिचास्त्रवित् ॥ गच्छतिष्ठमुमूर्षुश्चे दितिरावणिरभ्यधात् ॥ ६ ॥ बालस्यापिममवधंमे बालो
हिप्राक्त्रिविक्रमं ॥ विक्रमस्वपुरामृत्यो रित्यूचेलक्ष्मणारिपुं ॥ ७ ॥ रणंद्रष्टुंनभोभेजु स्तयोर्वी
रकुमारयोः ॥ पक्षपातेपरिक्षिप्ता उभयेपिसुरासुराः ॥ ८ ॥ एकंपंचचचिक्षेप सोतिकायःशरो-
त्तमान् ॥ तानप्राप्तान्शरैस्तीक्ष्णै श्चिच्छेदभरताग्रजः ॥ ९ ॥ आकर्णपूर्णमाकृष्य लक्ष्मणोमुक्त
वान्शरं ॥ ललाटंपाटयामास रिपोःसार्द्धंचसोकरोत् ॥ १० ॥ आश्वास्यरावणिर्वीरो वीरोसी-
तिब्रुवन्परं ॥ एकंत्रीन्पंचसप्तेति लक्ष्मणायाक्षिपच्छरान् ॥ ११ ॥ चिच्छेदतांश्चसौमित्रिः परोमुं-
चन्महाशरं ॥ शरेणतेनभिन्नोरा ववर्षेषूसलक्ष्मणः ॥ १२ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ वायुः अतिकायस्य अदृश्यसन् अब्रवीदित्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ सशिला

असंख्यास्तादिषूर्दृष्ट्वा मुमोचेषूः प्रकोपितः ॥ असंख्याअतिकायस्य नभआसीत्तमोमयं ॥ १३ ॥
साम्यंनसहमानोथ सौमित्रिर्बाणमंत्रितं ॥ आग्नेयमस्त्रमसृज त्तच्छौर्येणाक्षिपत्परः ॥ १४ ॥ मु-
मोचरावणिर्याम्यं वायव्येननिरस्यतत् ॥ चिच्छेदतच्छिरोबाणै र्बाहूस्वभरताग्रजः ॥ १५ ॥ द्विशि
राःसचतुर्बाहू रतिकायोऽव्यदृश्यत ॥ चिच्छेदतानिजातानि लाघवाद्राघवानुजः ॥ १६ ॥ द्विगुणा
स्योभवत्सोथ छिन्नश्छिन्नः पुनः पुनः ॥ तंनिषण्णंविषण्णास्यं सौमित्रिंवायुरब्रवीत् ॥ १७ ॥ ब्राह्मे
णास्त्रेणवध्योयं तातनैवापरैरिति ॥ तद्दिव्यवचनंश्रुत्वा विरिंचास्त्रंससंदधे ॥ १८ ॥ मुमोचब्राह्म-
मस्त्रंत त्सब्रह्मजनकानुजः ॥ ससूताश्वरथंतूर्ण मतिकायंददाहतत् ॥ १९ ॥ निहत्यवैरिणंवीरो रा
मंरामानुजोव्रजत् ॥ प्रणतंप्रणयेनेशः परिरेभेशलक्ष्मणं ॥ २० ॥ रावणंपुत्रशोकार्तं विलप्यक्रोध
माश्रितं ॥ निर्याणाभिमुखंप्रेक्ष्य खरपुत्रोभ्यभाषत ॥ २१ ॥ राजन्नियोजर्न्तायोहं रणार्थेरणपंडितः ॥
निहत्यमत्पितृरिपुं सबलंत्वांप्रसादये ॥ २२ ॥ इत्युक्त्वामन्युरक्ताक्षो मकराक्षोमहाबलः ॥ रावणेन
समादिष्टो रथीधन्वीचनिर्ययौ ॥ २३ ॥ राक्षसान्मकराक्षस्य पुरोगान्कपिपुंगवाः ॥ नानाविधा
युधान्संख्ये निजघ्नुःसशिलानगाः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥

नगाः शिलापर्वतयुक्ताः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २५ ॥ अकिंचनंदरिद्रं निष्क्रियांमानिक्रियां ॥ २६ ॥ मत्कंकपत्रैःममबाणैः कंकानांतन्नामकानांपक्षिणां उपलक्षणतयासृगालादीनामपीत्यर्थः ॥ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ निकराःसमूहाःपरेताःमृताः ॥ ३१ ॥ विक्रांतकांतकरकाशितकार्मुकं विक्रांतेनपराक्रमेण कांतःमनोहरःकरःहस्तेकाशितं शोभितंशोभमानमितियावत् कार्मुकंचापंयस्यसतथोक्तः । तं विक्रांतकांतकरकाशितकार्मुकंयस्येतिवाऽर्थः । यद्वा विक्रांतकांतकरकाशितं

नीलांगदादीन्सुग्रीवं शरैर्विद्राव्यवीर्यवान् ॥ लक्ष्मणेषूरगणयन् रामंप्रापखरात्मजः ॥ २५ ॥
पश्यामिरामदेवत्वां मत्पितृघ्नमकिंचनं ॥ करिष्येनिष्क्रियामित्थं मकराक्षोब्रवीत्प्रभुं ॥ २६ ॥
मत्कंकपत्रैर्विहतः कंकानांनिष्क्रियांभवान् ॥ करिष्यतेनिजैर्मांसै रितिरामस्तमब्रवीत् ॥ २७ ॥
ववर्षबाणान्दुष्टोसौ रामश्चिछेदतान्शरैः ॥ बवर्षरामश्चशरा नस्त्रैरस्त्राण्यवारयत् ॥ २८ ॥
रामःस्मितमुखोबाणैः सरथंसारथिंक्षणात् ॥ उदारोदारयामास सशूलीचखमाप्लुतः ॥ २९ ॥ चि
क्षेपराक्षसःशूलं रामश्चिछेदतच्छरैः ॥ चिच्छेदचशरेणास्य शिरःकुंडलमंडितं ॥ ३० ॥ निकराःरा
क्षसानांते मकराक्षानुगामिनः ॥ परेताःकपिभिःशैलैः परेचप्राद्रवन्पुरीं ॥ ३१ ॥ विक्रांतकांत
करकाशितकार्मुकंतं रामंरमारमणमेवमवेक्षमाणाः ॥ देवोपदेवमुनयोमुदितामुकुंदं देवारिवारद
मनंप्रववंदिरेत्र ॥ ३२ ॥ इति श्रीसंग्रहरामायणे युद्धकांडे सप्तमःसर्गः ॥ ७ ॥ ॥

कार्मुकंयस्यसविक्रांतकांतकरकाशितकार्मुकः । त मित्यर्थोवाच्यः । देवारिवारदमनं देवारीणांराक्षसानांवारःसमूहः वारसंघातसंचयइत्यमरः । तंदम्यतिविनाशयतीतितथोक्तः । अत्रसुवेलाद्रौ आगताः ॥ ३२ ॥ इति युद्धकांडे टीकायां सप्तमःसर्गः ॥ ७ ॥ ॥ ॥ ॥

श्रीः ॥ सहसितिभिर्भपदं शोककोपाकुलितः शोकेनकोपेनच आकुलीभूतः । आहवशोभिनीं युद्धेशोभमानां ॥१॥ सरावणः कुंडलीकर्णाभरणवान् आतपत्रंसितचामरे शुभ्रेचामरे चेतित्रीणिनीलाभ्रभासः नीलमेघश्यामस्य तस्यरावणस्य परभागभांजिवर्णोत्कर्षं करांणिवभूवुरित्यन्वयः । नीलवर्णस्यतस्य सितातपत्रादिसंबंधात्शोभाविशेषो भूदित्यर्थः ॥ २ ॥ तंनराशिनाथमितियोजना नराशिराशिप्रकरैः मनुष्याहारैः राक्षससमूहानांसमूहैः परीतंपरिवारितं ॥ ३ ॥ विंशत्विंशतिपरिमितानि मदमन्युमंति मदेनमन्युनाकोपेनचयुक्तानीत्यर्थः । विंशतविंशतिसंख्याकान् भुजगप्रकाशान्सर्पसंनिभान् ॥

श्रीः ॥ निशम्यसम्यङ्मकराक्षमृत्युं सशोककोपाकुलितोदशास्यः ॥ संनाहयन्नाहवशोभिनींस्वां
सेनांरणायाशुविनिर्जगाम ॥ १ ॥ सकुंडलीभूषणभूषितांगो देदीप्यमानंरथमारुरोह ॥ तस्या
तपत्रंशितचामरेच नीलाभ्रभासःपरभागभांजि ॥ २ ॥ तेवानरास्तत्रनराशिनाथं नराशिराशि-
प्रकरैःपरीतं ॥ सबाणबाणासनमुल्बणास्य मायांतमालोक्यविदुद्रुवुस्ते ॥ ३ ॥ विंशद्दशास्यस्य
विलोचनानि रक्तानिदष्टामदमन्युमंति ॥ भुजांश्चविंशद्भुजगप्रकारान् कुतूहलंप्रापकुलंकपीनां ।
॥ ४ ॥ दंष्ट्राकटूनांमुखकोटराणां महांजनाद्रेरिवकंदराणां ॥ लोलाहिजिव्हादशकंचकाशे द्वि
शोदशेवप्रसितुंसुरारेः ॥ ५ ॥ किंपौरुषंतत्पुरुषादभर्तुः संवर्णनीयंकविभिर्विविच्य ॥ कालानल
स्येवनयस्यशांतिं विनेशितुर्वीर्यलयोदवाहं ॥ ६ ॥ ॥ ॥ ॥ ॥

॥ ४ ॥ दंष्ट्राकटूनांदंष्ट्राभिः क्रूराणांमुखकोटराणां मुखारूयविलानां महांजनाद्रेः कंदराणामिवगुहाइवस्थितानां लोलाहिजिव्हादशकं अतिचंचलसर्पजिव्हासमान जिव्हानांदशकं ग्रसितुमिवास्थितं सुरारेः रावणस्य चकाशेअशोभत ॥ ५ ॥ यस्यपुरुषादभर्तुः राक्षसाधिपतेरावणस्य ईशितुःरामस्य वीर्यलयोदवाहं वीर्यारूयप्रलयकालीन जलप्रवाहंविनाशांतिर्नास्ति कालानलस्यलयोदवाहं विनेत्यन्वयः ॥ ६ ॥ ॥ ॥

सेनान्यःसेनानायकाः ॥ ७ ॥ वृषश्चेत्यंते सगंधमादाः गंधमादसहिताः ॥ ८ ॥ नासत्ययूनुर्मैंदाविविदौ शंभुसूनुःजांबवान् सरावणःशिरोभिःशरैःशैलान् शकलीचकार चूर्णीकृतवान् त्रिभिस्त्रिभिश्चपातितवान् ॥ ९ ॥ अंगीकृतगंडशैलः गृहीतस्थूलपाषाणः ॥ १० ॥ अभ्यरौत्सीत् मंरुरोध ॥ ११ ॥

सेनान्यएवंबहुसैन्यवंतो वीराःसहस्रायुतकोटिसंख्याः ॥ नानायुधाढ्याःपरिवारयंतो व्यद्रावयं
स्तत्कपिचक्रमाशु ॥ ७ ॥ गजोगवाक्षोगवायोवृषश्च सगंधमादाःसहकत्थनेन ॥ रक्षश्चभूजष्नु
रिमेकपींद्राः षड्भिःशरैस्तानतुदद्दशास्यः ॥ ८ ॥ नासत्यसूनूसचशंभुसूनुः शैलैःप्रजह्रुःकुपि-
तादृशास्यं ॥ शरैःसशैलांछकलीचकार त्रिभिस्त्रिभिःपातितवानिमांश्च ॥ ९ ॥ अथांगदोंगीकृ-
तगंडशैलः प्रचंडवेगोभिपपातरोषात् ॥ उदारवीर्यःप्रविदार्यतूर्णं तंरावणःपातितवांछरेण ॥ १० ॥
उग्रंदशग्रीवमथाभ्यरौत्सी त्सुग्रीवउच्चैःप्रगृहीतवृक्षः ॥ छित्वातरुंतस्यविदार्यकंठं शरेणतंपाति-
तवान्दशास्यः ॥ ११ ॥ भुजंभुजंगाभमथोन्नमय्य तंरावणंताडितवान्हनूमान् ॥ सर्वाननने-
भ्योस्यजगालरक्तं धातुद्रवोद्रेरिवकंदरेभ्यः ॥ १२ ॥ समूर्छितस्तत्रमुहूर्तमुग्रः संज्ञांगतोविस्मि
तआबभाषे ॥ नपौरुषेस्यात्पुरुषोभवादृ कोमोहयेन्मांभुवनेन्यएवं ॥ १३ ॥ ॥ ॥



उन्नमय्यउत्थाप्य तदा अस्यरावणस्यसर्वाननेभ्यःसर्वमुखेभ्यः रक्तंजगालसुस्राव निसृतमभूत् गलउद्गमनइतिधातुः धातुद्रवःमनःशिलारसः ॥ १२ ॥
सरावणःपौरुषेइतिविषयसप्तमीयं भवादृक्भवादृशःपुरुषःकोपिनस्यात् अन्यःत्वचान्यः ॥ १३ ॥ ॥ ॥ ॥

अरेनराशनीचराक्षस अरेइतिनीचस्यैवसंबोधनं हीनसंबोधनेतुरेइत्यमरः । अहंत्वांशोणितपंकपदंरक्तपंकपदंयथाभवतितथेतिक्रिया ॰ ॰णकृतत पि
एवालसंचूर्णितवानाभूवं ॥ १४ ॥ हेवीरत्वंमत्तःआसिभवतसे सर्वौजसाअस्यसमस्तबलेनसर्वजयीसर्वलोकान्जितवान् ॥ १५ ॥ विव्हलःवर्ताकिंचित्परव
शत्वन् हेचोरमायाहिमागच्छेति मुहुःपुनःपुन र्ब्रुवाणेसातिलब्धांतरःलब्धावसरःनीलसमीपं नीलस्यसमीपंएषःरावणः ॥ १६ ॥ विदारितेपुरावणनवि-

लीलाप्रहारोयमरेनराश तस्मात्पुनर्जीवसिदुर्जनत्वं॥ त्वानन्वहंशोणितपंकपेषं नपिष्टवानित्यवद-
त्धनूमान् ॥ १४ ॥ मत्तोसिमत्तोपिगृहाणवीर मुष्टिप्रहारंत्वमथेत्युदीर्य ॥ सर्वौजसासर्वजयीद-
शास्यः संताडयामाससमीरसूनुं ॥ १५॥ मरुत्सुतेविव्हलवन्निषण्णे मायाहिचोरेतिमुहुर्ब्रुवाणे॥
लब्धांतरोस्मीतियथौविचिंत्य किरन्शरान्नीलसमीपमेषः ॥ १६ ॥ अथात्ममुक्तेषुविदारितेषु न
गेषुनीलोध्वजमारुरोह ॥ दशाननस्याथधनूरथाश्वा नाचक्रमेतस्यशिरांसिचाशु ॥ १७ ॥ नि-
रीक्ष्यतंराक्षसराट्चुकोप ननादनीलोथचकोपयंस्तं ॥ जडीकृतस्तेनसराक्षसोलं सराघवास्तेहर
योहसंश्च ॥ १८ ॥ मागाःकपेकौतुकमात्मलौल्या न्माह्निवमात्मानमवप्रभुश्चेत् ॥ इत्थंब्रुवाणो-
धनदानुजोय माग्नेयमस्त्रंविमुमोचतस्मै ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

दारितेषुसत्सु धनुरितिभिन्नंपदं रथाश्वान्रथमश्वांश्च धनूरथाश्वानिसेकंपदंवा सदाधनुंपरिस्थितानिरथमश्वांश्चेत्यर्थः । आक्रमेआक्रमणंकृतवान
तस्याशिरांसिचाचक्रमइत्यन्वयः ॥ १७ ॥ तंनीलं तंरावणंतेननीलेनसःतादृशः ॥ १८ ॥ हे कपेआत्मलौल्यादात्मनःचंचलत्वात् कौतुकंआश्चर्यमु-
त्थि मागाःनमाप्नुहि माह्निवंमयावित्थमात्मानंत्वां अवरक्षस्व ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

स्वयमग्निभावात् अग्निस्वरूपत्वात् अस्त्रेणआग्नेयास्त्रेणनममारनमृतः ॥ २० ॥ हेमर्त्यादिष्ट्याद्दृष्टोसि दैवाधीनंत्वद्दर्शनमभूदित्यर्थः ॥ २१ ॥ ससार्चि राभानूज्ज्वलद्वह्निसमान् ॥ २२ ॥ २३ ॥ बाणवरंबाणश्रेष्ठं अदलयत् विदारितवान् अवाप्तमोहःसंप्राप्तमूर्छः ॥ २४ ॥ यावत्यदालक्ष्मणंचकर्ष तदा ततःपूर्वमेवशेषशयानुजन्मा शेषशयनस्यअनंतशयनस्यहरेः स्वरूपस्यरामस्यअनुजन्माअनुजोलक्ष्मणः शेषंसाक्षाच्छेषात्मकंनिजमूलरूपंस्मरतिस्म ।

अग्नेस्तनूजःस्वयमग्निभावा न्ममारनास्त्रेणपतंश्चभूमौ ॥ तंरावणंराममभिद्रवंतं रुरोधसौमित्रिम
मित्रहंता ॥ २० ॥ दिष्ट्यासिदृष्टोविगतायुरद्य मर्त्येतिमर्त्याशननाथऊचे ॥ शूरानगर्जंतिनिशा
चरेति धुन्वन्धनुर्लक्ष्मणआचचक्षे ॥ २१ ॥ ससार्चिराभानथसप्तबाणा न्निशाचरेशोनिशिता-
न्मुमोच ॥ चिच्छेदरामावरजःशरैःस्तां छरानमुंचच्चदशाननाय ॥ २२ ॥ तान्रावणश्चाछिनदा
शुबाणै रमुंचतांतावपिबाणसंघान् ॥ धनुर्धराणांप्रवरौधरिण्यां जिगीषयालक्ष्मणराक्षसेंद्रौ ॥
॥ २३ ॥ स्वयंभुवादत्तममोघमुग्रं सरावणोबाणवरंमुमोच ॥ सलक्ष्मणस्यादलयल्ललाटं पपात-
सौमित्रिरवाप्तमोहः ॥ २४ ॥ रथादवप्लुत्यसरावणोपि क्षणादभिद्रुत्यबलाच्चकर्ष ॥ यावत्सताव
त्स्मरतिस्मरूपं शेषंनिजंशेषशयानुजन्मा ॥ २५ ॥ विंशद्भिरप्यात्मभुजैःप्रगृह्य दुष्टेनकृष्टोपिच
चालनायं ॥ गिरिस्तनीसप्तसमुद्रवस्त्रा महीचकंपेमहिलेवभीता ॥ २६ ॥ ॥ ॥

अस्मरदित्यन्वयः ॥ २५ ॥ कृष्टोपिसमाकृष्टोपिअयंलक्ष्मणःनचचालेत्यन्वयः । गिरिस्तनीपर्वतारूयस्तनवती महीभूः तदाआकर्षणसमयेचकंपेपिनाभूत भीतामहिलेवस्त्रीव ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सर्षपकल्पंसर्षपसमं अल्पंयथाभवातितथा क्रियाविशेषणमेतत्। सहस्रमूर्ध्नः अस्यलक्ष्मणांशिनःशेषस्य एकमूर्ध्निएकस्मिन्नेवशिरसिपातालादिकंसमलं
कांतं एतत्भूमंडलंब्रह्मांडमंडलंसर्षपकल्पं विभातिशोभतइत्यन्वयः तंतादृशंएनंलक्ष्मणं। प्रसह्यबलात्कृत्य कोनामहरेत् अपहरेत् नकोपीत्यर्थः ॥ २७ ॥
अभिनिष्पत्यअभ्यागत्य ॥ २८ ॥ परमोपकंठंपरमस्य श्रीरामस्य उपकंठंसमी[illegible] पोतंबालकं ॥ २९ ॥ उज्जहारउत्धृतवान् राहुमुक्तेंदुः राहुणामुक्तश्चं

भूमंडलंसर्षपकल्पमल्पं विभातिपातालसमेतमेतत् ॥ सहस्रमूर्ध्नोस्यबतैकमूर्ध्नि प्रसह्यकोनाम
हरेत्तमेनं ॥ २७ ॥ क्रुद्धोभिनिष्पत्यमरुत्तनूजः प्रोद्यम्यमुष्टिंप्रजहारचोग्रं ॥ सर्वैर्मुखैःशोणित-
मुद्गिरन्स पौलस्त्यपुत्रोमृतवत्पपात ॥ २८ ॥ सौमित्रिमार्तंपतितंविलोक्य प्रेमाकुलात्माप्रतिगृ
ह्यदोर्भ्यां ॥ निन्येहनूमान्परमोपकंठं मातेवतोकंजनकोपकंठं ॥ २९ ॥ स्पृष्ट्वाकराभ्यांकरुणाकर
स्तंमग्नंललाटेशरमुज्जहार ॥ सराहुमुक्तेंदुरिवार्तिमुक्तो रराजसौमित्रिरुदारकांतिः ॥ ३० ॥ अवा
प्यसंज्ञारवलंब्यधैर्यं सरावणोराघवमाससाद ॥ मदप्रमादप्रतिमुष्टदृष्टि मंतंगजःसिंहमिवाप्रस
ह्यं॥३१॥ भोगींद्रभोगप्रतिमंप्रदीप्तं संधार्यविस्फार्यधनुर्धुनानः॥ अविस्मितसुस्मितवानदीनां ज
दवाणींजगदेकनाथः ॥ ३२ ॥ स्वयंभुवंवाभुवनाभिपूज्यं स्वयंभवंवाशरणागतस्त्वं ॥ नमोक्ष्यसे
राक्षससर्वथापि कृतापराधःसमरोद्यमीस्याः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥

द्रइव ॥ ३० ॥ मदप्रमादप्रतिमुष्टदृष्टिः मदनिमित्तोयःप्रमादः तेनप्रतिमुष्टाऽपहृता दृष्टिर्ज्ञानंयस्यसतथोक्तः। मतंगजःगजः मतंगजोगजोनागइत्य
मरः ॥ ३१ ॥ भोगींद्रभोगप्रतिमं शेषशरीरसमं अहेःशरीरंभोगस्यादित्यमरः। धुनानःधुन्वन्अविस्मितः विस्मयरहितः अदीनांप्रौढां ॥ ३२ ॥ भ
वंशिवं स्वयमेवात्मानमेववानमोक्ष्यसे मुक्तोभविष्यसि हेराक्षस त्वंसमरोद्यमी युद्धार्थंसनद्धःस्याभव ॥ ३३ ॥ ॥ ॥ ॥ ॥

भूमौनतिष्ठशीघ्रं मयितिष्ठइत्यब्रतीत् ॥ ३४ ॥ॐमितितथास्त्विति तिमिरीचकार तिमिरेणांधकारेणावृतांश्चकारेत्यर्थः । द्राक्शीघ्रं ॥ ३५ ॥ संरंभसंभि
न्नमनाः कोपेनविदारितचित्तः अवर्धतअभिवृद्धमभूत् तैर्बाणैःप्राज्यैर्बहुभिः अग्नेस्तेजइवेसन्नयः ॥ ३६ ॥ प्रहस्यअपहासंकृत्वा प्रदरप्रदैः शरविशेषैः
प्रवेकशब्दउत्तमवाची तथोक्तं उन्मिषन्माणिप्रवेकनिष्काभरणाः सुवर्चसइति । सप्तीन्अश्वान् अतिचित्रंछत्रं हेतीःआयुधानि चिच्छेदतियोजना । ३७

एवंब्रुवाणंभुवनप्रभुंतं प्राभंजनिःप्रांजलिराबभाषे ॥ शत्रौरथस्थेसतिनाथभूमौ नातिष्ठशीघ्रंमयि
तिष्ठहीति ॥ ३४ ॥ ॐमित्यथोक्त्वापुरुषःपुराणः समारुतिंमंक्षुसमारुरोह ॥ सरावणोराघवमा-
प्यबाणै र्दिशोदशद्राक्तिमिरीचकार ॥ ३५ ॥ संरंभसंभिन्नमनादशास्यः शरान्मुमोचानिलनं-
दनाय ॥ हनूमतोवर्धततैःस्वतेजः प्राज्यैरिवाज्यैर्ज्वलतोमहाग्नेः ॥ ३६ ॥ प्रहस्यरामःप्रदरप्रवे-
कैः सप्तींश्चसूतंचनिहत्यसद्यः ॥ ध्वजंरथंछत्रमुतातिचित्रं चिच्छेदहेतीश्चदशाननस्य ॥ ३७ ॥
शरेणविध्वाविवशंविधाय शरीरयष्टिंशतमन्युशत्रोः ॥ चकर्तकार्तस्वरभास्वरंस रत्नंकिरीटंसुर-
कीर्त्यकीर्तिः ॥ ३८ ॥ तंनिर्विषाशीविषवद्विषण्णं कर्तव्यमूढंभगवान्बभाषे ॥ अनुज्ञयामेपुरस-
ज्ञयाहि शराहतोनन्वधुनाहिराजन् ॥ ३९ ॥ यथेष्टभोगाननुभुंक्ष्वशीघ्रं प्रेष्ठंजनंतोषयतोषणी-
यं ॥ अप्यप्रमत्तःकुरुसर्वकृत्यं रणायशीघ्रंमरणायचैहि ॥ ४० ॥ ॥ ॥ ॥

विधायकृत्वाशतमन्युशत्रोः इंद्ररिपोःरावणस्यचकर्तखंडितवान् कार्तस्वरभास्वरं सुवर्णवर्णवच्छोभमानं कार्तस्वरंचअतएवशोभमानमितिवा रत्नं-
रत्ननिर्मितं रत्नखचितमित्यर्थः । सुरकीर्त्यकीर्तिः सुरैःकीर्तयितुंयोग्या कीर्तिर्यस्यसतथोक्तः ॥ ३८ ॥ तंरावणं निर्विषाशीविषवत् विषरहितसर्पवत्
विषण्णंपरवशंगतसारमितिवा हेअज्ञमूढरावण याहिगच्छ ॥ ३९ ॥ प्रेष्ठंप्रियंतोषणीयं तोषयितुंयोग्यं एहिआगच्छ ॥ ४० ॥ ॥ ॥ ॥

निशम्यश्रुत्वा यातःमासः अनंतां बहुलां ॥ ४१ ॥ सरावणः इभराजः गजश्रेष्ठः अहिः सर्पः विहगेंद्रंगरुडं दशास्यःदेवर्मा[illegible] पां[illegible]
यः ॥ ४२ रामदेवः दशमुखविशिखैः रावणस्यबाणैः शिखिप्रकाशैःवन्हिसमैःअपरशरैः अपरेषांराक्षसानांशरैरपि पातितान्प्लवंगान निरस्त[illegible]

वाणीमुदारामितिराघवस्य निशम्ययातोनगरींदशास्यः ॥ स्मरन्नसह्यारघुनाथबाणां श्चिंतामनं
तांमनसाजगाम ॥ ४१ ॥ सवायसोहंसमिवातिमूढो मत्तोमहासिंहमिवेभराजः ॥ अहिर्विहंगेंद्र
मिवाभियुध्यन् देवंदशास्यःपरितापमाप ॥ ४२ ॥ दशमुखविशिखैःशिखिप्रकाशै रपरशरैरपि
पातितान्प्लवंगान् ॥ प्रभुरमृतमयैरपांगपातै रकृतनिरस्तरुजःसरामदेवः ॥ ४३ ॥ ॥
इति श्रीमत्संग्रहरामायणे युद्धकांडे रामांकेऽष्टमःसर्गः ॥ ८ ॥ ॥ ॥ ॥
श्रीः ॥ कुंभकर्णाग्रजःक्रुद्धः कुंभकर्णप्रबोधने ॥ रक्षसामयुतंभीम मादिदेशबलीयसां ॥ १ ॥
भेरीशंखादिवाद्यनां भूरिणांभूरिनिस्वनैः ॥ तेसन्नादैश्चयुगप प्रशेकुस्तत्प्रबोधने ॥ २ ॥ श्वासवे
गैःपतंतोस्य कृच्छ्रेणांतिकमागताः ॥ शैलैःखड्गाद्यायुधैश्च जघ्नुस्तेरावणानुजं ॥ ३ ॥ अंगेतु
गाद्रिसंकाशे खरैरुष्ट्रैर्गजादिभिः ॥ समंतात्परिधावंतो नहंतोनाप्यबोधयन् ॥ ४ ॥ केचित्केशा
न्परेश्मश्रून् लोमान्यप्युदमूलयन् ॥ शतकुंभैरथांभांसि सिंचंतिस्मास्यकर्णयोः ॥ ५ ॥ ॥

तरोगान् अकृतचकार ॥ ४३ ॥ ॥ इति युद्धकांडटीकायां अष्टमः सर्गः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ श्री ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ द्विसहस्रकरीरेषु सहस्रद्वयपरिमितघटेषु घटः करीरः कलशइत्यमरः ॥ वारुणींमद्यं ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

अप्रबुद्धंप्रयत्नेन संरंभात्तेनिशाचराः ॥ पुनरेवायुधैर्घोरैश्चिच्छिदुःक्रोधमूर्छिताः ॥ ६ ॥ नभतै
लैरयःपिंडैः शूलैःपार्ष्णिप्रदाहनैः ॥ अयोदंडविघातैस्ते बोधयंतोविचुक्रुशुः ॥ ७ ॥ अंगप्रवर्त
नेनास्य भंगमापुर्नराशिनः ॥ क्षिपद्भ्योहस्तपादेभ्यो रक्षांसिक्षयमाययुः ॥ ८ ॥ श्वासवातहताः
केचित् पतंतोव्यंगतांययुः ॥ निद्रावशोभुजेनैव कुंभकर्णोयुयोधतान् ॥ ९ ॥ पुनश्चभिद्यमानां
गः कथंचित्प्रत्यबोध्यत ॥ सजृंभमाणःसहसा प्रोत्थितोबुभुजेबहून् ॥ १० ॥ मांसराशीन्सरु
धिरान् पूर्वमेवोपकल्पितान् ॥ द्विसहस्रकरीरेषु पूर्णंपीत्वाथवारुणीं ॥ ११ ॥ ज्येष्ठेनप्रेषितःप्रा
या त्कुंभकर्णःसभातलं ॥ दशाननंवंदमानः कुंभकर्णोभ्यभाषत ॥ १२ ॥ त्रयाणांकतमंलोकं
संहरामिक्षणादिति ॥ नभयंलोकपालेभ्यो भयंतुनरवानरैः ॥ १३ ॥ रामःसलक्ष्मणोवध्य स्त्वये
त्यूचेसरावणः ॥ सकलंकलहस्याथ कारणंशुश्रुवानयं ॥ १४ ॥ कुंभकर्णोबभाषेथ नीतिमान्निश्वस
न्मुहुः ॥ रामेणामोघवीर्येण विग्रहोयमुपस्थितः ॥ १५ ॥ अचिरान्मरणायात्र नरकायपरत्रच ॥
बलिनासांधिरल्पस्य बलिनोल्पेनविग्रहः ॥ १६ ॥ औदासीन्यंसमेनस्या दितिशास्त्रविनिश्चयः ॥
अनयंत्वंसमाश्रित्य प्राप्तोरामेणविग्रहं ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

विग्रहःविरोधः ॥ १५ ॥ बलिनाबलिष्ठेनसह ॥ १६ ॥ अनयंअन्यायं ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शरएकोदहेद्यस्य त्रैलोक्यंसचराचरं ॥ कुंभकर्णगिरंश्रुत्वा रावणोवाक्यमब्रवीत् ॥ १८ ॥ त्वा
दृशैर्बंधुभिर्गुप्ता राजानःकिंनुकुर्वते ॥ पाल्योहंचत्वयावत्स त्वद्बलेनांकिमन्यथा ॥ १९ ॥ ज्येष्ठं
गुरुंकथंत्वंमा मवज्ञातासिमूर्खवत् ॥ अग्रजेनैवमुक्तःस विग्रहायोग्रमनसः ॥ २० ॥ त्रिशिखं
शूलमुत्धुन्व न्नुदतिष्ठत्सनिष्ठुरः ॥ मद्बंधुनिधनस्याद्य कृत्वानिष्कृतिमुत्तमां ॥ २१ ॥ प्रसादयेयं
राजंस्त्वां व्येतुतेह्हृदयज्वरः ॥ कबलंत्रितयार्थस्या त्कथंचिद्भुवनत्रयं ॥ २२ ॥ सप्ताब्धयोनु
पानार्थं इत्युक्त्वासययौयुधे ॥ एकाकिनानगंतव्यं सर्वैयामोवयंयुधे ॥ २३ ॥ सीताविलोभ्यामा
यामि रित्युवाचमहोदरः ॥ महोदरंविनिर्भर्त्स्य रावणंप्रतिनंदयन् ॥ २४ ॥ संपूजितोरावणेनः
प्रययौरावणानुजः ॥ सपंचयोजनोत्सेधं प्राकारमभिलंघयन् ॥ २५ ॥ निर्गम्यनगरात्तस्मा त्क
पिसैन्यमवैक्षत ॥ नानायुधबलावीरा नानावाहनसंस्थिताः ॥ २६ ॥ तमन्वयूराक्षसेंद्रा श्चतुरं
गबलैर्वृताः ॥ बहुयोजनविस्तीर्णं ततश्चाभ्यधिकोछ्रयं ॥२७॥ कालाब्दप्रभतनुं कालांतकयमो
पमं ॥ महाकटककोटीर केयूरादिविभूषणं ॥ २८ ॥ करौचपरिघाकारौ व्यापयंतौदिशोदश ॥
पादाभ्यामतिभीमाभ्यां दारयंतमिवावनिं ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

रिमितप्रमाणयुक्तं ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

३० ॥ व्याददानंविवृतंकुर्वाणं ॥ ३१ ॥ महाट्टहासप्रक्ष्वेलं महाट्टहासयुक्तं सिंहनादवंतं घनाघनघनस्वनं वर्षणशीलमेघध्वनिवद्ध्वनिं गर्जितं ... ध्यसतथोक्तः ॥ द्रुताःपलायिताः ॥ ३२ ॥ मनोमारुतरंहसं मनोवायुवत्वेगवंतं जंभारेरिंद्रस्यापि ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ...

वृत्ताभ्यांताम्रनेत्राभ्यां विसृजंतंमहानलं ॥ दंष्ट्राभ्यांक्षुरधाराभ्यां खंडयंतमिवाखिलं ॥ ३० ॥
महागुहावद्गहनं व्याददानंमहाननं ॥ ग्रसंतमिवलोकांस्त्रीन् भूरिसंरंभसंवृतः ॥ ३१ ॥ महाट्ट-
हासप्रक्ष्वेलं घनाघनघनस्वनं ॥ दुद्रुतावानराःक्षुद्रा करामःक्वचलक्ष्मणः ॥ ३२ ॥ आस्फोटय-
तामित्युक्का मनोमारुतरंहसं ॥ कुंभकर्णंतथादृष्ट्वा जंभारेश्चभयंकरं ॥ ३३ ॥ दुद्रुवुःकपिसंघा-
स्ते चापमुक्ताइवेषवः ॥ सेतुमत्यगमन्केचि त्केचित्सेतुमुपागमन् ॥ ३४ ॥ केचिन्निलीनाकृक्षे-
षु पतिताःकेचनाक्षितौ ॥ युवराजोंगदोदृष्ट्वा निजसैन्यंभयाकुलं ॥ ३५ ॥ नीलादीन्द्रवतःप्राचे
वीर्यौदार्ययुतंवचः ॥ भुवनानांप्रभौरामे नाथेस्मिन्नभयंकरे ॥ ३६ ॥ वानराःषंढतिलव त्कुतद्रु-
वतविक्लवाः ॥ इत्यंगदोदितंश्रुत्वा निवृत्यकपिपुंगवाः ॥ ३७ ॥ सालशैलशिलाहस्ताः कुंभक-
र्णमथाभ्ययुः ॥ कुंभकर्णानुगास्तूर्णं वानरानतुदन्शरैः ॥ ३८ ॥ कपयोद्विविदाद्यास्ता न्कुपि-
ताःसमसूदयन् ॥ तस्मैसालशिलाशैलान् वानराःप्रतिचिक्षुपुः ॥ ३९ ॥ कुंभकर्णांगसंगास्ते
चूर्णिताःपांसुपिंडवत् ॥ शतानिसप्तचाष्टौच सहस्राणिचवानरान् ॥ ४० ॥ युगपत्प्रतिनिक्षि-
प्य कुंभकर्णोन्यपातयत् ॥ षोडशाष्टौचदशच विंशस्त्रिंशत्तथापरान् ॥ ४१ ॥ ॥ ॥

रसतिलवत् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

खादंखादंभक्षयित्वाभक्षयित्वेत्यर्थः ॥ सकुंभकर्णः अभ्यापतितदर्शयेयं अभ्यापततितानभवानदर्शादृष्ट्वेत्यर्थः । [illegible] ॥ ४२ ॥ र
णरंगानुपातं रणरंगमनुपत्यानुपत्य रणरंगमत्यागत्याथितान् द्रुतवदंद्रुतानपलायितांश्चवानरानविदित्वाविदित्वातिष्ठतिस्म । [illegible]
तंरणरंगमनुपत्यानुपत्यवर्तमानः । क्षिपाक्षिप्त्वाक्षिप्त्वाभक्षयभक्षयित्वाभक्षयित्वापिदयापिद्वापिद्वादं चूर्णयेत्यर्थः । [illegible]

परिगृह्यस्वपाणिभ्यां खादंखादंस्वधावति ॥ अभ्यापतितदर्शंस निनायादर्शसकपीन् ॥ ४२ ॥
रणरंगानुपातंच द्रुतवेदंस्मतिष्ठति ॥ क्षिपभक्षयपिंड्ढोर्व्यां प्रतिदारयपातय ॥ ४३ ॥ वानरा
न्सनराहार इत्थंभूयोव्यनीनिशत् ॥ ततःशतबलिंश्वेतं संपातिपनसावपि ॥ ४४ ॥ उन्मुखान्
दुर्मुखमुखान् राक्षसोभक्षयत्कपीन् ॥ क्षणात्पिपेषपाणिभ्यां जयंतकुमुदावुभौ ॥ ४५ ॥ गजेंद्रा
स्फोट्ययुत्धार्थी ददर्शाशुदिशोदश ॥ गजंगवाक्षंगवयं वृषारव्यंगंधमादनं ॥ ४६ ॥ तारनील
नलान्योत्थृन् मुष्टिघातैरपातयत् ॥ युवराजयुतोराजा वीक्ष्यतंपृतनाक्षयं ॥ ४७ ॥ अभ्यधावद
तिक्रुत्धो जांबवांश्चपरैःसह ॥ सालशैलशिलावर्षं चक्रुस्तेकपयस्त्रयः ॥ ४८ ॥ चूर्णोबभूवुस्तस्यां
गे नैवाकंपतराक्षसः ॥ अथपर्वतमुत्पाट्य तस्मैचिक्षेपतापनिः ॥ ४९ ॥ तमेवाद्रिंकर्णिद्राक्
भकर्णोक्षिपत्धसन् ॥ तपनस्यसुतेतास्मि न्पतितेपर्वताहते ॥ ५० ॥ ॥ ॥

त्वापातयपातयित्वापातयित्वा व्यनीनिशत्विनाशयामास यद्वाक्षिपेस्यादिकंक्षिपतिक्षिपतीत्यादिप्रकारेणव्याकरणीयइति [illegible]
वाच्यः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ [illegible] अस्यकुंभकर्णस्य तापनिःसुग्रीवः ॥ ४९ ॥ [illegible] ॥ ५० ॥ ॥ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ श्रेयः उत्तमंमनः अभिप्रायः ॥ ५४ ॥ तुहिनांबुभिः हिमसलिलैः ॥ ५५ आसिच्यमानः अभिषिच्यमानः ॥ ५६ ॥ दशनैः दं

अंगदोजांबवांश्चैनं संक्रुधावभ्यधावतां ॥ तलताडनमात्रेण कुंभकर्णोनिपात्यतौ ॥ ५१ ॥ मूर्छितंद्रुतमादाय भास्कारिंराक्षसोययौ ॥ नयंतंकपियूथेशं प्रयांतंचनिजांपुरीं ॥ ५२ ॥ तंसूक्ष्ममक्षिकारूपः क्षिप्रंमारुतिरन्वगात् ॥ बाध्यतेचेदयंराजा मोचयेयंबलादिम ॥ ५३ ॥ स्वयंचेन्मोचयेच्छ्रेय इत्थंहनुमतोमनः ॥ विवेशाबिभ्रत्सुग्रीवं लंकांलंकेश्वरानुजः ॥ ५४ ॥ प्रहृष्टैराक्षसगणैस्तत्रतत्राभिपूजितः ॥ पूजयद्भिः कुंभकर्णं सगंधैस्तुहिनांबुभिः ॥ ५५ ॥ आसिच्यमानः सुग्रीवः शनैः संज्ञामवाप्तवान् ॥ कुंभकर्णस्यकर्णौस कराभ्यांतूर्णमाछिनत् ॥ ५६ ॥ नासिकांचाशुदशनैः सुग्रीवोथोत्पपातच ॥ संभ्रांतः कुंभकर्णोथ तलेनैनमताडयत् ॥ ५७ ॥ पिपेषचपुनः पृथ्व्यां सोंगुल्यंतरतोययौ ॥ अमोघंशूलमशनै रक्षिपद्राक्षसाधिपः ॥ ५८ ॥ कालदंडप्रचंडाभं कपिराजजिघांसया ॥ जग्राहहनुमान्मंक्षु खमाप्लुत्यमहायुधं ॥ ५९ जानुन्यस्यताछित्वा जहासचननादच ॥ ततः क्रुधः कुंभकर्णो मुष्टिमावृत्यसत्वरं ॥ विशालेप्रजहारोच्चै र्वायुनंदनवक्षसि ॥ ६० ॥ अचिंतयंस्तस्यपरंप्रहार नदन्हनूमान्प्रजहारचैनं ॥ तन्मुष्टिपिष्टः सपपातदुष्टो वज्रप्रभिन्नोद्रिरिवातितुंगः ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तैः ॥ ५७ ॥ सस्सुग्रीवः अंगुल्यंतरतः अंगुलीविवरेण अशनैः शीघ्रं ॥ ५८ ॥ मंक्षुशीघ्रंखं आकाशं ॥ ५९ ॥ छित्वाविभज्य ॥ ६० ॥ परंमहांतं ॥ ६१ ॥

संरंभनिर्यद्भ्रुकुटीकठोरः संरंभेणकोपेननिर्यत्यानिर्गछत्या भृकुट्याकठोरः दंडीदंडाख्यायुधयुक्तः ॥ ६२ ॥ निजघानांनिजघान निचिक्षेप रेपातयामास पिपेषचूर्णितवान् अकंप्यःअचाल्यः विगतानुकंपः निष्करुणःगामपिभूमिमपि ॥ ६३ ॥ निरीयुःनिर्गतान्यभूवुः स्रोतोभिःछिद्रदारैः ॥

संज्ञामवाप्याथचकुंभकर्णः संरंभनिर्यद्भ्रुकुटीकठोरः ॥ तुंगंगिरेःशृंगमथप्रगृह्य चचारदंडीवस दंडपाणिः ॥ ६२ ॥ जघासकांश्चिन्निजघानकांश्चि च्चिक्षेपकांश्चित्सपिपेषकांश्चित् ॥ कपीनकंप्यो विगतानुकंपः प्रकंपयन्ग्रामपिकुंभकर्णः ॥ ६३ ॥ तेभक्ष्यमाणाहरयोनिरीयुः स्रोतोभिरप्यस्य चरोमकूपैः ॥ सहस्रशःसाहसिनःपुनश्च तमेवहंतारुरुहुर्यथाद्रिं ॥ ६४ ॥ सरक्तगंधेनाविवृत्धद पैः प्रभक्षयन्राक्षसवानरौघं ॥ रघुप्रवीरंविभयोविधाव न्खानांपरेषांचभयंकरोभूत् ॥ ६५ ॥ वज्रो पमैर्बाणगणैरगण्यैः सौमित्रिरेनंप्राबिभेदवीरः ॥ अचिंतयंस्तान्प्रययौसुरारिः सृणिप्रहारानिवम त्तहस्ती ॥ ६६ ॥ क्षिप्रंचचिक्षेपसराक्षसेंद्रः शृंगंगिरेर्मंगलकीर्तनाय ॥ चिछेदतच्छीघ्रमतुछकीर्तिः ससत्वरंसप्तभिरेवबाणैः ॥ ६७ ॥ सरामबाणैरथभिन्नवर्मा रक्तंपिबन्राक्षसवानराणां ॥ सकोपमाटोपमुपाजगाम कपीन्विधुन्वन्मुहुरंगलग्नान् ॥ ६८ ॥ ॥ ॥ ॥ ॥

॥ ६४ ॥ सकुंभकर्णःरक्तगंधेनरक्तपरिमलेन विभयःनिर्भयःसन्नपि ॥ ६५ ॥ सृणिप्रहारान् सृणिप्रहारान् अंकुशप्रहारान् ॥ ६६ ॥ मंगलकीर्तिः अतुलकीर्तिःसरामः ॥ ६७ ॥ सकुंभकर्णःसकोपंकोपयुक्तं आटोपंपराक्रमं आटोपस्यान्यथावा[illegible] ॥ ६८ ॥ ॥ ॥

॥ ६९ ॥ महेंद्रभीमौ देवेंद्रस्यापि भयदौ ॥ ७० ॥ उल्लिखंतौ संस्पृशंतौ भियाभयेन अपयाता: विद्रुता: पुनः रुद्रभागमानाः [illegible] ॥
॥ ७१ ॥ सतां सालिकानां ॥ ७२ ॥ शरारोः हिंसनशीलस्य । शरारुर्हिंसकः । पांकइर्तिरत्नकोशः । कांडेन बाणवरेण महीं [illegible] ॥

एत्येहि किं ते कपिकालनेन नन्वस्मि देवारिनिषूदनोहं ॥ इति ब्रुवाणो भगवाननुल्कोसे [illegible]
सधनुः सधन्वा ॥ ६९ ॥ नाहं विराधो न खरो न काको नाम्नास्म्यहं राघव कुंभकर्णः ॥ बाहू [illegible]
महेंद्रभीमा वुक्वेति रामं सखलोभ्यधावत् ॥ ७० ॥ तौ कुंभकर्णस्य करावुदीर्णौ वृक्षौ [illegible]
मुल्लिखंतौ ॥ भियापयाता सहसोपयाता रामोहिनः पालक इत्युदीर्य ॥ ७१ ॥ देदीप्यमानानलस
न्निकाशैः सुवर्णपुंखैश्च सुपर्णवेगैः ॥ रामः शरौघैः प्रबिभेद शूरः सतां सुराणां द्विषतः शरीरं ॥ ७२ ॥
उद्यच्छतो मुद्गरमुग्रकीर्तिः कांडेन दोर्दंडमखंडयत्सः ॥ महीयसीं व्याप महीं स बाहु महामहीध्रच्छिखरो
पमानः ॥ ७३ ॥ उन्मूल्य सालं विपुलं परेण हस्तेन हस्तींद्रवदाद्रुतस्य ॥ पौलस्त्यपुत्रस्य परं च बा
हुं चिच्छेद तीव्रेण शरेण रामः ॥ ७४ ॥ उद्गर्जतोभिद्रवतः परस्य क्रोधाज्जिघांसोः प्रपदप्रहारैः ॥
संपूर्णचंद्राभमुखोर्धचंद्रं विमुच्य पादौ च चकर्त शत्रोः ॥ ७५ ॥ ते कौंभकर्णा भुवि हस्तपादा लोठं
तउच्चैः कठिनाद्रितुल्याः ॥ अनीकिनीं तां कपिराक्षसानां संक्षोभयन्नंबुनिधिं पुरं च ॥ ७६ ॥

॥ ७३ ॥ आद्रुतस्य अभ्यागतस्य ॥ ७४ ॥ प्रपदप्रहारैः पादाग्रप्रहारैः ॥ ७५ ॥ कौंभकर्णाः कुंभकर्णस्य विद्यमानाः ॥ ७६ ॥

अपूरि परितवान् ॥ ७७ ॥ ७८ ॥ त्रिलक्षमानः लक्षत्रययोजनोन्नतदेहपरिमाणवान् कुम्भकर्णः पूर्वं पुरैवदध्यै ॥ [illegible] ॥
वद्यइत्यर्थः ॥ ७९ ॥ अब्धौ पूर्वादिदिक्षुवि घ्नमानेलसुद्रे क्षौ ह्रदाहस्तौशिरः मध्यमदेशंचेति चतुरोवयवान् पतु समुद्रे [illegible] ॥

अहस्तपादोपिविवृत्यवक्त्रं महागुहाभंसरामुदग्रनादः ॥ अभ्यापतत्तंससितुंतदोग्रः शरैरपूरिस्त्रागु
रस्यवक्त्रं ॥ ७७ ॥ परेणघोरेणशरेणरामः स्वच्छेनचिच्छेदत्दधिशिरोस्य ॥ उदीतमेनंकुकुंडूमस्य
पतच्छिरोभूरिबिभेदभूमिं ॥ ७८ ॥ त्रिलक्षमानःखलुयोजनानां सकुंभकर्णोवदृधेपुरस्तात् ॥ सं
कोचमास्तोनगरींप्रवेष्टुं निषूद्यमानोववृधेपुरेव ॥ ७९ ॥ चिक्षेपतद्राक्षसदेहमब्धौ शरैःशरण्यो
जगतांसलीलः ॥ शरीरपातादुदगान्महाब्धि र्महाश्मपातादिवपल्वलांभः ॥ ८० ॥ करटकट
ककालंभीषणंप्राणभाजां भुवनभवनपूर्णं कुंभकर्णछलेन ॥ तिमिरमहरदेवंरामभानुःशरोस्रैः सु
रमुनिनिकरस्तंपूजयामासपुष्पैः ॥ ८१ ॥ इति श्रीसंग्रहरामायणे युद्धकांडेनवमःसर्गः ॥ ९ ॥
श्रीः ॥ रावणःपतितंश्रुत्वा भ्रातरंभ्रातृवत्सलः ॥ मुहुर्तंमूर्छितःप्राप्य मनीषांविललापसः ॥ १ ॥
हावत्सकुंभकर्णत्वं कुत्रयासिमयाविना ॥ अनुयास्याम्यहंचत्वां रामबाणाग्निदीपितः ॥ २ ॥ कु
लभूषणभूतोनः सत्यवादीविभीषणः ॥ मयाकामात्मनात्यक्तः सद्यःपश्यामितत्फलं ॥ ३ ॥ ॥

उद्गात्उद्रिक्तोभूत् ॥ ८० ॥ करटकटककालं काकसमूहवत् कृष्णवर्णं रामभानुः रामाख्यसूर्यः शरास्रैःशराख्यरश्मिभिः किरणोस्रमयूखांशुगभस्ति
घृणिरश्मयइत्यमरः ॥ ८१ ॥ ॥ इति युद्धकांडटीकायां नवमःसर्गः ॥ ९ ॥ ॥ ॥ ॥ श्रीः ॥ १ ॥ २ ॥ ३ ॥ ॥

॥ ४ ॥ परिवादः अपवादः ॥ ५ ॥ आभिचारं मारणप्रयोगं ॥ ६ ॥ शरबर्हिः शरास्त्यदर्भाणि शोणवासाः रक्तवस्त्रः बैभीतकेध्मवान् बिभीतकवृक्षसमिधं धनवान् कारस्करवृक्षेंधनवानित्यर्थः ॥ कार्ष्णायसस्त्रुवं कृष्णायोमयस्त्रुववान् छागंमेषं ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ आशीविषाकारैः सर्पाकारैः संख्य



विलपंतंविषण्णंत मवलोक्यसुरेंद्रजित् ॥ मेघनादोजगादोच्चै र्मेघसन्नादिनींगिरं ॥ ४ ॥ नरराज
सुताद्भीतो देवराड्जाजितःपिता ॥ माभूदित्थंपरीवादो मामादिशयुधेद्रुतं ॥ ५ ॥ इत्युक्त्वातात
माप्टच्छ्य सन्नद्धोयुद्धकर्माणि ॥ चकाररुद्रदैवत्य माभिचारंमहेंद्रजित् ॥ ६ ॥ शरबर्हिःशोणवा
सा वन्हौवैभीतकेध्मवान् ॥ कार्ष्णायसस्त्रुवंछागं सर्वकृष्णंजुहावसः ॥ ७ ॥ सहुत्वाथर्वणैर्मंत्रै
र्दिव्यंरथमधिष्ठितः ॥ गछन्गगनमार्गेण माययांतर्दधेखलः ॥ ८ ॥ सशरैरशनिप्रख्यै र्दिव्यै
र्नागास्त्रमंत्रितैः ॥ राघवौवानरास्तांश्च छादयामासराक्षसः ॥ ९ ॥ दिदृक्षमाणाःप्रक्षीणा राक्षसं
रूक्षविक्रमं ॥ क्षोभयंतोपिगगने नापश्यन्वानरारिपुं ॥ १० ॥ शरैराशीविषाकारै रसंख्यैःसं-
ख्यपंडितः ॥ रावणिर्द्रावयामास वानरांस्तान्महाबलान् ॥ ११ ॥ बध्वाशीविषपाशैस्तान् क-
पीन्सर्वान्सलक्ष्मणान् ॥ शक्रशत्रुःपुरींप्राप्य मुमुदेरावणान्वितः १२ ॥ नामोचयन्नागबंधा द्रा
ममारुतिलक्ष्मणाः ॥ देवगुह्यमनुस्मृत्य समर्थाअपिवानरान् ॥ १३ ॥ विद्धवद्बद्धवद्रामो मु
ग्धवत्क्षतजार्द्रवत् ॥ दर्शयामासपापानां मोहनायाखिलेश्वरः ॥ १४ ॥ ॥ ॥



पंडितःरणकुशलः ॥ ११ ॥ आशीविषपाशैःसर्पमयपाशैरित्यर्थः ॥ १२ ॥ देवगुह्यंदेवरहस्यं ॥ १३ ॥ १४ ॥ ॥ ॥ ॥ ॥

क्षतजार्दवत् रक्तसंसिक्तवत् । १४ । दर्शा अवस्थां ॥ १५ ॥ १६ ॥ आजानुनः जानुपर्यंतं आनाभेर्नाभिपर्यंतंहारगौरभाः हारवत् गौरकांतियुक्तः ॥ १७ ॥ अष्ट-

मायासीतामुपादाय राक्षस्योरावणाज्ञया ॥ अदर्शयन्दशामेना त्रिजटातामसांत्वयत् ॥ १५ ॥ शक्रारिणाशर्वबला त्पातितेषुकपिष्विति ॥ सप्तद्वीपवतींभूमिं कंपयन्वयुरावबौ ॥ १६ ॥ आजानुतःस्वर्णवर्ण आनाभेर्हारगौरभाः ॥ माणिक्यशोणआवर्णा दाकेशात्धरितप्रभः ॥ १७ ॥ नीलकेशोलसन्माल्य श्चारुचंदनचर्चितः ॥ अष्टभिर्भोगिभिःपुष्टे र्भूषितोमणिमौलिभिः ॥ १८ ॥ पत्राभ्यांचित्रवर्णाभ्यां मुंचद्भ्यांचसुधाकणान् ॥ कालयन्नागपूगंतं चारुचंचुसुलोचनः ॥ १९ ॥ ब्रुवाणोजयरामेति दृष्टःस्पष्टंप्लवंगमैः ॥ ववंदेपरमानंदं गरुडोगरुडध्वजं ॥ २० ॥ कालिताःकाद्रवेयास्ते पक्षवातेनपक्षिणः ॥ तद्दर्शनस्पर्शनाभ्यां वानराबालिनोभवन् ॥ २१ शुश्रूषांगरुडःकृत्वा राममामंत्र्ययातवान् ॥ सालशैलशिलाहस्ता उदगर्जन्प्लवंगमाः ॥ २२ ॥ आकर्ण्यकपिसिंहानां सिंहनादंभयानकं ॥ अस्त्रमोक्षविनिश्चित्य त्रस्तौरावणरावणी ॥ २३ ॥ अथर्वणाविधानेन हुत्वाहुतवहंमुहुः ॥ अदृश्योरथमध्यास्य ययावाकाशवर्त्मना ॥ २४ ॥ सशंभुवरतोगर्वात्पूर्ववत्सर्ववनरान् ॥ नागभोगैर्दृढंबध्वा रावणंरावणिर्ययौ ॥ २५ ॥ राक्षसेंद्रोमहेंद्रारि मभ्यनंदत्स्वनंदनं ॥ कृतकार्यंमहावीर्यं प्रशशंसचसादरं ॥ २६ ॥ ॥ ॥ ॥ ॥

भिःभोगिभिःअष्टमहानागैः ॥ १८ ॥ चारुचंचुःचतुरतुंडवान् ॥ १९ ॥ २० ॥ काद्रवेयाःसर्पाः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

॥ २७ ॥ अविपन्नः अमूर्छितः ॥ २८ ॥ विष्वकपरितः ॥ २९ ॥ ३० ॥ आरात्समीपेस्थिता ॥ ३१ ॥ सुप्रजाशोभनपुत्रवती येनहनूमता जीवति

जिज्ञासुःपुरिवृत्तांतं पूर्वयातोविभीषणः ॥ रणभूमिंतदाप्राप्तो ददर्शपतितान्कपीन् ॥ २७ ॥ अ
पश्यन्नुत्थितंकांचि द्राघ्यांरात्रिचरेश्वरः ॥ कोत्राविपन्नइत्युच्चै रुवाचजलदस्वनः ॥ २८ ॥ अह
मस्मीतिहनुमान् ब्रुवन्नुपससारतं ॥ अलातंभ्रामयंतौतौ कपीन्विष्वगपश्यतां ॥ २९ ॥ सुग्री-
वांगदनीलादीन् भग्नांगान्रुधिरोक्षितान् ॥ दृष्ट्वान्यांश्चोपययतु जांबवंतंविमोहितं ॥ ३० ॥
आश्वासयन्जांबवंतं अंबुसेकैर्विभीषणः॥किंजीवसीत्युवाचारा न्मंदंमंदंसचाब्रवीत् ॥ ३१ ॥ अं
जनासुप्रजायेन सकिंजीवतिपावनिः ॥ तस्मिन्जीवतिजीवामो मृतेतस्मिन्मृतावयं ॥ ३२ ॥ इ
त्युक्तऊचेपौलस्त्यः कस्मात्पृच्छसिमारुतिं ॥ नलक्ष्मणंनसुग्रीवं नांगदंमातिमान्निति ॥ ३३ ॥ इ
त्युक्तोब्रह्मजःप्रोचे हनूमान्यदिजीवति ॥ स्वतेजसापालयन्नो नास्त्यन्यःशक्तिमानिति ॥ ३४ ॥
आर्यजीवाम्यहमिति ब्रुवाणोवायुनंदनः ॥ उपसृत्यतमस्प्राक्षी च्छंकरेणस्वपाणिना ॥ ३५ ॥ अ
थाब्रवीद्ब्रह्मसुतो वत्सस्वज्ञातिवत्सल ॥ मृतंकपिकुलंरक्ष रामदासाग्रणीर्भवान् ॥ ३६ ॥ समी-
पेमेरुशैलस्य शैलोयोगंधमादनः ॥ तस्मादानीयतांशीघ्रं त्वयौषधिचतुष्टयं ॥ ३७ ॥ मृतसंजी
विनीमुख्या संधानकरणीपरा ॥ सवर्णकरणीचैव विशल्यकरणीतिच ॥ ३८ ॥ ॥ ॥

सति मृतेसति ॥ ३२ ॥ ३३ ॥ ३४ ॥ अस्प्राक्षीत स्पृष्टवान् शंकरेणसुखकरेण ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ॥ ॥ ॥

॥ ३९ ॥ ४० ॥ पल्लवावलिशालिनी पल्लवपङ्क्तिभिर्मनोहरा ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ असंगःकुत्राप्यस्थितः ॥ ४५ ॥ एनंगंधमादननामकं

इत्युक्तोहनुमान्नत्वा रामंरामप्रियामपि ॥ ववृधेपर्वताग्रस्थो द्वितीयइवपर्वतः ॥ ३९ ॥ अतुलं-
पुछमाविध्य कर्णावाकुंच्यपूर्णभाः ॥ धराधरमवष्टभ्य धीरोसावथपुप्लुवे ॥ ४० ॥ सप्तद्वीपवती-
पृथ्वी चकंपेतेनपीडिता ॥ शाखेवशाखिनःस्निग्धा पल्लवावलिशालिनी ॥ ४१ ॥ प्रासादशिखरा
दीनि लंकायांभंगमाययुः ॥ मारुतेःपातरभसा त्रिकूटेलोलितेतथा ॥ ४२ ॥ मृताःकेचित्परेमु-
ग्धा रुरुदूराक्षसाःपरे ॥ कर्तव्यमूढाअपरे लंकाकंपनकंपिताः ॥ ४३ ॥ सद्वितीयइवादित्य आ
दित्यपथमेयिवान् ॥ अतिदीर्घमथाकाशं हनूमानभ्यवर्धत ॥ ४४ ॥ योजनानामर्धलक्ष मतीत्या
यत्नतोद्रुतं ॥ असंगएकपातेन प्रापासौगंधमादनं ॥ ४५ ॥ औषधानिविलीनानि ज्ञात्वाक्रुद्धोम
रुत्सुतः ॥ गिरिमेवोज्जहारैनं शतयोजनमंडलं ॥ ४६ ॥ तंगिरिंकांचनमयं प्रतिदीप्तमहौषधं ॥
प्रतिगृह्यपपाताथ रामंरामप्रियाग्रणीः ॥ ४७ ॥ लीलयोल्लोलयन्नद्रिं कराग्रेकंदुकायितं ॥ विर-
राजवियत्येष वीरराजोजगत्त्रये ॥ ४८ ॥ निन्येनिमिषमात्रेण सयावद्गंधमादनं ॥ उदतिष्ठन्कपि
गणास्तावदोषधवायुना ॥ ४९ ॥ जीवनंछिन्नसंधानं विशल्यत्वंसवर्णतां ॥ चतुर्णामौषधानांते गं
धसामर्थ्यतोगमन् ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४६ ॥ ४७ ॥ उल्लोलयन्उच्चालयन् ॥ ४८ ॥ ४९ ॥ छिन्नसंधानंछिन्नमांसमेलनं विशल्यत्वंशरीरात् शरफलराहित्यं ॥ ५० ॥

असौहनूमान दैवतशात्रवाणांदेवशत्रूणांभयंकरो भूदित्यन्वयः । महत्वमानवभीयद्वाप्राक्पूर्वं अमानितिनिविक्रमांवक्षेपणेन ॥ ५१ ॥ अ...
मासुः ॥ ५२ ॥ समधिकपरिरब्धः सम्यगतिदृढंपरिरब्धः आलिंगितः स्तुवदमरविमुक्तैः स्तुवंतोयेअमरः तैर्विमुक्तैः अभिवृष्टैः क्षेपणेनैव...

सदेवतानामभयं करात्माभयंकरोदैवतशात्रवाणां ॥ बभौगिरिंबिभ्रदसौ हनूमान्त्रिविक्रमश्च
क्र धरांयथाप्राक् ॥ ५१ ॥ सौमित्रिसुग्रीवविधातृनंदना आनंदिनःसांगदनीलपूर्वकाः ॥ धरा-
धरेंद्रंदधतंतमर्चयन् धरांदधानंविबुधायथाहरिं ॥ ५२ ॥ समधिकपरिरब्धोरामदेवस्य दोर्भ्यां
स्तुवदमर विमुक्तैर्भूषितःपुष्पपूगैः ॥ समरभुविसतिष्ठन्क्षेपणेनैवचक्रे पवनतनयएनंपूर्ववत्पर्व
तेंद्रं॥ ५३ ॥ इति श्रीसंग्रहरामायणे युत्धकांडे रामांके पंडिताचार्यकृतौ दशमःसर्गः ॥ १० ॥
श्रीः ॥ उत्थितैरुत्धतैर्वीरै रुल्बणैःसर्ववानरैः॥ सिंहनादःकृतोघोरः सद्योलंकामकंपयन् ॥ १ ॥
रावणस्यानियोगेन रावणिपुनरुत्कटः॥ निर्ययौरथमध्यास्य तर्पयित्वाहुताशनं ॥ २ ॥ शर्वशंभु
वराद्दर्वी पूर्ववत्सर्ववानरांन् ॥ बबंधनागैरिंद्रारि स्तंनसेहेथलक्ष्मणः ॥ ३ ॥ रामानुजोब्रवीद्रामं
देवाहंत्वत्प्रसादतः॥ सूदयिष्यामिशक्रारिं ब्रह्मास्त्रेणक्षणादिति ॥ ४॥ भयाददद्येब्रह्मास्त्रं नमो
क्तव्यंविपश्चिता ॥ हन्यांशरेणशक्रारिं इतिरामोब्रवीदिदं ॥ ५ ॥ रामोगरुडमारुत्यो र्बलंदर्श-
यितुंपुरा ॥ अस्त्रबत्धवदास्तेस्म तदोग्रंशरमाददे ॥ ६ ॥ अद्राक्षीन्मामयंरामो घोरशक्तिरिति
स्मरन् ॥ पलायितःप्राणभया द्रणंत्यक्त्वासरावणिः ॥ ७ ॥ ॥ ॥ ॥ ॥

पर्णनैव ॥ ५३ ॥ इति युत्धकांडटीकायाम् दशमःसर्गः ॥ १० ॥ ॥श्रीः ॥१॥२॥३॥४॥५॥६॥ अद्राक्षीत्दृष्टवान् । पलायितःपलायनमकरोत् ।७।

अस्ताविस्तुतोभूत् ॥ ८ ॥ अबूबुधत्बोधयामास । संज्ञावंतश्चकारेत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ हरिसंकाशाः सूर्यसदृशकांतियुक्ताः सदृशाजत् ॥१२॥

जयदेवत्रिलोकैक भूषणारिविभीषण ॥ इतिदेवस्तदास्तावि देवैरिंद्रारिकालनः ॥ ८ ॥ मृतको
पममालोक्य स्वसैन्यंकरुणाकरः ॥ ज्ञानास्त्रेणज्ञानमूर्तिः क्षणमात्रादबूबुधत् ॥ ९ ॥ उत्तस्थुरुन्न
दंतस्ते सालशैलशिलाधराः ॥ हनूमंतंपुरस्कृत्य लंकामभ्यद्रवन्रुषा ॥ १० ॥ रावणस्यानियो-
गेन रावणिःपुनरुत्कटः ॥ ससैन्यःपश्चिमद्वारे रथीधन्वीविनिर्ययौ ॥ ११ ॥ हर्योहरिसंकाशाः
युयुधुःशक्रशत्रुणा ॥ सृष्ट्वास्वमाययासीता कृतिंतांनिजघानसः ॥ १२ ॥ दुःखाज्ञानविहीनोपि
रामःस्वानंदवारिधिः ॥ दर्शयामासदुःखाढ्यं नटवत्पटुचेष्टितः ॥ १३ ॥ शतक्रतोरिपुजना न्ह-
त्वामारुतिरुद्धतः ॥ प्रचंडगंडशैलेन द्रावयामासरावणिं ॥ १४ ॥ भग्नदर्पोहनुमता जंभारि
द्विट्निकुंभिलां ॥ प्राप्यहोतुंहुतवहं चक्रेपरममुद्यमं ॥ १५ ॥ बिभीषणोब्रवीद्रामं रावणिर्वध्य
तांद्रुतं ॥ कृतहोमोह्यवध्यःस्या द्ब्रह्मणोयंवरादिति ॥ १६ ॥ महेंद्रारिंजिघांसंतं लक्ष्मणंलक्ष्म
णाग्रजः ॥ आदिदेशहरींद्रांश्च समारुतिविभीषणान् ॥ १७ ॥ पराकृतंनीचवृत्तिं रावणिंकूट
योधिनं ॥ आजिघांसुःस्वयंरामः प्रेषयामासलक्ष्मणं ॥ १८ ॥ प्राप्तानिकुंभिलोपांते सोविभीषण
नीततः ॥ निजघ्नूरक्षसांसैन्यं नियुक्तंशक्रशत्रुणा ॥ १९ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ जंभारिद्विट् इंद्रजित् निकुंभिलां निकुंभिलानामकप्रदेशविशेषं ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ ॥ ॥

॥ २० ॥ बहुहेलनैः बहुविधाभिरवज्ञाभिः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ आखंडलशत्रुः इंद्रशत्रुः षंढकः नपुंसकः ॥ २८ ॥



ऋक्षवानरवीराणां वृक्षशैलप्रहारतः ॥ लक्ष्मणश्चशरैश्चोग्रै रक्षसामभवत्क्षयः ॥ २० ॥ तेवि-
भीषणसौमित्र्यो र्वाक्यतःकपयोरिपोः ॥ होमविघ्नंस्फुटं चक्रु र्हसंतोबहुहेलनैः ॥ २१ ॥ कपि-
भिःकोपितस्तत्र रावणीरणदुर्मदः ॥ सालजालादथोत्पत्य रथीधन्वीव्यदृश्यत ॥ २२ ॥ रक्ता-
स्यनयनःक्रुद्धो भिन्नांजनचयोपमः ॥ कपीनद्रावयंबाणै र्दंडपाणिरिवापरः ॥ २३ ॥ कपीनां-
कालनंदृष्ट्वा कुपितोमरुतात्मजः ॥ राक्षसीमक्षिणोत्सेनां वृक्षवर्षैर्निरंतरैः ॥ २४ ॥ जाज्वल्यमा
नंकोपेन कालज्वलनसप्रभं ॥ अभ्यद्रवत्प्रनमंतं शरवर्षेणरावणिः ॥ २५ ॥ परश्वधान्पट्टिशां-
श्च खड्गानन्यायुधान्यपि ॥ क्षणमात्रेणचिक्षेप शक्रशत्रुर्हनूमते ॥ २६ ॥ यद्यदात्युधमयुधं प्रा
क्षिपद्राक्षसात्मजः ॥ तत्छित्वादायहस्तेन हनूमान्हासितोब्रवीत् ॥ २७ ॥ यद्यखंडलशत्रुस्त्वं षं
ढकोनासिवायदि ॥ एत्यैहिमारुतिकरा ज्जीवन्यावन्नमोक्ष्यसे ॥ २८ ॥ बाहुभ्यागथवाणैर्वा मा
ययावाप्यमायया ॥ मद्वेगंसहसेचेत्वं कीर्तिपूर्वामवाप्स्यसि ॥ २९ ॥ तस्येत्युक्तैर्नृवाणस्य बलं
जानन्बलारिजित् ॥ अपक्रम्याभिमुखतः प्रययावपरान्युधे ॥ ३० ॥ एतस्मिन्नंतरेस्माह लक्ष्म
णंसविभीषणः ॥ त्वरस्वहंतुमिंद्रारिं पुराकर्मकृतेरिति ॥ ३१ ॥ ॥ ॥ ॥



॥ २९ ॥ बलारिजित् इंद्रजित् अपक्रम्य अपसृत्य ॥ ३० ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अभ्यद्रवच्छक्रजितं सौमित्रिःसविभीषणः ॥ मंडलीकृतकोदंडो मंडयन्कपिमंडलं ॥ ३२ ॥ ज्ञा-
तीन्संत्यज्यनीचांस्त्वं पितृव्यकथमाश्रितः ॥ इत्यब्रवीदिंद्ररिपुः प्रहसंस्तंविभीषणं ॥ ३३ ॥
पुत्रयूयंनराक्षिणां नीचानांसख्यमाप्स्यथ ॥ अहंविश्वेशदासःस्या मित्यूचेतंविभीषणः ॥ ३४ ॥
लक्ष्मणस्त्वंमुमुर्षुश्चे त्तिष्ठगच्छनचेदिति ॥ उवाचाथधनुर्धुन्वन् रावणीरामसोदरं ॥ ३५ ॥ वाचा
मायाविनांवीर्यं वीराणांकर्मणाननु ॥ क्लीबातिष्ठक्षणमिति स्पष्टमाचष्टलक्ष्मणः ॥ ३६ ॥ अवि-
ध्यत्पंचविंशद्भि र्विशिखैरथलक्ष्मणं ॥ पौलस्त्यमष्टादशभि र्नदन्पौलस्त्यनंदनः ॥ ३७ ॥ पुनः
शरशतेनाशु शक्रशत्रुर्विदार्यतौ ॥ उवाचपरुषंवाक्यं ततश्चुक्रोधलक्ष्मणः ॥ ३८ ॥ सौमित्रिः
पंचनाराचा नमित्रोरस्यमोचयत् ॥ त्रीन्बाणानुल्बणास्तस्मै व्यमुंचद्रावणात्मजः ॥ ३९ ॥ ध-
रायांधन्विनांश्रेष्ठौ वरिष्ठावस्त्रवेदिनां ॥ चिरंचित्रंयुयुधतु स्तौरामानुजरावणी ॥ ४० ॥ ततः
शरशतेनाशु शक्रशत्रुंसलक्ष्मणः ॥ अदारयदुदारात्मा विपण्णोभूत्सरावणिः ॥ ४१ ॥ इदमंत
रमिंद्रारे र्वधायाशुप्रयत्यतां ॥ इत्यूचेनीतिसंपन्नो लक्ष्मणंसविभीषणः ॥ ४२ ॥ ससौमित्रिरमि
त्राय शरान्शिखिशिखोपमान् ॥ मुमोचसदृढंविद्धो मूहूर्तंमूर्छितोभवत् ॥ ४३ ॥ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ कृतप्रतिकृतोदारौकृतस्यप्रतिकरणेउदारौ समर्थौ ॥ ४८ ॥ अतिशिश्याते अतिशयितवंतौ ॥ ४९ ॥ धातुना धातु



संज्ञामवाप्येंद्ररिपुः कोपसंरक्तलोचनः ॥ तूर्णंशरशतंतस्मै लक्ष्मणायमुमोचसः ॥ ४४ ॥ पुनः
शरशतेनाशु निर्बिभेदविभीषणं ॥ वानरांश्चनराशेंद्रः शरैराशीविषोपमैः ॥ ४५ ॥ प्रहस्यलक्ष्म
णोवीरो नैतत्किंचिदितिब्रुवन् ॥ शरैर्विदारयामास कवचंशक्रवैरिणः ॥ ४६ ॥ शूरःशरसहस्रे
ण मेघनादोपिलक्ष्मणं ॥ आविध्यत्तस्यकवचं संछिद्यापातयद्भुवि ॥ ४७ ॥ दिशोदशशरव्रातै
श्छादयामासतुस्तदा ॥ कृतप्रतिकृतोदारौ तौरामानुजरावणी ॥ ४८ ॥ सौष्ठवेलाघवेवीर्ये शौ
र्येवेगेपराक्रमे ॥ अन्योन्यमितिशिश्याते धन्विनांप्रवरावुभौ ॥ ४९ ॥ रक्तौरक्तेनमहता धातुने
वधराधरौ ॥ अयुध्यतामस्त्रशस्त्रै रस्त्रशास्त्रविशारदौ ॥ ५० ॥ अस्मिन्हतेहतंसर्वं रावणस्यातुलं
बलं ॥ चरध्वंहरयोयोद्धु मित्युवाचविभीषणः ॥ ५१ ॥ विभीषणस्यवचनात्कपयोजांबवन्मु
खाः ॥ दंतैर्नखैश्चवृक्षैश्च रक्षसांक्षयमानयन् ॥ ५२ ॥ विभीषणस्यानुचरा विभीषणउतस्वयं ॥
भीषणांविदधुर्युद्धं भीषणैरिंद्रजिद्भटैः ॥ ५३ ॥ रक्षसांविक्रमंवीक्ष्य भीमःप्राभंजनिःप्रभुः ॥ सा
लेनतान्जघानोग्रान् सौमित्रेर्बृंहयन्बलं ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥

रसेन धराधरौपर्वतौ ॥ ५० ॥ अतुलं बहलं ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वाहानहयाम् करालानक्रूरान् कालवर्चसः नीलवर्णान् ॥ ५५ ॥ पदातिः पादचारी रथादिरहित इत्यर्थः ॥ ५६ ॥ रणाजिरं रणांगणं ॥ ५७ ॥

चतुर्भिश्चतुरोवाहान् करालान्कालवर्चसः ॥ शरैर्विव्याधसौमित्रिः सूतंचान्येनवैरिणः ॥ ५५ ॥
ववर्षाथोल्बणान्बाणान् पदातीरावणात्मजः ॥ शरैरशनिकल्पैस्तं लक्ष्मणःशममानयत् ॥ ५६ ॥
मंडोदरीसुतश्चंडो विरथःपुरमाविशत् ॥ रथमारुह्यसंनद्धः पुनरागाद्रणाजिरं ॥ ५७ ॥ सराव
णिर्बाणगणैर्निशातैः प्लवंगमान्भंगमुपानिनाय ॥ चिच्छेदरामावरजःशरेण शक्रद्विषःकार्मुकमु-
ग्रकर्मा ॥ ५८ ॥ क्षणेनचापांतरमाददेस क्षणेनचिच्छेदसलक्ष्मणस्तत् ॥ वक्षोविपक्षस्यबिभेदः
चाशु सपंचभिःपत्रिभिरत्रवीरः ॥ ५९ ॥ वर्मंश्चरक्तंशतमन्युशत्रु श्चापांतरेणेषुगणान्ववर्ष ॥
छित्वैवतांस्तस्यचवर्मचहत्वा जघानसौमित्रिरमित्रसूतं ॥ ६० ॥ विनापिसूतंपटुतोस्यवाहा नवि
भ्रमल्लक्ष्मणउग्रबाणैः ॥ नभेत्तुमीशःकवचंसुरारे र्बिभेदबाणैरथतल्ललाटं ॥ ६१ ॥ ललाटमस्या
शुसलक्ष्मणस्य बिभेदबाणैरशनिप्रकाशैः ॥ भिन्नाखिलांगाविषुभिःसरक्तौ तौरेजतुःपुष्पितकिं-
शुकाभौ ॥ ६२ ॥ विभीषणोयेषमुमोचबाणां स्त्रीनेकमेकंहरिपुंगवेभ्यः ॥ विभीषणोश्वान्यहन-
त्सुरारेः शक्तिंपितृव्यायमुमोचपुत्रः ॥ ६३ ॥ चिच्छेदसौमित्रिरमोघशक्तिं विभीषणश्चेषुभिरद्र
यत्तं ॥ यमेनदत्तंप्रमुमोचबाणं विभीषणंहंतुमथैंद्रवैरी ॥ ६४ ॥ ॥ ॥ ॥ ॥

॥ ५८ ॥ विपक्षस्य शत्रोः ॥ ५९ ॥ चापांतरेण अन्यचापेन ॥ ६० ॥ अविभ्रमत् भ्रामयामास ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ॥

संहत्यपरस्परं संताड्य कौभूमौ ॥ ६५ ॥ निरास निराकृतवान् अदइति अदस शब्दस्य नपुंसकाद्वितीयैकवचनरूपमेतत् ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥
आखंडलारातिशिरः इंद्रशत्रुशिरः कांडवरेणबाणोत्तमेन भू धरवत् पर्वतवत् ॥ ७० ॥ क्रव्य भुजः राक्षसाः अस्तारिं निरस्त शत्रुं ॥ ७१ ॥ इंद्रारिश

कुबेरदत्तंप्रमुमोचबाणं सलाघवोराघवसोदरोथ ॥ शरौज्वलंतौज्वलनप्रकाशौसंहत्यतौव्योम्निनिपेततुःकौ ॥ ६५ ॥ सलक्ष्मणोमुंचतवारुणास्त्रं निरासरौद्रेणसमेघनादः ॥ आग्नेयमस्त्रंमुमुचेसुरारिः सौरेणसौमित्रिरदोनिरास ॥ ६६ ॥ अथासुरास्त्रंसुरशत्रुरुग्रं मुमोचनानायुधवर्षभीमं ॥ महेश्वरास्त्रेणमहामनस्वी तल्लक्ष्मणोस्त्रंप्रतिसंजहार ॥ ६७ ॥ सुराःपुरस्कृत्यपुरंदरंखे तस्थूरणंचित्रमवेक्षमाणाः ॥ स्वस्त्यस्तुरामानुजतेसुरारिं विनाशयेतिप्रवदंतउच्चैः ॥ ६८ ॥ दिव्यंपुरासादितदैत्यचक्र माकृष्यचाकर्णतउग्रवीर्यं ॥ रामोभिरामोजयतात्युदीर्य रामानुजोबाणवरंमुमोच ॥ ६९ ॥ आखंडलारातिशिरःप्रचंड मुत्खंडितंकांडवरेणतेन ॥ समंडितंकुंडलमंडलाभ्यां भूमंडलेभूधरवत्पपात ॥ ७० ॥ तस्मिन्हतेतत्रहतावशिष्टाः प्रदुद्रुवुःक्रव्यभुजोतिभीताः ॥ हरिप्रवीराहनुमत्पुरोगाः सौमित्रिमस्तारिमपूजयंस्ते ॥ ७१ ॥ दिनैस्त्रिभिस्तत्रदिवानिशंच युध्वाहतेराक्षसराजसूनौ ॥ इंद्रादिदेवावरपुष्पवर्ष मिंद्रारिशत्रौविदधुर्नदंतः ॥ ७२ ॥ रामाभ्याशंप्राप्यरामानुजन्मा साकंवायोःसूनुनातंववंदे ॥ सांद्रानंदोमंदहासीमुकुंदस्तं सौमित्रिंलालयन्नालिलिंगे ॥ ७३ ॥

॥ इति श्रीसंग्रहरामायणे युद्धकांडे रामांके एकादशःसर्गः ॥ ११ ॥ ॥ ॥ ॥

त्रौलक्ष्मणे ॥ ७२ ॥ रामा भ्याशं रामसमीपं रामानुजन्मा रामानुजः तंरामं ॥ ७३ ॥ इति युद्धकांड टीकायां एकादशः सर्गः ॥ ११ ॥ ॥

॥ श्रीः ॥ १ ॥ व्यलपत विललाप नौ आवां ॥ २ ॥ आयातप्राप ॥ ३ ॥ ४ ॥ कल्लोलकल्पैः महातरंगसमानैः ॥ प्लवंगतरंगा भतुरंगतुंगः तरंगा
भाः तरंगसदृशाः नृत्यंतोयेतुरंगाः तैरुन्नतः । रथाख्ययादो भरितः रथनामकजलजंतुसंपूर्णः । बलार्णवः बलाख्यसमुद्रः ॥ ५ ॥ जाज्वल्यमानोज्वल
हेतिलीलः अत्यंतप्रज्वलदुज्वलायुधानां लीलायुक्तः । धूमायमानो द्धतधूलिधूम्रः धूमायमानाभिरुद्धताभिरभिहद्धाभिरुद्धताभिर्धूलिभिः । धूलिभिः

श्रीः॥ भूयानभूद्राघवसैनिकानां मोदश्चमोदप्रभवश्चरावः॥ ततोपिभूयान्पुरिराक्षसानां शोकश्च
शोकप्रभवश्चरावः ॥ १ ॥ मृतंनिशम्यैंद्रजितंसुतंस्वं प्राणोपमानंव्यलपद्दशास्यः ॥ हावत्सनौत्वं
पितरौविहाय मृतोसिदेवेंद्रजयिन्वतेति॥ २ ॥ पुनश्चशोकंद्विगुणंप्रयातो जिघांसुरायात्छलमैथि
लीसः ॥ व्यक्तंसु ।श्वेनानिवारितोथ संमंत्रयामाससभामवाप्य ॥ ३ ॥ त्रिंशत्सहस्राणिमहौघ-
कानां अक्षौहिणीनामपिषट्सहस्रं॥समादिदेशाशुरणाययास्यन् सरक्षसांराक्षसयूथनाथः॥४॥क
ल्लोलकल्पैःकारिभिःपरीतैः स्त्वंगत्तरंगाभतुरंगतुंगः ॥ रथाख्ययादोभरितोभिपेदे बलार्णवोराघ-
ववाडवाग्निं॥ ५ ॥जाज्वल्यमानोज्वलहेतिलीलो धूमायमानोत्धतधूलिधूम्रः ॥ विसृत्वरःसैन्य-
महौघसंघः सांवर्तकोवन्हिरिवोददीपि ॥ ६ ॥ उन्मूलयंतीसकलांश्चसालान् निमीलयंतीसकलां
श्चलोकान् ॥ सावाहिनीवानरवाहिनींद्रान् चिक्षेपवात्येवविशीर्णपर्णान् ॥ ७ ॥ ॥ ॥

धूम्रः मिश्रवर्णः विसृत्वरः जगव्द्यापनशीलः सांवर्तकः प्रलयकालेविद्यमानः उददीपिजज्वाल ॥ ६ ॥ उन्मूलयंती विनाशयंती निमीलयंती चक्षु-
र्निमीलनंकारयंती। वात्येव चक्रवातइव ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सैन्यप्रभवः सेनानीपतयः ॥ ८ ॥ तरंगिणीतुंगतरंगलोल पलांडुवत् तरंगिण्याः नद्याः तुंगाः उन्नता। येतरंगाः तेषुलोलाश्चंचलाः यंपलांडवः शुष्का लांबुनितद्वत् ॥ ९ ॥ परा भाव्य विजित्य सासेना शल भावलीव पतगपङ्क्तिरिव समीपतंग शल भाावसमरः ॥ १० ॥ ११ ॥ सासेना बालाः एका

छिन्नेषुभिन्नेषुनिपातितेषु विद्रावितेष्वाकुलितेषुभूयः ॥ सैन्येषुसैन्यप्रभवोऽप्ययुध्यन् सुग्रीवनीलां गदपूर्वकांस्तान् ॥ ८ ॥ वराद्विरिंचस्यपरैरजेयां सर्वैरवध्यांचचमूंप्रयुध्य ॥ तरंगिणीतुंगतरंगलोल पलांडुवन्नास्थिरतांययुस्ते ॥ ९ ॥ पराक्रमंक्रूरतरंविधाय परान्पराभाव्यवराद्रशक्तेः ॥ रामंययौरावणवाहिनीसा ज्वलंतमग्निंशलभावलीव ॥ १० ॥ अथेषुभिःपट्टिशभिंडिपालैः शक्त्या शतघ्नीपरिघैश्चशूलैः ॥ गदासिभिस्तोमरसायकाद्यैर्युयोधरामंविविधायुधैश्च ॥ ११ ॥ कश्चिद्वदन्जेष्यतिरामएको रामोजयेद्देवरिपून्प्रवीरः ॥ विश्वेश्वरःक्रीडतिसेनयेति बालाःसमाभूरिधियोऽप्यवोचन् ॥ १२ ॥ आदायकार्तस्वरभास्वरंस चापंचकारप्रभुराशुसज्जं ॥ विष्फारशब्देनसुरासुराणां मुद्घोषयामाससुखासुखेच ॥ १३ ॥ सुवर्णपुंखानतितीव्रधारा नक्षीणपक्षान्नतपर्वणोथ ॥ बाणासनेबाणगणानगण्यान् संधायसंधायमुमोचरामः ॥ १४ ॥ कंठेषुघंटाघटितेषुकांश्चित् करेषुकांश्चिच्चरणेषुचान्यान् ॥ मदोत्कटानापततःक्षुरप्रैश्चकर्तकर्ताजगतांगजेंद्रान् ॥ १५ ॥

रामः रिपून्जेष्यति कश्चिदित्यवोच नसमाः मध्यमाः प्रवीरोनिपुणोरामः जयेद्देवेत्यवोचन् भूरिधियः उत्तमाधिकारिणः पुरुषाः विश्वेश्वरोरामः सेनयाक्रीडतीत्यवोचन्नित्यन्वयः ॥ १२ ॥ १३ ॥ अक्षीणपक्षान्दृढगरुद्भिर्युक्तान् ॥ १४ ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अविषादिनःनिर्भयान् निषादिनःगजारोहान् हस्त्यारोहानिषादिनइत्यमरः ॥ संयतियुद्धे सादिनःअश्वारोहान् नाकाधिरोहान् स्वर्गमधिरूढान्पुरुषान् ॥ १६ ॥ १७ ॥ धृतखड्गखेटां धृतखड्गसमूहां निरासनिराचकार॥ १८ ॥ १९ ॥ इषोःसंधानंइषुसंधानानंतरं धनुषआकर्षणं इषोर्विमोक्षंविसर्जनं इषोःआदानंउपादानं एवंअपदानंपराक्रमः अपदानंतिर्यग्दानं तिर्यक्प्रयोगंवा । विवेकहीनमिति क्रियाविशेषणं ॥ विभ्रांतचक्रारवत् विभ्रां

श्रियाप्रदीप्तानविषादिनोत्र निषादिनःसंयतिसादिनश्च ॥ अपातयत्तान्सहसाचदेवो नाकाधिरोहानिवपुण्यनाशे ॥ १६ ॥ अलंघनीयांविमलांविशालां वेलामिवानंतशरावलींतां ॥ अभ्याप तंतीप्रययौक्षणेन भंगंतुरंगाख्यतरंगमाला ॥ १७॥ पदातिपंक्तिंद्रुतमापतंतीं पतत्रिवेगांधृतखड्गखेटां ॥ निरासरामोबहुबाणवर्षै र्वर्षैर्महामेघइवोरुधूलिं॥ १८ ॥ युद्धेसमृद्धेकृतविक्रमाणां पुरामुहुर्दारितदैवतानां ॥ महारथानांमधुजिच्छिरांसि चकर्तभल्लैश्चलकुंडलानि ॥ १९ ॥ संधानमाकर्षमिषोर्विमोक्ष मादानमीशस्यतथापदानं ॥जनोविवेकीचविवेकहीनं विभ्रांतचक्रारवदीक्षते स्म ॥ २० ॥ सयोगपद्येनशतंसहस्रं लक्षंचसाक्षादविलक्षएव ॥ कोटिंचखर्वंचतथामहौघं मुंचन्निषूनेषरिपून्जघान ॥२१॥ अपांगमात्रेणजगन्नियंता नन्वेकरूपोपिरिपून्सहन्यान् ॥ स्वैश्वर्यमेवंचनिदर्शयान्हि सविश्वरूपोकृतविश्वरूपं ॥ २२ ॥ रामोधरण्यांगगनेचरामो रामोंतिकेदूरतरेचरामः ॥ रामोविपक्षेस्वबलेचरामः सर्वत्ररामःकथमीनरामः ॥ २३ ॥ ॥ ॥

तंयच्चक्रंतद्यथाविवेकहीनंस्यात् तस्यअरवत्तद्ळवत् परिभ्रामितचक्रदळसमं यथाभवतितथेत्यर्थः॥ २० ॥ योगपद्येनएकवारमेव अविलक्षएवलक्ष्यमप्यमुंचन्नेवासिध्यन्नित्यर्थः ॥ २१ ॥ एवंचतथापि निदर्शयन् नितरांदर्शयन् विश्वरूपं अकृतमाटमकार अक्षनभापेतिवा ॥ २२ ॥ २३ ॥ ॥ ॥

एतेषुरामेषु तान् अनंतान्गुणान् एकैकशश्चअनंतान् अवलोकयंतःपश्यंतः ॥ २४ ॥ विरामान विरामयनमानं प्रापयतःअवसानकर्तृनित्यर्थः ॥ २५ ॥
॥ २६ ॥ जिघत्सतां हंतुकामानां मुखकोटरांतं मुखाख्यविलमध्यं ॥ २७ ॥ २८ ॥ २९ ॥ ईक्षिताःदृष्टाः ॥ ३० ॥ वर्त्याद्युपाधेः वर्तिकातैलादिर्न

रामाननंतानवलोकयंतः प्रत्येकशस्तेषुगुणाननंतान् ॥ एकैकशस्तेषुगुणाननंता न्सुरेश्वराःप्रां
जलयःप्रणेमुः ॥ २४ ॥ हरिन्मणिश्यामलकोमलांगा न्बिंबाधरानंबुजपत्रनेत्रान् ॥ रामान्विरामा
न्रिपुवाहिनीनां प्रेक्ष्यप्रजाःप्रांजलयःप्रणेमुः ॥ २५ ॥ विष्फारयंतिस्मधनूंषिकेचि त्केचिद्विभिं
दंतिपुराविपक्षान् ॥ अन्येपराक्रंद्यनदंतियाव द्रामास्त्रिलोक्यामभिराममरूपाः ॥ २६ ॥ जिघत्स-
तांवानरवाहिनीनां कृताट्टहासंमुखकोटरांतं ॥ निशाचराणांनिशितैःशरौघै रपूरयन्केचनरामदे-
वाः ॥ २७ ॥ रामैरगण्यैरितिवध्यमानां संपश्यमानारिपुवाहिनींतां ॥ अन्योन्यमाबध्यकराहसं
त स्तस्थुःपरेकेचनरामदेवाः ॥ २८ ॥ किंविश्वमूर्तेःकपिभिस्तुकृत्य मितिब्रुवाणान्प्लवगान्विलो-
क्य ॥ आविस्मितंसुस्मितमाननाब्ज मकंपयन्केचनरामदेवाः ॥ २९ ॥ भिन्नानवन्हेःपृथगीक्षिताश्च
जातायथादीपतएवदीपाः ॥ नविश्वमूर्तेर्नतुजातुभिन्ना जातास्तथारामतएवरामाः ॥ ३० ॥
वर्त्याद्युपाधेर्ननुतारतम्या द्दीपेषुदृष्टंगुणतारतम्यं ॥ रामस्यरूपेषुतथागुणाणां नैसर्गिकाणांनहि
तारतम्यं ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



मित्तस्य तारतम्यात् हीनोत्तमभावात् नैसर्गिकाणां स्वाभाविकानां ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्याममणींद्ररामाः इंद्रनीलरत्नवत् श्यामवर्णाः तद्वन्मनोहराइतिवा ॥ विध्वस्तनिजोपरामाः विध्वस्तः विनाशितः निजःआत्मीयः उपरामः संहारो येषांतेतथोक्ताः । नाशरहिताइत्यर्थः ॥ ३२ ॥ विशमात्रात् भेदप्रतिनिधिः विशेषाख्यशक्त्यतिशयमात्रात् ॥ ३३ ॥ बहुभावःबहुत्वं भेदहीनार्थे भेदहीनेवस्तुन अपटुमतीनां अकुशलबुद्धीनां डोलायमाना अतिचंचला वपुरवयवधर्माः वपूंषिअवयवाः धर्माः वपुरादिस्वभावाः वर्णचेष्टागुणाद्याः वर्णाः श्यामादयःचेष्टागुणाद्याःगुणाक्रियाद्याःइत्येतेअपरिमिताअपिएकोरामएव वपुरादिभेदरहितो एकोरामएवेत्यर्थः । एकस्यबहुविधत्वं कथमुपपद्य

सर्वेपितेश्याममणींद्ररामा सर्वेपिविध्वस्तनिजोपरामाः॥ सर्वेपितेसर्वगुणाभिरामाः सर्वेपिनाथाजयताहिरामाः ॥ ३२ ॥ भेदंविनैवापिविशेषमात्रा द्रूपाण्यनंतानिपृथग्विधाय ॥ एकोचकाराथसरामदेवो दीपाभिमानीहियथाग्निदेवः॥ ३३ ॥ भवतिनुबहुभावोभेदहीनार्थइत्थं मतिरपटुमतीनामस्तुडोलायमाना ॥ वपुरवयवधर्मावर्णचेष्टागुणाद्या ध्रुवमपरिमिताःश्रीरामएकोविशेषात् ॥ ॥ ३४ ॥ ॥ इति श्रीसंग्रहरामायणे युत्धकांडे द्वादशःसर्गः ॥ १२ ॥ ॥ ॥

॥ श्रीः ॥ महाबलेनरामेण श्रुत्वामूलबलंहतं ॥ जीविताशांसुखाशांच क्षणात्तत्याजरावणः॥१॥ स्नुषाणामथभार्याणां परासामपियोषितां ॥ पत्यपत्यार्तिजंरोदं श्रुत्वामर्तुमनोदधे ॥ २ ॥ जाज्वल्यमानःकोपेन नेत्रेभ्योवन्हिमुद्गिरन् ॥ अवानरनरामुर्वी करिष्यामीत्युवाचसः ॥ ३ ॥

तदुक्तआह । विशेषादिति । विशेषाख्यशक्त्यतिशयबलादिति सर्वमपियुक्तमित्यर्थः । अत्रमत्येकश्लोकेषुबहुश्रुती उदाहृत्यार्थान्वक्तुंशक्ताअपि ग्रंथबाहुल्यातंकादुपरतं ॥ ३४ ॥ ॥ इति युत्धकांडटीकायां द्वादशःसर्गः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ श्रीः ॥ १ ॥ पत्यपत्यार्तिजं पतिपुत्राणां शोकजं पतिपुत्रैर्विहीना अभूमेतिक्लेशजातं रोदं विलापं ॥ २ ॥ ३ ॥ ॥ ॥ ॥ ॥

॥ ४ ॥ ५ ॥ दिव्यान्दिवि आकाशेसजातान् भौमान् भूमौसंजातान् आंगिकान् अंगेषुसंजातान् ॥ ६ ॥ शिवाःशृगालाः ॥ ७ ॥ पुरुषादान्रा



सर्वदिव्यायुधोपेतं पुष्पकंपुष्टिवर्धनं ॥ आरुरोहमहाबाहुः स्कंदक्रोदृढकंधरः ॥ ४ ॥ विरूपाक्ष
श्चयूपाक्षो महापार्श्वमहोदरौ ॥ दंशितारथमारुह्य रावणंपर्यवारयन् ॥ ५ ॥ निर्ययौनगराद्राजा
सेनयाहतशेषया ॥ उत्पातान्वीक्षमाणोपि दिव्यान्भौमानथांगजान् ॥ ६ ॥ दुर्वावचपरंविरं
विनेदुरशिवाशिवाः ॥ चेलुरंगानिवामानि यातोमृत्युःप्रतीयते ॥ ७ ॥ पुरुषाद्राधिपस्यास्य पु-
रुषादान्पुरसःशरान् ॥ वानरावारयामासु स्तत्रासहतरावणः ॥ ८ ॥ निकृत्यकर कर्णांघ्रि कंठा
द्यवयवान्बहून् ॥ पत्रिभिःपातयामास युगपद्रावणःकपीन् ॥ ९ ॥ पराद्रवन्पराभूताः केचि
त्तच्छरपावकैः ॥ अपरेकपयस्तस्य ध्वजिनींजघ्नुरुत्थताः ॥ १० ॥ प्रक्षीणान्राक्षसान्दृष्ट्वा म
हादेहोमहोदरः ॥ अभ्यद्रवद्वानरेंद्रान् शरवर्षीघनस्वनः ॥ ११ ॥ सएवकुंभकर्णोयं हंतुनःपुन
रागतः ॥ इतिविक्रुश्यहरयो पलायंतादिशोदश ॥ १२ ॥ इदंविभीषिकामात्रं मैवद्रुतवातिष्ठत ॥
इत्युक्तास्थापयामास तारेयोध्वजिनींनिजां ॥ १३ ॥ इंद्रसूनुसुतोवीरो महोदरमथाद्रवत् ॥ सं
ग्रामःसमजन्युग्रो रक्षोवानरवीरयोः ॥ १४ ॥ महोदरोवालिसुते ववर्षानिशितान्शरान् ॥ अ
चिंतयंस्तान्जग्राह केशेवालिसुतोरिपुं ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

क्षसान् ॥ ८ ॥ ९ ॥ ध्वजिनींसेनां ॥ १० ॥ ११ ॥ १२ ॥ तारेयःअंगदः ॥ १३ ॥ १४ ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

परिघापातपरुषैःपरिघस्य मुसलस्य आपातवन्‌ अभिपतनवत्‌ परुषैः असह्यैः ॥ १६ ॥ १७ ॥ आच्छन्न अपच्छन्नान्‌ आच्छन्नमजहत्‌ ॥ १८ ॥ १९ ॥
आदक्षिणोदरप्रांतात्‌ दक्षिणोदरप्रांतमारभ्य आवामांसात्‌ वामांसपर्यंतं ॥ २० ॥ २१ ॥ २२ ॥ संशयितं संदिग्धजीवितं गुल्मेसेनामुखभितये से
नामुखंगुल्मगणावित्यमरः । एकोरथोगजश्चैकोनराः पंचपदातयः । त्रयश्चतुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते । पत्तिंतुत्रिगुणामेतां विदुः सेनामुखंबुधाः ।

महोदरंमहीपृष्ठे पातयित्वांगदोरुषा ॥ परिघापातपरुषैः पादपातैरचूर्णयत्‌ ॥ १६ ॥ महो-
दरंहतंदृष्ट्वा महापार्श्वःसमाययौ ॥ ववर्षचशरान्घोरान्‌ वालिसूनुजिघांसया ॥ १७ ॥ अंग-
दस्तमभिद्रुत्य प्रसंत्याददत्ततद्धनुः ॥ महापार्श्वोपिकुपितः खड्गमादत्तवेगवान्‌ ॥ १८ ॥
खलस्यखड्गमाछिद्य केशपाशेप्रगृह्यतं ॥ पातयित्वाधरापृष्ठे खड्गेनाकृंतदंगदः ॥ १९ ॥
आदक्षिणोदरप्रांता दावामांसाच्चराक्षसं ॥ खंडयामिजघानैन मार्खंडलसुतात्मजः ॥ २० ॥
ततोविरूपनेत्रेण यूपनेत्रेणचांगदः ॥ आछन्नःशरवर्षाभ्यां मेघाभ्यामिवभास्करः ॥ २१ ॥ शर
पंजरबद्धोथ रक्षोभ्यांवालिनंदनः ॥ नशशाकप्रचालितुं व्याघ्रःपंजरगोयथा ॥ २२ ॥ सुतंसंश
यितंवीक्ष्य पृतनांचप्रपातितां ॥ गुल्मेसुषेणंविन्यस्य सुग्रीवोभ्यद्रवद्रुषा ॥ २३ ॥ उत्पाट्यपा
टवेनाशु गिरिंहरिगणेश्वरः ॥ तस्मापोथयामास तयोरावणमंत्रिणोः ॥ २४ ॥ ॥ ॥

त्रीणिसेनामुखान्येकोगुल्म इत्यभिसंज्ञित इतिपौलोमाख्लीके । अत्रगजाद्यभावेपि सेनामुखगा ... गुल्मशब्दोगौणः कृतः । एकदेशविकृतमनन्यव
द्भवतीति यथाश्वापुछकर्णादिष्वंगेषुछिन्नेष्वपिश्वाश्वैवभवतिनाश्वोनगर्दभ इतिवचनात्‌ ॥ २३ ॥ तयोर्शितगक्षसयोःहिरण्मनोत ॥ २४ ॥ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ अपीपलः रक्षितवानसि ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ॥

चूर्णीबभूवतुस्तूर्णं ममात्यौरावणस्यतौ ॥ तेनस्थूलेनशैलेन पांसुपिंडाविवाश्मना ॥ २५ ॥ मं-
त्रिणांमरणंवीक्ष्य क्रोधदीप्तोदशाननः ॥ उल्बणंबाणमादाय कार्मुकेनाशुसंदधे ॥ २६ ॥ ते
नहर्यक्षराजस्य वक्षोरक्षोधिपोबली ॥ निर्बिभेदाथसुग्रीवो मूर्छितोन्यपतद्भुवि ॥ २७ ॥
विधूयवानरान्बाणै र्विधूमोग्निरिवज्वलन् ॥ राममभ्यवदद्दुष्टो रामभ्रातारुरोधतं ॥ २८ ॥
तत्रयुद्धमभूच्चित्रं सौमित्रिदशवक्त्रयोः ॥ शरवर्षंसुबहुलं मुंचतोरितरेतरं ॥ २९ ॥ वि-
भीषणोगदापाणि र्न्यहनद्रावणानुगान् ॥ मुमोचरावणःशक्तिं घोरांभ्रातृजिघांसया ॥ ३० ॥
तामापतंतींचिच्छेद सौमित्रिःपत्रिभिस्त्रिभिः ॥ विनेदुर्वानराहृष्टा स्ततश्चुक्रोधरावणः ॥ ३१ ॥
लक्ष्मणत्वंबलश्लाघी विभीषणमपीपलः ॥ शक्तश्चेत्पालयात्मान मीत्युवाचदशाननः ॥ ३२ ॥मया
यब्रह्मणादत्तां मयेनपुनरात्मने ॥ कालदंडोपमांशक्तिं मुमोचास्मैसरावणः ॥ ३३ ॥ अथाष्टघं
टारणिता ज्वलंतीशक्तिरंबरे ॥ लक्ष्मणस्यक्षणाद्वक्षो दारयामासदारुणा ॥ ३४ ॥ पतितंलक्ष्म
णंवीक्ष्य कुपितोवायुनंदनः ॥ विशालंशैलमादाय रक्षोवक्षस्यवाक्षिपत् ॥ ३५ ॥ गर्वीपर्वतपा-
तेन व्यथांप्रापगरीयसीं ॥ दशास्योदशभिश्चास्यैः शोणितंवमतिस्मसः ॥ ३६ ॥ एतस्मिन्नंत
रेहंन निःसंज्ञंराघवानुजं ॥ पादारविंदंदेवस्य प्राणदेवात्मजोनयत् ॥ ३७ ॥ ॥ ॥

सर्वशक्तिरिमांशक्ति मुत्पाट्यानुजवक्षसः ॥ औषधान्यानयेत्याशु हनूमंतमचोदयत् ॥ ३८ ॥
पूर्ववत्पर्वतश्रेष्ठं सर्वौषधिनिधिंप्रभुः ॥ आनिनायमहातेजा वायुजोवायुवेगवान् ॥ ३९ ॥ अथौ
षधानांगंधेन सौमित्रिर्मित्रवर्धनः ॥ अक्षतःप्रोत्थितोवीरः पूर्णानंदमवंदत ॥ ४० ॥ श्यामलांगं
शबलय न्हसितेनसितत्विषा ॥ प्रसन्नोमारुतिंप्रेक्ष्य परिरेभेपरःपुमान् ॥ ४१ ॥ छिन्नप्ररोहिण
श्चैव विशल्याःपूर्ववर्णिनः ॥ औषधीनांप्रभावेन सर्वेपिहरयोभवन् ॥ ४२ ॥ राक्षसान्प्राक्षिपन्न-
ब्धौ वानरेंद्रामृतान्मृतान् ॥ रामाज्ञयास्ततास्त्वेते नाजीवन्नौषधैरपि ॥ ४३ ॥ लक्षार्धयोजना-
ध्वानं प्राक्षिपन्मरुतात्मजः ॥ पर्वतंपूर्ववत्सोद्रि र्निछिद्रांकःस्थितोभवत् ॥ ४४ ॥ अथाभिनंद्य
स्वचमूं चक्रेरामोधनुर्ध्वनिं ॥ युध्दनाट्यप्रसंगाय पूर्वरंगमिवाग्रतः ॥ ४५ ॥ विमानेभासमानः
स सहमानोदशाननः ॥ मंडलीकृतकोदंडः पुंडरीकाक्षमभ्यधात् ॥ ४६ ॥ शंभुशर्वौपुरस्कृत्य
पुरंदरपुरःसराः ॥ देवोपदेवमुनयो युध्दंद्रष्टुंवियद्ययुः ॥ ४७ ॥ नास्मन्नाथःक्षितौतिष्ठे द्राक्षसो
स्मिन्विमानगे ॥ इतिमत्वामहेंद्रोस्मै निजंरथमयापयत् ॥ ४८ ॥ ॥ ॥ ॥

अयापयत् प्रेषयामास ॥ ४८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४९ ॥ रामसहस्रगुः रामनामकःसूर्यः ॥ ५० ॥ ५१ ॥ अंतरेणैवमध्येनैव ॥ ५२ ॥ इतराणिसव्यानि ॥ ५३ ॥ अंधंअंधीभूतं ॥ ५४ ॥ ५५ ॥

अवतार्यरथंदिव्यं प्राजलिःस्माहमातलिः ॥ विजयस्वजगन्नाथ रथेस्मिन्विहराधुनेति ॥ ४९ ॥
रथोदयाद्रिमारूढो रेजेरामसहस्रगुः ॥ विश्वग्रासिदशग्रीव ध्वांतविध्वंसदीक्षितः ॥ ५० ॥ बा-
णान्बहून्बहुविधा नुल्बणान्निशितान्दृढान् ॥ स्वर्णपुंखान्स्फुरत्पक्षान् प्रास्यद्रामायरावणः ॥ ५१ ॥
ताननंतोंतरेणैव भल्लैश्चिच्छेदराघवः ॥ मुमोचचस्वयंबाणा न्प्रहसंनेवलीलया ॥ ५२ ॥ मंडला
निविचित्राणि दक्षिणानीतराणिच ॥ चरंतौचक्रतुश्चित्रं युध्यंतौविश्वविस्मयं ॥ ५३ ॥ दिशोदशश
रैःशूरौ छादयामासतुःक्षणात् ॥ अंधकारेणसांद्रेण विश्वमंधमभूत्तदा ॥ ५४ ॥ नानराराक्षसा-
श्चेमे विस्मयोत्फुल्ललोचनाः ॥ तस्थुर्विहायसंग्रामं संग्रामंवीक्ष्यतंतयोः ॥ ५५ ॥ किंचित्प्रहृष्टं
वित्रस्तं किंचित्किंचित्समाकुलं ॥ विचित्ररूपंत्रैलोक्यं विस्मितंसमभूत्तदा ॥ ५६ ॥ नाराचमा
लाममुच द्रावणोराममूर्धनि ॥ सनीलोत्पलमालेव नरामस्यव्यथांव्यधात् ॥ ५७ ॥ ललाटंपाटया
मास पाटवात्कैटभार्दनः ॥ शरैर्निशाचरेशस्य चुक्षोभचदशाननः ॥ ५८ ॥ ससर्जविविधान्बा
णा नासुरास्त्रेणरावणः ॥ सिंहव्याघ्रादिकमुखा न्पक्षिसर्पाननानपि ॥ ५९ ॥ राघवोराक्षसास्त्रा
णि स्वमंत्रास्त्रैन्र्यवारयत् ॥ याम्याग्नेयादिनामानि वन्ह्याद्यैःसाधितत्वतः ॥ ६० ॥

वित्रस्तंभीतं ॥ ५६ ॥ अमुचत् मुक्तवान् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ अनीनशत् व्यनाशयत् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ सागरं सागराणां समाहारः सागरं काकानांसमूहः काकमित्यादिवद्यं शब्दः सा

ब्रह्मेंद्रपशुपत्याद्या देवायस्यप्रसादतः ॥ सत्ताशक्त्यादिमंतःस्यु स्तस्यकापरतंत्रता ॥ ६१ ॥
आग्नेयास्त्रेणभगवा न्ससर्जाग्निमुखान्शरान् ॥ विद्युन्मुखांश्चसूर्याख्यां स्तैस्तस्यास्त्राण्यनीनशत्
॥ ६२ ॥ देवगंधर्वपूर्वाणि मुक्तान्यस्त्राणिवैरिणा ॥ दैवगांधर्वपूर्वैःस नाशयामासकेशवः ॥ ६३ ॥
रावणोथास्त्रवीर्येण नागांश्चक्रेविषोल्बणान् ॥ सुपर्णैश्चशरोद्भूतै स्तान्जघानजगद्गुरुः ॥ ६४ ॥
यत्परैर्दुष्कृतंलोके तच्चक्रेरावणोयुधि ॥ यद्यच्चक्रेदशास्योयं तत्तत्प्रत्यहनत्प्रभुः ॥ ६५ ॥ रामरा
वणयोर्युध्दं रामरावणयोरिव ॥ गगनंगगनाकारं सागरंसागरोपमं ॥ ६६ ॥ रथंसारथिमप्यश्वान्
ध्वजंचनिशितैःशरैः ॥ रावणस्ताडयामास रामस्यप्रणदन्मुहुः ॥ ६७ ॥ कोपंप्रकाशयामास भ
गवांल्लोकभीषणं ॥ पूर्णानंदेमुकुंदेस्मिन् कुतःकोपस्तमोभवः ॥ ६८ ॥ भृकुटीमल्ललाटेन सर्व
शोणेक्षणेनच ॥ भ्रूभ्यांचभावगर्भाभ्यां रामोभूत्सर्वभीषणः ॥ ६९ ॥ संरंभंतंभगवतो वीक्ष्यमा
णोभयाकुलः ॥ न्यस्तमापद्धनमिव शूलमादत्तरावणः ॥ ७० ॥ जाज्वल्यमानंतच्छूलं युगांतान
लभीषणं ॥ चिक्षेपघंटाघटितं क्षिप्रंरामायरावणः ॥ ७१ ॥ सर्वशक्तिस्ततःशक्त्या तस्यशूलम
शातयत् ॥ बिभेदचोल्बणैर्बाणै रुरुवक्षश्चराक्षसः ॥ ७२ ॥ ॥ ॥ ॥ ॥

भुः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ अशातयत् कर्तयामास ॥ ७२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ अर्धप्रभग्नद शवक्त्रतमाः अर्धयथा भवतितथा प्रभग्नं विनाशितंदश वक्त्रनामकं तमः



विकिरंतंबहून्बाणान् विकिरन्नेवसायकान् ॥ मेघगंभीरयावाचा रामोरावणमब्रवीत ॥ ७३ ॥
सुतोविश्रवसःशूरः त्वंहिवैश्रवणानुजः ॥ जितवान्किलदिक्चक्रं भवान्निजभुजौजसा ॥ ७४ ॥
नटवत्कपटीभूता भटस्यांगतान्गुणान् ॥ निसर्गनीचस्त्वमिति स्त्रीचौर्येणावगम्यते ॥ ७५ ॥
ब्रह्महत्यागुरुद्रोहो दैवतानांचहेलनं ॥ इत्यादयोपराधास्ते स्त्रीचौर्येणनवीकृताः ॥ ७६ ॥ दार
यिष्यामित्वद्दयं दारुणंतवरावण ॥ साधनांधर्ममार्गस्य कवाटमिवरोधकं ॥ ७७ ॥ मुनिमांसेन
पुष्टस्य तवमांसेनदुर्मते ॥ कंकान्संतर्पयिष्यामि पश्यसीतापतेर्बलं ॥ ७८ ॥ इत्युदाहृत्यभग-
वान् शरैरशनिसंनिभैः ॥ राघवोरावणस्यांगं बिभेदगिरिसंनिभं ॥ ७९ ॥ रामबाणैर्विभिन्नांगो
रावणोलोकरावणः ॥ स्रस्तगात्रोविवृत्ताक्षो मुहूर्तंमूर्छितोपतत् ॥ ८० ॥ अर्धप्रहर्षितसुरांबुरुह
स्तदानी मर्धावमीलितसुरेतरकैरवोयं ॥ अर्धप्रभग्नदशवक्त्रतमाःस्वगोभि रर्धोदितोरविरिवाथ
रराजरामः ॥ ८१ ॥ ॥ इति संग्रहरामायणे युद्धकांडे त्रयोदशःसर्गः ॥ १३ ॥ ॥
श्रीः ॥ विमानयानैर्विविधैर्द्विजैश्च निमंत्रितोमंत्रविदांवरिष्ठः ॥ व्योम्नोवतीर्योपगतोमुकुंदं मुदा
वाचवाचंमतिमानगस्त्यः ॥ १ ॥



नसतथोक्तः। स्वगोभिःस्वस्य शरनामकैः रश्मिभिः ॥ ८१ ॥ ॥ इति युद्धकांड टीकायां १३ सर्गः ॥ ॥ श्रीः ॥ व्योम्नःआकाशात् ॥ १ ॥

नविदन् नजानन मृदूनांपुरुषाणांमणयःत्वयिविद्यमानःस्तः अपापदर्शीत्यन्वयः ॥ २ ॥ भक्तपरायणं भक्तानांमुख्याश्रयं ॥ ३ ॥ ४ ॥ चापलंचंच लत्वं ॥ ५ ॥ रिपुजन्मभाजाराक्षसजन्मवता प्रक्रीडितःप्रकृष्टक्रीडावान् ॥ ६ ॥ व्यक्तेंद्रचापौ अभिव्यक्तशक्रचापवंतौ अचिरांशुचारु तडिद्वन्मनोहरौ ॥

लीलाभिरेताभिरलंमहेश क्षिप्रंक्षिपैनंजगदेकशत्रुं ॥ बिभेतिलोकोनाविदभवंत मपापदर्शी प्रणतोमृदूनां ॥ २ ॥ मार्तंडसन्मंडलमध्यवर्तिं नारायणंभक्तपरायणंत्वां ॥ संसेव्यदिव्यस्तुतिभिर्जनो यं सर्वोपिसर्वंपुरुषार्थमेतु ॥ ३ ॥ इत्युक्तईशोमुनिनानितांत मोमित्युदात्तत्यचकर्षचापं ॥ सं प्राप्यसंज्ञामनवाप्यभीतिं सरावणस्तावदवापरामं ॥ ४ ॥ विज्ञायवीर्यंरघुवंशकेतो र्दृष्ट्वानिमित्तं मृतिसूचकंच ॥ चचालचेतोनदशाननस्य नमानिनामापदिचापलंस्यात् ॥ ५ ॥ स्वपार्षदानां प्रवरेणतेन महीध्रापाद्रिपुजन्मभाजा ॥ प्रक्रीडितस्तेनदशाननेन चकारचित्रंरणमंबुजाक्षः ॥ ॥ ६ ॥ उल्कामुकौकांचनवर्मभाजौ तौरेजतुःसंततबाणवर्षौ ॥ व्यक्तेंद्रचापावचिरांशुचारु संवर्त मेघाविवभूरिवर्षौ ॥ ७ ॥ ताभ्यांतदारावणराघवाभ्यां युद्धोद्धताभ्यामतिलोड्यमाना ॥ धरास सप्ताब्धिधराधरापि वाताहतानौरिवचंचलाभूत् ॥ ८ ॥ प्रभाकरोनिष्प्रभतांप्रयाते वातेप्यवाते- सुरासिद्धसंघाः ॥ प्रोचुःप्रभुंप्रांजलयःप्रसीद रामाद्भुषंसंहरसंहरेति ॥ ९ ॥

॥ ७ ॥ धराभूःससप्ताब्धि धराधरापि सप्तभिरब्धिभिः लक्षभिर्धराधरैः पर्वतैश्चसहितेतितथोक्ता ॥ ८ ॥ अवातेपवनरहितेसति ॥ ९ ॥ ॥

तुल्यंयुगपदेव ॥ १० ॥ ११ ॥ वायुवाजं वायुरूपात्मकपक्षयुक्तं रविवन्हिधरसूर्याग्निनामकधराद्वययुक्तं आकाशमानस्वशरीरयष्टिं आकाशाभिमानिदेवतारूपस्वशरीरयष्टिं अतिस्थूलस्वशरीरयष्टिमितिवा । महामेरुगुरुंमहामेरोरपि भारयुक्तं ॥ १२ ॥ अदारणीयं दारयितुमशक्यं विरावित्वंमहाध्वनिसहितं ॥ १३ ॥ विलक्षणःइतरबाणेभ्योविलक्षणः जिष्णुःजयशीलवान् मार्गणःबाणः ॥ १४ ॥ शराग्र्यइतियोजना व्यापादयामासमृत्यम

दशाननस्याथशिरांसिशीघ्रं दशस्फुरत्कुंडलमंडितानि ॥ चिछेदतच्छेत्तरमौलिमंति तुल्यंक्षुरप्रेण रघुप्रवीरः ॥ १० ॥ अन्यानिदृष्ट्वापुनरुद्गतानि शिरांसिदेवोदशकंधरस्य ॥ जानन्विरिंचिस्यवरं वरिष्ठ मादत्तबाणंप्रहसन्रमेशः ॥ ११ ॥ तंवायुवाजंरविवन्हिधार माकाशमानस्वशरीरयष्टिं ॥ शरंमहामेरुगुरुंस्वचापे सुवर्णपुंखंप्रतिसंदधेसः ॥ १२ ॥ विदारणंदारुणदानवाना मदारणीयंकुलिशादिभिश्च ॥ विराविणंभीमतरंनितांतं सरावणायाथमुमोचबाणं ॥ १३ ॥ श्रीरामनामाक्षरलक्षणोयं विलक्षणःसर्वजगत्सुजिष्णुः ॥ समार्गणःश्रीरमणेनमुक्तो मुख्यःस्वयंभक्तइवोज्वलत्स्वे ॥ १४ ॥ विदारयामाससरावणोरो निपातयामासचपुष्पकात्तं ॥ व्यापादयामासचतंशराग्र्यः संपादयामासचसंविमोदं ॥ १५ ॥ प्रशस्यमानःसकलैःसलावैः विवेशभूमिंप्रदरोन्हियेव ॥ पत्युः पुनःपार्श्वमुपाजगाम साक्षाद्वजूनांननुयुक्तमेतत् ॥ १६ ॥ तेराक्षसारावणभृत्यभूता हतावशिष्टाः पतितेदशास्ये ॥ पराद्रवन्प्राणपरिरक्षयाथ वृक्षेविपन्नेपतगाइवद्राक् ॥ १७ ॥ ॥ ॥

करोत् ॥ १५ ॥ सःप्रदरःशरइतियोजना न्हियेवलज्जयेव पत्युःस्वामिनोरामस्य ॥ १६ ॥ प्राणपरिरक्षया प्राणरक्षणेच्छयाप्राणपरिरक्षणपरिरक्षयेतिपाठेदिसत्वार्थः । विपन्नेपतितेनतिपतगाः पक्षिणः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामागसः रामदेवंप्रतिविधमानादपराधात् ॥ १८ ॥ परेतंमृतं मयात्मजाद्याः मंदोदरीपूर्वकाः महिलाः स्त्रियः विलेपुः विलापंचक्रुः ॥ १९ ॥ सुन-
यान् उत्तमनीतियुक्तान् हेप्रियेतिपदच्छेदः ॥ २० ॥ बहुयथाभवतितथा ॥ २१ ॥ स्यात् अस्तु ॥ २२ ॥ २३ ॥ द्रुहिणः ब्रह्मा धाताब्जयोनिर्द्रुहि

प्रक्षीणकर्माणमिवाथपृथ्व्यां प्रेक्ष्याग्रजंनिष्पतितंविमानात् ॥ विभीषणोलंविललापहाहा रामाग
सस्तातमृतोसिहीति ॥ १८ ॥ धूलीविधूमंरुधिरौघसिक्तं वीरंविधात्रार्पितवीरशय्यं ॥ पतिंपरे-
तंपरिरभ्यदीना मयात्मजाद्यामहिलाविलेपुः ॥ १९ ॥ हारामकांतामपहृत्यकांत विभीषणादी
न्सुनयान्विधूय ॥ दशामिमांप्राप्यगतोसिकुत्र नथप्रियास्मान्करवामकृत्यं ॥ २० ॥ एवंवि
लापेबहुवर्तमाने विभीषणंतंभगवान्बभाषे ॥ भ्रातुःपरेतस्यकुरुष्वकृत्यं नारीःपुरंप्रापयधामचे-
ति ॥ २१ ॥ दारापहारीतवनाथपापो भ्रातानमेतस्यकरोमिकृत्यं ॥ एवंब्रुवाणंतमुवाचदेवो म
दाज्ञयास्यादितिमंदहासी ॥ २२ ॥ दशाननस्यक्रतुभिःसमृद्धा नग्नीन्पुरस्कृत्यपुरोहिताग्र्यैः ॥
विधायसंस्कारमथापराश्च क्रियाश्चकाराशुविभीषणोत्र ॥ २३ ॥ लोकैकशत्रौनिहतेदशास्ये लो
कैकनाथोद्रुहिणोहरश्च ॥ महेंद्रपूर्वैःसहलोकपालै र्लोकेशचूडामणिमाप्यनेमुः ॥ २४ ॥ पद्माप
तिंपद्मभवोथदेवो बद्धांजलिर्बद्धमहानुबंधः ॥ तुष्टावतुष्टात्ममतिर्वचोभि र्गुह्यैःसवेदांतकृतांत-
सारैः ॥ २५ ॥ जयोध्रुवस्तेनपराजयःस्या द्विश्वेश्वरस्त्वंवयमत्रदासाः ॥ नचान्यथास्यादयमी-
रितोर्थः कचित्कदाचिद्भगवन्कुतश्चित् ॥ २६ ॥ ॥ ॥ ॥ ॥

णइत्यमरः ॥ २४ ॥ पद्मापतिं लक्ष्मीपतिं बद्धमहानुबंधः बद्धमहा भक्तिमान् वेदांतकृतांतसारैः वेदांतसिद्धांतसारभूतैः ॥ २५ ॥ २६ ॥ ॥

॥ २७ ॥ इनादयः सूर्यादयः भवेसंसारे परेअन्ये ॥ २८ ॥ आर्चिष्मतः वन्हेः अर्चींषि ज्वालाः मयूखाः रश्मयः निर्यांति निर्गछंति संयांति प्रविशं
ति तथात्वत्तो निर्गछामः त्वत्तोभिन्नाः ॥ २९ ॥ तवत्वांप्रविशामः विशेषतः विशेषनलात् ॥ ३० ॥ ३१ ॥ अनन्यसाध्येन त्वत्तोन्येनसाधयितुम

नादिर्ननाशस्तवसद्गुणानां नांतोनहंतास्तितिरस्कृतिश्च ॥ एकैकशोप्येवमुतान्यथानो कश्चित्क-
दाचिद्भगवान्कुताश्चित् ॥ २७ ॥ अनाद्यनंतःपरमःस्वतंत्र स्त्वमेकएवेशभवद्वशाःस्मः ॥ अहंशि
वःशक्रइनादयश्च भवेचमुक्तौचपरेचसर्वे ॥ २८ ॥ अर्चिष्मतोर्चींषिरवेर्मयूखा वेगाश्चवायोः
सारितांयथापः ॥ निर्यांतिसंयांतिचसंततंहि त्वत्तोवयंचेशतथासमस्ताः ॥ २९ ॥ नदोषलेशो
पितवेशकश्चि द्गुणान्सुखादीन्गणयंतिकेवा ॥ स्वरूपभूताश्चवपुर्गुणाद्या विशेषतोनंततवह्यनं-
ताः ॥ ३० ॥ भ्रूविभ्रमेणैवजगंतिहंतुं स्रष्टुंपुनःपालयितुंप्रभोस्ते ॥ रक्षोवधेनाद्भुतमत्रयद्व त्तू
लप्रदाहःप्रलयानलस्य ॥ ३१ ॥ अनन्यसाध्येनतथापिशत्रो र्वधेनरक्षस्यखिलामरांश्च ॥ न-
मोनमोरामनमोनमस्ते सदेतितुष्टावविधिस्त्वतातं ॥ ३२ ॥ दशाननंस्वेनवरेणगुप्तं निरीक्ष्यरा-
मेणातिपानितंतं ॥ भवस्तदातामसभावमाप्तो योद्धुंक्रुधाव्हास्तरघुप्रवीरं ॥ ३३ ॥ चापेनरोपंप्र
तिसंदधाने चराचरेशेविचचालभूमिः ॥ पृथ्वीप्रकंपेनपपातशर्वः सउत्थितोभूत्त्वविशुद्धभावः ॥
॥ ३४ ॥ पद्मापतेराशुसपादपद्मे पपातभक्त्याभरितोभवोथ ॥ क्षमस्वलक्ष्मीरमणापराधं शुद्धा
स्तुमेबुद्धिरितिब्रुवाणः ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शक्येन रक्षांसिराक्षितवानासि ॥ ३२ ॥ आव्हास्त असूयया आहूतवान् ॥ ३३ ॥ रोपं बाणं पत्रीरोपइषुर्द्वयोरित्यमरः ॥ ३४ ॥ ॥ ॥

॥ ३५ ॥ ३६ ॥ ३७॥ भूम्नारामेण ॥ ३८॥ दिदृक्षेद्रष्टुमिच्छामि ॥३९॥ अधिकगोपनेन असंतगूहनेन मगोप्यानगूहनीया ॥ ४० ॥ तिरस्कारिण्यां जव

वृंदारकैरिंद्रपुरःसरैश्च स्वानंदमूर्तिःपरिवंद्यमानः ॥ मुखेंदुनाचारुवचोमृतेन विश्वाभिरामोभिन
नंदरामः ॥ ३६ ॥ रामानुजोरामनियोगतोथ समंसमस्तैःकपिपुंगवैस्तैः ॥ लंकाधिनाथोयमिति
ब्रुवाणो विभीषणंशोभनमभ्यषिंचत् ॥ ३७ ॥ भूम्नानियुक्तःपवनस्यसूनुः सीताकृतिंतांविनयेन
गत्वा ॥ पतिव्रतेतेपतिरेषहत्वा तंरावणंराजतइत्युवाच ॥ ३८ ॥ स्वस्त्यस्तुवत्सप्रियवादिनेते
प्रियंदिदृक्षेममदेवदेवं ॥ इतिब्रुवंत्यांतनुमध्यमाया मुवाचतन्मारुतिराप्यरामं ॥ ३९ ॥ रामाज्ञया
तत्रविभीषणस्ता मुपानिनायाधिकगोपनेन ॥ स्वयंवरेचव्यसनेचयुद्धे राज्ञीनगोप्येतिजगादरा
मः ॥ ४० ॥ तिरस्कारिण्यामपवाहिताया मसंवृतासंसदिजातलज्जा ॥ स्वेष्ववगात्रेपुनिलीययाता
रामाननंचारुददर्शरामा ॥ ४१ ॥ आलोक्यतांलोकपतिर्बभाषे जितासिभद्रेविनिहत्यशत्रुं ॥ दा
रापहारोद्भवदुर्यशोमे प्रमृष्टमेवंकिमिहाद्यकृत्यं ॥ ४२ ॥ कुलांगनायांपरवेश्मगायां कथंकुलीनः
कुरुतेभिलाषं ॥ वयंतुसर्वत्रचसंगहीनाः शुचिस्मितेयाहियथेप्सितंते ॥ ४३ ॥ ॥ ॥

निकायां ॥ ४१ ॥ प्रमृष्टं विनाशितं ॥ ४२ ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चितां अग्निप्रवेशानुकूलांचितां ॥ ४४ ॥ ४५ ॥ अहं अन्यं मनसापिचेत्नागानगता तर्हि अयंपावकोवन्हिः मांपान्विरक्षत्वयः ॥ ४६ ॥ अविशंकं निः
शंकंयथा भवतितथा ॥ ४७ ॥ हव्यवहंवन्हौ ॥ ४८ ॥ ४९ ॥ ब्रह्म परब्रह्मभूतः नित्यनैसर्गिकेष्टः निस्यंसदापिस्वाभाविकप्रियः अश्रांतंनिरंतरं

नास्म्यन्यसक्तेतिमुहुर्ब्रुवाणा विज्ञायभावंभुवनेश्वरस्य॥शुकालपालक्ष्मणमाललाप चितांद्रुतंमेकु
रुलक्ष्मणेति ॥ ४४ ॥ सुग्रीवमुख्येष्वथवानरेषु मुंचत्सुबाष्पंसविभीषणेषु॥ बाष्पेक्षणोलक्ष्मण
आशुचक्रे चितांप्रभोश्चित्तमवेत्यभावैः ॥ ४५ ॥ अगामहंचेन्मनसापिनान्यं मांपावकःपातुपरी
क्षकोयं ॥ सेतिब्रुवाणाप्रणिपत्यरामं जाज्वल्यमानेज्वलनेपपात ॥ ४६ ॥ हाहाकृतंवानरराक्षसै
स्तै स्तस्यांपतंत्यामनलेविशंकं ॥ब्रह्मादयोराममथाभ्ययुस्ते शुद्धैवसीतामहिषीतिबोति ॥ ४७॥
सीताकृतिंदिव्यपरीक्षणछला त्सीतापतिर्हव्यवहेनिधाय ॥ कैलासशैलात्पुनरागतांप्रियां सीतां
स्वयंप्रैक्षतपावकार्पितां ॥ ४८ ॥ प्राप्येंदिरांनृपसुतामतिसुंदरींतां मंदस्मितेंदुलसितांमुमुदेमुकुं
दः ॥ रामंसमेत्यपरमंमुमुदेपिदेवी दृष्ट्वैवतौमुमुदिरेसुजनाःसमेतौ ॥ ४९ ॥ ब्रह्मब्रह्मादिकाना-
शिशुरतिललितःकेवलंराजराज्ञो राजेंद्रोमध्यमानांस्वगतिरथसतामंगनानामनंगः ॥ भृत्यानिकं
चराणांजगतिहनुमतोनित्यनैसर्गिकेष्टो रेजेरामोभिरामोजनकदुहितुरश्रांतमेकांतकांतः ॥ ५० ॥
इति श्रीसंक्षेपरामायणे युद्धकांडे चतुर्दशःसर्गः ॥ १४ ॥ ॥ ॥ ॥ ॥

एकांतकांतः मुख्य भर्ता ॥ ५० ॥ ॥ इति युद्धकांड टीकायां चतुर्दशःसर्गः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ श्रीः ॥ निरुजः विगतरोगान् भिषजांवैद्यानां भिषग्वैद्यौचिकित्सक इत्यमरः॥ १ ॥ यमक्षयात् यमपुरात ॥ २ ॥ ३ ॥ भवाब्धि संसारसमुद्रं अ

॥ श्रीः ॥ गिरेरानयनात्पश्चा द्रावणशरहताः ॥ हरींस्तान्विरुजश्चक्रे सुषेणोभिषजांवरः ॥
॥ १ ॥ उच्चावचायेहरयो मृतास्तान्राघवस्वयं ॥ संकल्पात्सत्यसंकल्पः समानिन्येयमक्षयात्
॥ २ ॥ तदाराजादशरथो महेंद्रेणसमागतः ॥ परिरेभेसुतंप्रीत्या बाष्पपर्याकुलेक्षणः ॥ ३ ॥
लक्ष्मणंचपरिष्वज्य लक्ष्मणाग्रजमब्रवीत् ॥ त्वयाभवाब्धिमतरं विश्वानंदननंदन ॥ ४ ॥ स्वर्गा
दप्यपवर्गाच्च सर्वस्माच्चान्यतःसुखात् ॥ श्रवणंदर्शनंवाते स्मरणंवावरंमम ॥ ५ ॥ धन्यासाखलु-
कौसल्या सुमित्रान्येचनागराः ॥ येतवानुभवेयुस्त मभिषेकमहोत्सवं ॥ ६ ॥ सीतेसीमंतिनीनांत्वां
मन्येधन्यतमांसति ॥ साक्षान्नारायणंरामं यामत्सुतमुपाश्रिता ॥ ७ ॥ सौमित्रेकृतकृत्योसि रा-
मशिश्रूषयाध्रुवं ॥ वासुदेवमिमंदेवा विदुर्वेदांतवादिनः ॥ ८ ॥ इतिब्रुवाणंपितरं अभिनंद्यजगद्गु
रुः ॥ अन्वजानात्स्वपितरं ब्रह्मादीनितरानपि ॥ ९ ॥ ततआमंत्रयामास भक्त्यारामंविभीषणः ॥
राजभोगैर्वसस्वामि न्ससीतोमेगृहेष्विति ॥ १० ॥ उपवासकृशंदीनं भरतंस्थंडिलेशयं ॥ नाद्य
क्ष्यपुरिमेवास इतिरामोब्रवीदिमं ॥ ११ ॥ अथरामाज्ञयासर्वा न्वानरान्सविभीषणः ॥ रत्नैःसुव
र्णैःकामैश्च यथाकाममपूजयत् ॥ १२ ॥ ॥ ॥ ॥

तरं तीर्णवानस्मि ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अन्वजानात् अनुज्ञांदत्तवान् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ आरोपयत् आरोपयामास ॥ १५ ॥ संहतिः समूहः स्त्रियांतुसंहतिर्वृंदमित्यमरः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥



सुमेरुशिखराकारंनानारत्नमयंशुभं ॥ पुष्पकंप्रार्पयामास राघवायविभीषणः ॥ १३ ॥ आरुह्य
पुष्पकंदिव्यं मंकमारोप्यजानकीं ॥ रेजेरामोयथामेघः सविद्युन्मंदराचले ॥ १४ ॥ रामःसल-
क्ष्मणस्तत्र हनूमत्सूर्यजादिकान् ॥ कपीन्विभीषणंचैन मारोपयतपुष्पकं ॥ १५ ॥ हंससंहति
युक्तेन पुष्पकेणार्कवर्चसा ॥ विमानेनासमानेन ययौरामोनिजांपुरीं ॥ १६ ॥ तत्रतत्रातिचित्रा
णि सिंधुशैलवनानिसः ॥ वर्णयन्दर्शयन्देव्यै ययौदेवोविहायसि ॥ १७ ॥ सशनैर्वानरेंद्रस्य पु
रींगत्वासुशोभनां ॥ हनुमद्दर्शनसुग्रीवसख्यादीनुक्तवान्प्रियां ॥ १८ ॥ तत्रतैराससर्वार्थौ शब
र्यादिविमोक्षणं ॥ गृध्रराजस्यवृत्तांत मुक्त्वादेव्यैययौपुनः ॥ १९ ॥ वानरेंद्रकलत्राणि किष्किं-
धायाःसराघवः ॥ आदायारोप्यचाक्षिप्रं विमानेनययौपुनः ॥ २० ॥ पूर्णेचतुर्दशेवर्षे पंचम्यांपु
रुषोत्तमः ॥ भरद्वाजाश्रमंप्राप्य मुनेःपूजामुपाददे ॥ २१ ॥ हनूमंतमुपांतस्थ मुवाचमधुसूद-
नः ॥ मारुतेमामुपायांतं भरतायवदेरिति ॥ २२ ॥ ययौरामनियोगेन मारुतिर्मारुतोपमः ॥
मानुषंवेषमाश्रित्य पुरींराघववल्लभां ॥ २३ ॥ जटिलंचीरिणंवीर मुपवासकृशंमृद्धुं ॥ मलिनंनी
व्रतपसं रामरामेतिवादिनं ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २३ ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पादुकेदेवदेवस्य वंदमानंपुनःपुनः ॥ रामोक्तेसमयेप्राप्ते रामादर्शनविक्लवं॥२५॥देदीप्यमानम-
नलं प्रवेष्टुंधृष्टमुद्यतं ॥ भरताग्रजदूतोसौ भरतंक्षिप्रमैक्षत ॥ २६ ॥ मावीरसाहसंकार्षी र्व्यक्तं
भक्तोसिपूर्वज ॥ इत्युक्त्वाभरतंप्रोचे मतिमान्हनुमान्पुनः ॥ २७ ॥ सीतापतिःससीतस्त्वां ससौ
मित्रिरमित्रहन् ॥ रामोरामानुजंप्राप्तः कुशलंसौम्यपृच्छति ॥ २८ ॥ इतिप्रियंब्रुवाणाय तस्मै
मारुतयेतदा ॥ तुभ्यंकिंप्रददानीति ब्रुवाणःप्रणनामसः ॥ २९ ॥ प्रहृष्टोरोमहर्षश्च वर्षोहर्षाश्रु
संततेः ॥ चित्तेगात्रेवनेत्रेच भरतस्याभवन्समं ॥ ३० ॥ महापुरुषकोसित्वं त्वामन्येधन्यमात्म
नां ॥ कथांकथयरामस्य तमित्थंभरतोब्रवीत् ॥ ३१ ॥ हनुमान्कथयामास काकुत्स्थस्यकथांक
पिः ॥ आत्मानंचावदत्तेन मुमुदेभरतोधिकं ॥ ३२ ॥ अनुजंप्रत्युवाचेदं भरतोथसगद्गदं ॥ आ
यातिकिलदेवोनः पुरीसंस्क्रियतामिति ॥ ३३ ॥ किंकराणांसहस्रैःस शोधयामासतांपुरीं ॥ अ
प्यलंकारयामास शत्रुघ्नोभरताज्ञया ॥ ३४ ॥ रामोगंगामथप्राप्य ततारा‍शुसकिंकरः ॥ स्वामी
रामउपायातः पश्यामैनंसुदुर्लभं ॥ ३५ ॥ इतिब्रुवाणाआजग्मुः पौराजानपदाअपि ॥ भरतोनि
र्ययौगृण्हन् पादुकेमंत्रिभिर्वृतः ॥ ३६ ॥ सस्त्रीबालःसर्ववर्णैः परीतोमातृभिश्चसः ॥ हनूमतो
मुखंवीक्ष्य बाष्पाक्षोभरतोब्रवीत् ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कापेयीकपिनांविभ्रमाना चपलताचंचलता ॥ ३८ ॥ ३९ ॥ व्यश्नुवानं प्रसरंतं ॥ ४० ॥ पुष्करे आकाशे व्योमपुष्करमंबर मित्यमरः ॥ ४१ ॥ ४२ ॥

कच्चित्कपींद्रकापेयी नेयंचपलतातव ॥ कच्चिदार्यस्यपादाब्जं सेविष्येद्यसुदुर्लभं ॥ ३८ ॥ कच्चि
न्मेसफलंजन्म कच्चिद्द्रक्ष्यस्यतेपतिं ॥ इत्युक्तोहनुमान्प्रोचे पश्यमान्पुष्पितद्रुमान् ॥ ३९ ॥ अ
कालेप्यधुनासौम्य सामीप्यात्तेग्रजन्मनः ॥ पांसुंदाशरथेःपश्य व्यश्नुवानंदिशोदश ॥ ४० ॥
किंकराणांत्वदार्यस्य हरीणांरभसोत्थितं ॥ इमंकिलकिलाशब्दं कपीनांकौतुकोद्भवं ॥ ४१ ॥ अव
धारयवीरत्वं त्वंजेष्ठस्याग्रगामिनां ॥ पुष्पकंपुष्करेपश्य पुष्करेक्षणवाहनं ॥ ४२ ॥ सफलीकुरु-
लोलेते लोचनेरामदर्शनात् ॥ आर्यस्यांकेस्मितमुखी मार्याकिंसौम्यवीक्षसे ॥ ४३ ॥ आर्यापा-
र्श्वेविनीतंतं लक्ष्मणंवीक्षसेनाकिं ॥ कपींद्रराक्षसेंद्रौत्वं तौसुग्रीवविभीषणौ ॥ ४४ ॥ पश्यदेवस्य
पार्श्वस्थौ किंकरौसुप्रियंकरौ ॥ इतिमारुतिवाक्येन वर्ण्यमानंस्वदैवतं ॥ ४५ ॥ गुरोरिवोपदेशे
न ददर्शभरतोविभुं ॥ श्यामलंकोमलंरामं विमलंकमलेक्षणं ॥ ४६ ॥ मंदहासेंदुमालक्ष्य ननामभर
तोभुवि ॥ सीताकांतंरावणारिं रामंपश्यतपश्यत ॥ ४७ ॥ उत्थितंसर्वतोवाक्य मित्येवंविश्वमं
गलं ॥ भासमानंविमानाग्र्ये नेमुःसर्वाःप्रजाःशुभं ॥ ४८ ॥ तमांसिपरिमुष्णंत मुदयाद्रिरविंय
था ॥ अवातरत्पुराभ्यासे पुराणपुरुषस्ततः ॥ ४९ ॥ ॥ ॥ ॥ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ परिमुष्णंतं अपहरंतं पुराभ्यासे नगरसमीपे ॥ ४९ ॥ ॥ ॥ ॥ ॥ ॥

|| ५० || जगद्भृता जगद्धारकेणरामेण || ५१ || ५२ || ५३ || ५४ || रामस्यपादयोः कृत्वा विन्यस्य || ५५ || ५६ || ५७ || मावण्यं विनयाव

सोभवत्सर्वजगतां नेत्रचित्तमहोत्सवः ॥ चरणावरुणाब्जाभौ ववंदेविश्ववंदितौ ॥ ५० ॥ रामा
नुजोथरामस्य धन्योस्मीत्यनुचिंतयत् ॥ आकृष्याश्लिष्यमाणस्य भरतस्यजगद्भृता ॥ ५१ ॥
भावःकश्चिदपूर्वोभू ल्लज्जासंभ्रमभक्तिभिः ॥ सीतायलक्ष्मणस्यापि ववंदेचरणावसौ ५२ ॥ पारि
रेभेहरिश्रेष्ठा न्ससुग्रीवविभीषणान् ॥ शत्रुघ्नोप्येवमेवैता न्ववंदेपरयामुदा ॥ ५३ ॥ स्वागतंराम
देवेति प्रोचुःप्रांजलयोजनाः ॥ स्मितावलोकैःसंपूज्य लोकांस्तांलोकनायकः ॥ ५४ ॥ ससीता
लक्ष्मणोमातॄ र्ववंदेसकलाअपि ॥ पादुकेपादयोःकृत्वा रामस्यभरतोब्रवीत् ॥ ५५ ॥ निवेदया
मिदेवेश त्वद्राज्यंपालितंमया ॥ कोशकोष्ठबलाद्यंच धनंजीवधनंचते ॥ ५६ ॥ स्वामिंस्तवप्र-
सादेन कृतंदशगुणंमया ॥ तथाब्रुवाणंतंदृष्ट्वा वानराराक्षसाःपरे ॥ ५७ ॥ रुरुदुर्विक्लवास्तस्य
भ्रावण्यार्जवभक्तिभिः ॥ कृत्वाप्रसादंनिर्व्याजं कैकेयीतनयेप्रभुः ॥ ५८ ॥ वसिष्ठंतंकुलगुरु म-
र्चयज्जगतांगुरुः ॥ धनदंप्रतियाहीति पुष्पकंसनियुज्यसः ॥ ५९ ॥ सहसर्वैरयोध्याया बाह्योप-
वनमाययौ ॥ प्रार्थितोभरतेनेशः सर्वप्रकृतिभिस्तथा ॥ ६० ॥ सिंहासनमथाध्यास्त रामःसा
म्राज्यलक्षणं ॥ सर्वांगसुंदरंरूपं वानर्योवानराअपि ॥ ६१ ॥ ॥ ॥ ॥

नतर्त्तं ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भेजुः वानररूपं त्यक्त्वा एवं विधं रूपं दधानाः बभूवु रित्यर्थः । योगानुभावेन योगैश्वर्यबलेन ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

भेजुर्योगानुभावेन तस्मिन्जनसमागमे ॥ अलंकारांश्चकाराशु रामलक्ष्मणयोस्तदा ॥ ६२ ॥
सशत्रुघ्नोथभरतो हरीणांरक्षसामपि ॥ जानकींतामलंचक्रुः सर्वादशरथस्त्रियः ॥ ६३ ॥ कौस-
ल्याभूषयामास स्वयंवानरवल्लभाः ॥ स्नाताःसुवस्त्राभरणाः स्त्रग्विण्यश्चारुकुंडलाः ॥ ६४ ॥
विरेजुर्देवसंकाशा वानर्योवानराअपि ॥ उपायनान्युपादाय सर्वाश्चनगरांगनाः ॥ ६५ ॥ सीतां
सुग्रीवपत्नींच दृष्ट्वामुमुदिरेमुहुः ॥ सुमंत्रोमंत्रयामास विशोकविजयान्वितः ॥ ६६ ॥ अभिषेका
यरामस्य भरतेनप्रचोदितः ॥ शत्रुघ्नेनसमादिष्टः सुमंत्रोरथमानयत् ॥ ६७ ॥ रामस्यपुरतोदी
प्तं प्रोद्यत्प्रद्योतनप्रभं ॥ आरुरोहरथंरामो रम्ययासीतयासह ॥ ६८ ॥ शिखरंहेमशैलस्य वि-
द्युतेवबलाहकः ॥ दिव्याकल्पांबरधरौ दीप्तकुंडलमंडितौ ॥ ६९ ॥ रामंमारुतिसुग्रीवा वन्वया
तांगजेंद्रगौ ॥ गजाश्वादीनथारुह्य वानराःसपरिग्रहाः ॥ ७० ॥ विविशुर्नगरींतेच राक्षसाःस
विभीषणाः ॥ तूर्यदुंदुभिनिर्घोषाः शंखशब्दविमिश्रिताः ॥ ७१ ॥ जज्ञिरेजयशब्दाश्च पुरींप्रा
विशतिप्रभौ ॥ तंसभार्यमुपायांतं भ्रातृभिःपरिवारितं ॥ ७२ ॥ प्रत्युद्ययुःप्रहृष्टास्ते पौरामंग
लपाणयः ॥ हर्म्यस्थाःपुररामास्तं रामंस्वरमणीयुतं ॥ ७३ ॥ ॥ ॥ ॥

विद्युतात टितासह बलाहकःमेघः ॥ ६९ ॥ गजेंद्रगौ गजेंद्रारूढौ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ७४ ॥ ७५ ॥ निषसाद उपविवेश ॥ ७६ ॥ ७७ ॥ ७८ ॥ तोक्मभेदान् पल्लवानांवृत्तविशेषान् । चंपककुड्मलादिकं कटमलविशेषानितिवा । आतपवर्ष्याश्च आतपसहितवर्षे विद्यमानाः आतपेसतियद्वर्षमागच्छत्तत्संबंधिनीत्यर्थः । उक्तमेनत्सर्वंवसिष्ठआदिशदितिपूर्वेणान्वयः ॥ ७९ ॥ ८० ॥

अवेक्षमाणाःसुप्रीता लाजपुष्पाण्यवाकिरन् ॥ सुग्रीवस्यचतत्सख्यं वीर्यंभक्तिंचमारुतेः ॥ ७४ ॥ सकौतुकेभ्योमंत्रिभ्यो जगादजगदीश्वरः ॥ अंतःपुरंस्वतातस्य पुरंदरपुरोपमं ॥ ७५ ॥ हेमरत्नमयंदिव्यं प्रविश्यनिषसादसः ॥ रामाज्ञयाथसुग्रीवं भरतःप्रापयद्गृहं ॥ ७६ ॥ मुक्तावैडूर्यसंकीर्ण मशोकवनिकांतरे ॥ वसिष्ठस्तापसश्रेष्ठः संभारान्समुपादिशत् ॥ ७७ ॥ रामाभिषेकलोलानां प्रकृतीनामतोस्थितः॥ शुभ्रान्व्रीहिमहाव्रीहीन् प्रियंगुयवसंभवान् ॥ ७८ ॥ तोक्मभेदान्दधिमधु सर्पिष्यन्यांश्चसर्वशः ॥ अपआतपवर्ष्याश्च नानातीर्थोदकानिच ॥ ७९ ॥ न्यग्रोधोदुंबराश्वत्थ प्लक्षकाद्यांबुचोत्तमं ॥ किंकराणांसहस्राणि तान्संभारान्समाहरन् ॥ ८० ॥ वानरावाधिवार्यर्थं सुग्रीवस्याज्ञयाययुः ॥ सुषेणोजलमानिन्ये पूर्वाब्धेर्गवयस्तथा ॥ ८१ ॥ पश्चिमादृषभोयाम्या न्नलउत्तरवारिधेः ॥ शातकुंभमयैःकुंभै र्मणिश्रेणिप्रदीपितैः ॥ ८२ ॥ पल्लवावरणंवारितेसहेलमुपानयन् ॥ अभिषेकोद्यमेरामः सप्रीतोजनसंसदि ॥ ८३ ॥ विरेजेतारकगणे चंद्रश्चंद्रिकयायथा ॥ कार्येदक्षःसशत्रुघ्नो सुहृदोत्रन्यमंत्रयत् ॥ ८४ ॥ ॥ ॥ ॥

वार्धिवार्यर्थंचतुर्णां समुद्राणामुदकमानेतुं ॥ ८१ ॥ ८२ ॥ सहेलंसलीलंयथाभवतितथा॥ ८३ ॥ ८४ ॥ ॥ ॥ ॥ ॥

॥ ८५ ॥ उदंतेवृत्तांते ॥ ८६ ॥ पूर्वंसर्वेरामस्य विश्लेषार्तारामविरहातुराः अस्यरामदेवस्य घर्मेणऊष्णकालेन तोयदर्ता वर्षर्त्तौ ॥ ८७ ॥ ॥
इति युद्धकांडटीकायां पंचदशः सर्गः ॥ १५ ॥ ॥ श्रीः ॥ अहिमांशौसूर्ये ॥ १ ॥ दैवतासिंहःदेवोत्तमः ॥ २ ॥ समंदाक्षं सलज्जंयथाभवतित

अभिषेकोत्सवंकुर्वन् ऋत्विजश्चपुरोहितान् ॥ वसिष्ठोवामदेवश्च जाबालिरुतकश्यपः ॥ ८५ ॥
कात्यायनःसुयज्ञश्च तेभिषेकार्थमाययुः ॥ रामोभिषिच्यतेनाथ इत्युदंतेप्रवर्तिते ॥ पुरेजानपदे
चासी दपूर्वोयंमहोत्सवः ॥ ८६ ॥ विश्लेषार्तारामदेवस्यसर्वे प्रीयंतेस्मास्याभिषेकप्रसंगे ॥ घ-
र्मेणार्तास्तोयदर्ताविवासे संसारार्तायद्वदासेविमोक्षे ॥ ८७ ॥ ॥ इति श्रीसंग्रहरामायणे
युद्धकांडे पंचदशःसर्गः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ श्रीः ॥ अथाहिमांशावुदयंप्रयाते द्विजैःकृतस्वस्त्ययनेसमस्तैः ॥ महामणींद्रैरुपक्लृप्तमत्र
रामोमहामंटपमापदिव्यं ॥ १ ॥ सन्मंत्रतंत्रांतरकोविदैस्तै र्वसिष्ठपूर्वैरुपकल्प्यमाने ॥ महार्घमा
णिक्यमहेंद्रक्लृप्ते सिंहासनेदैवतसिंहआस्ते ॥ २ ॥ सीतापदैस्तंललितैरुपेत्य तस्थौसमंदाक्ष-
ममंदकांतिः ॥ अनन्यलब्धेनिजविष्टरार्धे न्यवीविशत्तांपरिगृह्यरामः ॥ ३ ॥ भासेवभानुः शिख
याशिखीव रेजेतयाचांद्रिकयेवचंद्रः ॥ आस्तांकवीनामितिवाक्प्रसारः श्रीश्रीकमित्रोरुपमानका-
चित् ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

था निजविष्टरार्धे निजासिंहासनार्धेन्यवीविशत् उपवेशयामास ॥ ३ ॥ शिखीववन्हिरिव आस्तांतिष्ठतु वाक्प्रसारः वाक्प्रवृत्तिः श्रीश्रीकमित्रोःश्री
लक्ष्मीःतत्कमितानारायणःतयोः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वितानेन उल्लोचवस्त्रेणखचितःसंमिश्रः सविद्युन्नवांबुदाडंबरमित्येकंपदं ॥ ५ ॥ ऊर्णुनावतिरश्चकार ॥ ६ ॥ संमूर्छयंतः श्रुतिग्रामंषस्वरान कान्विंशति मूर्छनायुक्तान् कुर्वतः । तद्यथा । आशुउत्तरमंद्रस्याद्रजनीं चोत्तरातथा । चतुर्थीशुद्धषड्जातु पंचमीमत्सरीमता । अश्वक्रांतातथाषष्ठी सप्तमीचाभिरुद्गता । षड्जग्रामाश्रितात्येताविज्ञयाःसप्तमूर्छनाइत्याद्याः । एवंप्रतिस्वरमपि मूर्छाविशेषाःसंतितत्साहितान् कुर्वंतइत्यर्थः । विकासयंतः सप्तस्वराणांश्रुतिंविकासयंतः । तत्रश्रुतयोनामस्वराणांधर्मविशेषाः श्रुतयश्चप्रतिस्वरंनियतसंख्याः । उक्तंच । तिस्रो द्वेचचतस्रश्चचतस्रास्तिस्रएवच ॥ द्वेच तिस्रश्वविज्ञेयाषड्जादौश्रुतयः स्वराइति । श्रुतीनांनामानिचोक्तानि । सिद्धिःप्रभाव नीकांतासुप्र भासन्नता शिवेत्यादीनि । श्रुतयश्चद्वितीयतृतीय चतुष्टयरूपेणसंधीभूयप्रवर्तंते । तत्रसमूहवाची मंडलशब्दः तत्रपुनः स्वरेषुश्रुतियोजनप्रकारोप्युक्तः । षड्जश्चतुः श्रुतिर्ज्ञेयोऋषभस्त्रिश्रुतिःस्मृतः । त्रि-

## उशीरगुग्गुल्वगरुप्रवृत्धो धूमोवितानेननिवार्यमाणः॥रत्नप्रदीपैःखचितःसविद्यु न्नवांबुदाडंबर माललंबे ॥ ५ ॥ मृदंगभेरीपटहादिकानां सकांस्यशंखानकगोमुखानां ॥ सवेणुवीणागणकाहलीनां शब्दोथशब्दांतरमूर्णुनाव ॥ ६ ॥ संमूर्छयंतोपिविकासयंतः सप्तस्वरांस्तान्नवतांनयंतः॥ अग्राम्यकाग्रामविशेषदक्षाः गंधर्ववर्याजगुरत्ररामं ॥ ७ ॥ तत्रागताअप्सरसोथदृष्ट्वा रूपातिरिक्ताःपुरिवारकांताः ॥ अस्पर्धमानाननृतुःप्रजानां रामस्यपार्श्वेनहिदोषबुध्दिः ॥ ८ ॥ ॥

श्रुतिश्चापिगांधारोमध्यमश्चचतुःश्रुतिः । चतुः श्रुतिः पंचमः स्याद्धैवतस्त्रिश्रुति स्मृतः ॥ निषादोद्विश्रुतिर्ज्ञेयः षड्जग्रामस्वरांतर मित्याद्युक्तप्रकारेण स्वरान्विकासयंतइत्यर्थः । सप्तस्वरान्निषादादिसप्तस्वरान् । निषादर्षभगांधारषड्जमध्यमधैवताः । पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताः स्वराइत्यमरः । तान्तथाप्रसिद्धान्स्वरान् । नवतां पदेपदेगानचातुर्येणनूतनत्वंनयंतः प्रापयंतः । अग्राम्यकाः ग्राम्यभोगासंसक्ताः । क्षुद्रांवषय भोगेष्वलंप० इत्यर्थः ग्रामविशेषदक्षाः ग्रामोनामस्वरसमूहस्यस्थानमुच्यते । सचग्रामस्त्रिविधः षड्जग्रामोमध्यमग्रामो गांधारग्रामश्चेति । सप्तस्वराणांमध्येएकैकस्यापरस्यगानकरणस्थानांतरे भेदोभववि । इत्याद्युक्तप्रकारेणग्रामविशेषदक्षाः ग्रामविशेषकरणकुशलइत्यर्थः । जगुःगानंकृतवंतः ॥ ७ ॥ रूपातिरिक्ताः अतिरूपलावण्यवतीः वारकांताः वेश्यांगनाः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९ ॥ दधेदधार यवीयान्कनिष्ठः शत्रुघ्नश्चयंः ॥ १० ॥ पालनरक्षकः [illegible] ॥ जगतां लोकानां ॥ ११ ॥ ईर्तमन्यइति विशेषतिशोजना । इति मिथ्यामन्यशतिंदा ॥ १२ ॥ इंदुनां [illegible] ॥ १३ ॥ १४ ॥ परार्घ्यान्-

अग्रेविधायाथविधातृसूनुं तेषामदेवादिमहामुनींद्राः ॥ रत्नोज्वलैर्हैमघटैर्महेशं तमभ्यषिंचन्सलिलैःसमस्तैः ॥ ९ ॥ सितातपत्रंतपनीयदंडं दधेमुनिभ्रातनयोयवीयान् ॥ संचालयेतामथचामरेद्वे देवस्यसुग्रीवविभीषणौतौ ॥ १० ॥ नकेवलंकोसलपालकोयं पातामुवःसप्तसमुद्रकांच्याः ॥ इतीर्यमाणेमनुजैर्जगाम स्मितंत्रयाणांजगतांसनाथः ॥ ११ ॥ साधारणंभूषणभूष्यभावं स्यन्येप्रभोस्तस्यचभूषणानां ॥ परस्परालंकियेतिमिथ्या सभूषणंसर्वविभूषणानां ॥ १२ ॥ हेम्नांबुजानांरचितांशतेन मालांशुभांसौरभलोलभृंगां ॥ बभाररामःपवनेनदत्तां चंद्रांशुगौरीमपिहारमालां ॥ १३ ॥ गवांसलक्षाणिसुलक्षणानि ददौद्विजेभ्योबहुलानिदेवः ॥ त्रिंशच्चकोटीर्वरहाटकानां कामांश्चसर्वान्परिपूर्णकामः ॥ १४ ॥ रत्नान्यनर्घ्याणिवरांबराणि हारान्परार्घ्यांश्चविभूषणानि ॥ ददौसदेवोजनकात्मजायै तेभ्यश्चकामान्कपिराक्षसेभ्यः ॥ १५ ॥ विभूषणैस्तैःपरिभूषितांगी सीतावरिष्ठावरहारमालां ॥ उन्मुच्यकंठादवलोकयंती ददर्शदेवस्यमुखेंदुबिंबं ॥ १६ ॥

अत्युत्तमान् ॥ १५ ॥ उन्मुच्यत्यक्त्वा ॥ १६ ॥

राजराजः चक्रवर्तीसन् राजीवसमाननेत्रः पद्मसमलोचनः । महामहाः अतिबहुलतेजाः ॥ २४ ॥ तांकीर्तिंवदामः ॥ २५ ॥ जगतिसमस्तजने का मंसम्यक् नवविधगुणभाजा । श्रवणंकीर्तनंविष्णोः स्मरणंपादसेवनं । अर्चनंवंदनंदास्यंसख्यमात्मनिवेदन मित्युक्तप्रकारेण नवविधगुणभाजा नव-विधगुणयुक्तयाएकांत भक्त्यामुख्यभक्त्या एवमेवंपूर्वोक्तप्रकारेण पुनरपि अनंतवारमनेनैवप्रकारेण । भद्रांभारतींवाचंगदतिसति व्यक्तवाच

सराजराजःपरिराजमानो रामोथराजीवसमाननेत्रः ॥ महामहाःसर्वमहाजनानां मनोदशामेषम
होत्सवोभूत् ॥ २४ ॥ कीर्तिंवदामतवतांश्रुणुवामराम ध्यायमरामचरणौचभजामराम ॥ अर्चा
मरामजयरामनमामराम दासावयंसहचरास्तवरामक्लृप्ताः ॥ २५॥ जगतिगदतिभद्रांभारतीमे
वमेवं नवविधगुणभाजाकाममेकांतभक्त्या॥अरमतपरमश्रीरामयारामदेवः स्वयमकृतकपूर्णानंद
संदोहदेहः ॥ २६ ॥ ॥इतिश्रीसंग्रहरामायणे युत्धकांडे रामांके पंडिताचार्यकृतौ षोडशःसर्गः
॥ १६ ॥ युत्धकांडःसमाप्तः ॥ श्रीकृष्णार्पणमस्तु॥ ॥ ॥ ॥ ॥ ॥

द तिसति उत्कासर्वदास्वसमीपेस्थितवतिसतीत्यर्थः । परमश्रीरामया परमया श्रीरामया सीतयासह अरमतरमणमकरोदित्यन्वयः । परमइतिरामस्ये वाविशेषणत्वेनभिन्नंपदंवा । स्वयंतु अकृतपूर्णानंदसंदोहदेहः अकृतकः स्वाभाविकः पूर्णोयः आनंदसंदोहः आनंदसमूहः तदात्मकदेहवानित्यर्थः । एवंविधोपिदेव्यै परमानुग्रहंकर्तुं तत्स्वरूपयासीतया अरमतेत्यभिप्रायः ॥ २६ ॥ ॥ इति युद्धकांड टीकायां षोडशःसर्गः समाप्तः ॥ १६ ॥





॥ अथ श्रीसंग्रहरामायणे उत्तरकांड प्रारंभः ॥

॥ श्रीगुरुभ्योनमः ॥ उपासत उपासितचक्रुः ॥ १ ॥ अभ्यर्थितदेन अभ्यर्थितं अभीष्टंददातीत्यभ्यर्थितदः तादृशेन भूम्नाऽपरिपूर्णेन रामेण कुंभयोनिः अगस्त्यः माशब्दः शब्दोमास्तुइत्युक्त्वा वेत्रपाणौ वेत्रयुक्तहस्तेपुरुषे आयतिसति आगत्यवारयित्वा स्थितवतिसति ॥ २ ॥ सुराजन् सम्यक्शोभमान ॥ ३ ॥ निराचकर्थ निराकृतवानभूः ॥ ४ ॥ सहस्रभानंसहस्ररश्मियुक्तं भानुंसूर्यं संतमसस्य अंधकारस्य हंताविनाशकः ॥ ५ ॥ यतः सेवनात् सम-

॥ श्रीरामचंद्रायनमः ॥ श्रियासमंश्रीरमणंनिषण्ण मगस्त्यमुख्यमुनयःसभायां ॥ उपासतोपाश्रितमात्मभक्त्यै हर्षेणहंसाइवदुग्धसिंधुं ॥ १ ॥ अभ्यर्चितोभ्यर्थितदेनभूम्ना शृण्वत्सुसर्वेषुस कुंभयोनिः ॥ माशब्दइत्यायतिवेत्रपाणा वुदाहरद्वाक्यमुदारभावं ॥ २ ॥ स्वस्त्यस्तुसद्योभवतः प्रसादा द्राजन्सुराजन्रघुवंशदीप ॥ कीर्तिंचतेकीर्तयितुंप्रभुःस्या च्छ्रीमान्हनूमांश्चतुराननोवा ॥ ॥ ३ ॥ सुमालिमालिप्रमुखान्सुरारीन् नारायणात्मैवनिराचकर्थ ॥ रामाधुनारावणमुग्रवीर्यं हत्वात्वमाश्वासयसीशावश्वं ॥ ४ ॥ विनाजगन्नाथमनन्यनाथं त्वांराक्षसानांक्षयकृत्कएव ॥ सहस्रभानुंनविनाहिभानुं भवेत्काचित्संतमसस्यहंता ॥ ५ ॥ जाताहिदेवास्तवसेवनर्थ ममीचसर्वेनरवानरेंद्राः ॥ पुंसांभवत्सेवनमेवकृत्यं यतःसमग्रःपुरुषार्थसार्थः ॥ ६ ॥ इतिब्रुवाणंविविधाःकथाश्च मुनिंमुनींद्रैःसहितंमुकुंदः ॥ यज्ञाययज्ञाधिपतिर्निमंत्र्य संपूज्यपूज्यंविससर्जत्हृष्टं ॥ ७ ॥ मुमोचनम्रान्नरवानरेंद्रा न्पौरान्प्रभुर्वैषयिकांश्चसर्वान् ॥ सूर्येस्तमायातिसलोकनाथः संध्यामवंध्यांसुधियामुपास्त ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ग्रः पुरुषार्थसार्थः पुरुषार्थसमुदायः ॥ ६ ॥ ७ ॥ आयातिसति सुधियां उत्तमबुद्धीनांनृणां अवंध्यांसफलां उपास्त उपासितवान् । लोकधर्मशिक्षार्थ मित्यर्थः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शय्याशरणं शयनगृहं ॥ ९ ॥ पयःफेननिभं अतिनिर्मलंमृदुचेत्यर्थः । विष्वक्परितः अध्यशेत अधिशयितवान् । भोगींद्रभोगं शेषशरीरं ॥ १० ॥ नीरजसं निर्गतरजोगुणादिसमस्तविकारं । विरुद्धारामचित्तस्याननुकूला ॥ ११ ॥ उत्सुकानां आकांक्षमाणानां ॥ १२ ॥ स्निग्धस्वराः रम्यस्वरवंतः स्निग्धत्वंनामकंठगुणः स्निग्धोरुक्षः आर्द्रीभाववानित्यर्थः । तत्रस्वराः सप्तपूर्वोक्ताः । तत्र । षड्जंमयूरोवदतिगावस्तुऋषभ भाषिणः । अजाविकंतुगांधारं क्रौंचः क्वणतिमध्यमंपुष्पसा धारणेकालेपिकः कूजातिपंचमं । धैवतंह्रेषतेवाजी निषादंब्रुवतेगजाः । पीडितपंचमाख्याः वशीकृतपंचमाख्यस्वरवंतः । पंचमस्वरस्योषःकालानर्हत्वात्पंचमस्वरमल्पप्रयोगवंतंकुर्वतइत्यर्थः । अत्रश्रुतिसमधिकत्वेनेत्यपिग्राह्यं । तत्रपंचमस्वरस्य श्रुतिसम

प्रविश्यचांतःपरमंबुजाक्षः पुरंदरांतःपुरकांतिहारि ॥ अन्नानिपीयूषमयानिभुक्त्वा विवेशशय्याशरणंशरण्यः ॥ ९ ॥ तल्पंपयःफेननिभंपवित्रं विष्वङ्मणिश्रेणिघृणिप्रदीप्तं ॥ सीतापतिःकोमलमध्यशेत भोगींद्रभोगंभगवानिवाथ ॥ १० ॥ तन्नित्यमुक्तंनिबवंधदोर्भ्यां मरंजयन्नीरजसंतदेव ॥ स्वाराममेवारमयन्नरामं सीताविरुद्धानतथापिजातु ॥ ११ ॥ रामाभिषेकोत्सवमुत्सुकानां प्रशंसतामभ्यभिनंदतांच ॥ साशर्वरीसर्वजगज्जनाना मानंदसंदोहकरीबभूव ॥ १२ ॥ स्निग्धस्वराःपीडितपंचमाख्याः षड्जंस्वरंभिन्नकतानयंतः ॥ विनर्षभास्त्र्यंपुरःषर्षभस्य ववंदिरेबंदिगणाःपुरांते ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

धिकत्वंकथं । इत्थं । षड्ज श्चतुः श्रुतिर्ज्ञेयोऋषभस्त्रिश्रुतिःस्मृतः । द्विःश्रुतिश्चापिगांधारोमध्यमश्चचतुः श्रुतिः । चतुः श्रुतिःपंचमस्या द्धैवतः स्त्रिश्रुतिस्मृतः । निषादो द्विश्रुतिश्चैवषड्जग्रामः स्वरांतरामिति । तत्रच यापिषड्जमध्यमाभ्यांसमानश्रुतित्वं । पंचमस्यतथापिऋषभगांधार धैवतनिषादापेक्षयाश्रुतिसमधिकत्वं । ततादिवाद्यविशेषणसाहततयेत्यपिग्राह्यं । चतुर्विधंतावद्वाद्यं । ततमानद्धं घनंसुषिरमिति । ततंवीणादिकंवाद्यं । आनद्धंमुरजादिकं घनंकांस्यतालादिकं सुषिरं वंशादिकं तत्रततयुक्तंगायंतइत्यर्थः । षड्जस्वरंषड्जनामकं स्वरविशेषं भिन्नकतां स्वस्वरूपमात्रेणावस्थिततां नयंतः प्रापयंतः । तत्रायंविभेदाख्यःप्रकारः । तावत्षड्जस्वरः ऋषभरूपः पंचमरूपः स्वात्मरूपश्चेति । तत्रऋषभरूपंपंचमरूपंपृथक्कृत्यात्मरूपेणैवव्यवस्थि

तः । षड्जोमिश्रकइत्युच्यते । षड्जंमिश्रकंकृत्वा षड्जानु[illegible]वप्यृषभपंचमौत्यक्त्वा स्वात्मरूपेणषड्जं मत्युंजानाइत्यर्थः । अकाकितयाश्रावकगुण-
युक्तत्वेनचेत्यपिग्राह्यं । तत्रश्रावकोनामकंठजोगुणः । येदूराच्छ्रवयंत्यन्येत्वनर्थाम्मधुरादयः । काकीत्या घाःकंठदोषास्तत्रकाकीत्रिलिंगकइतिवैजयंती
ऋषभाख्यंस्वरंविनातंत्यक्त्वा अरुणोदयकालेऋषभाख्यस्वरविशेषेण गानंकर्तुमनुचितत्वात्तंस्वरंचत्यजंतइत्यर्थः । बंदिगणः स्तुतिपाठकसमूहाः । पुरां
तअंतःपुरे ॥ १३ ॥ द्विजाःपक्षिणोब्राह्मणाश्च विरलःशिथिलःनष्टइत्यर्थः । विधुःचंद्रःविधामाविगतकांतिरभूत् कुमुदंकुलदकुसमं मुदाविकासेनच स्तं
निरस्तं विकासरहितमभूदित्यर्थः । विकासमर्हतीतिविकासंप्राप्तुमर्हति ॥ १४ ॥ उषासिचक्रांगनाचक्रवाकस्यस्त्री रागलीलांभजाति कोशिकीचउलूकस्य
स्त्रीतुउषासिरागलीलामपास्यतीत्यन्वयः । स्वःसुंदरीस्वर्गांगना ॥ १५ ॥ उन्मोच्यमोचयित्वा पतिबाहुबंधंपतीनामालिंगनं । उन्मुच्येतिपाठेपक्षालिं-

द्विजाःप्रबुद्धाविरलोंधकारो विधुर्विधामाकुमुदंमुदास्तं ॥ विकासमर्हत्त्वधनार्हणीयं नवांबुजंत्व-
न्नयनांबुजंच ॥ १४ ॥ भजत्यपास्यत्यपिरागलीलां चक्रांगनोषस्यथकौशिकीच ॥ यथातवोरु
क्रमविक्रमांते स्वःसुंदरीचासुरसुंदरीच ॥ १५ ॥ उन्मुच्यरम्यंपतिबाहुबंधं पतिव्रताःपत्युरुपेत्य
पादं ॥ श्रीरामरामेतिकलंवदंत्यः कुर्वंतुसुप्रातरिमाःप्रजानां ॥ १६ ॥ प्राच्यामुखंरागगुणेनभा
ति कांतेनकाल्येनहिसंगतेयं ॥ प्रसोष्यतेसांप्रतमेतयार्कः कौसल्ययेवात्रभवान्प्रभावान् ॥ १७ ॥
विधिर्विभुत्वस्यहरोहिमन्योः कीर्तेर्महेंद्रोमदनोपिकांतेः ॥ बुध्येगुरुश्चेतिभवद्गुणानां बिंबोष्ठसर्वेप्र
तिबिंबमेते ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

गनंस्वयमत्कंस्यर्थः । कलंअव्यक्तमधुरंयथाभवतितथा सुप्रातःशोभनंप्रातः ॥ १६ ॥ यंप्राचीदिक् पूर्वदिङ्नाम्नीस्त्री काल्येनउषःकालनायकेनकां
तेनसंगतेतिहियस्मात्तस्मात्प्राच्यांमुखंरागगुणेन रागाख्येनगुणेनभातीत्यन्वयः । प्रसोष्यतेप्रसूतः करिष्यतेसांप्रतमिदानींएतया[illegible]दिशा अर्कःसूर्यः
प्रभावान्उत्तमप्रभायुक्तः ॥ १७ ॥ हेबिंबोष्ठराम एतेसर्वेभवद्गुणानांप्रतिबिंबभूताःतत्रविधिर्ब्रह्माभवतःतवविभुत्वस्य विभुत्वनामकगुणस्यप्रतिबिंबभूतः
हरःरुद्रःतमन्योःप्रतिबिंबभूतः महेंद्रःतेकीर्तेःप्रतिबिंबभूतःमदनः कामःतेकांतेःसौंदर्यस्यप्रतिबिंबभूतः गुरुबृहस्पतिश्चतवबुद्धेःप्रतिबिंबइतिसर्वत्रसंबंधः ।
प्रतिबिंबत्वंनामतदधीनत्वेसतितत्सदृशत्वं॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इत्यादि एवमादिस्तुतिप्रकारयुक्तं अकाकिकाकिनामककंठदांपराहितं तावत्ततःपूर्वमेउपाश्रितंसमीपंप्रत्यागत्याश्रितमभूदित्यन्वयः हेमोदपात्रैःस्वर्णकल
शैः ॥ १९ ॥ दिशेत्प्रयच्छेत्कुर्यादित्यर्थः । सल्लक्षणाशिक्षणार्थं सतांपुरुषाणांलक्षणानिस्वधर्मनष्ठादीशिक्षयितुं ॥ २० ॥ प्रतिदायप्रतिदत्वा देयदा-
तुंयोग्यंवस्तु उपातिष्ठत्उपस्थितोभूत्इक्ष्वाकुभिइक्ष्वाकुपूर्वैःराजभिः ॥ २१ । पुंसांललामतिलकभूतःएषःरामःहरिचंदनललामतिलकंकृत्वेत्यन्वयः
त्रिलोकैकभूषणंत्रैलोक्यस्यमुख्यालंकारभूतः ॥ २२ ॥ रम्यात्सुवर्णमयात् । स्वसमाधिधाम्नःस्वस्यजपगृहात् सूर्यान्वयसूर्यःसूर्यवंशप्रदीपकः गि-

इत्यादितद्गीतमकाकिशृण्व न्यावत्स्वतल्पादवतिष्ठदीशः ॥ उपस्थितंतत्रनृणांसहस्रं हेमोदपात्रै
रुदकंदधानं ॥ १९ ॥ यन्नामसंकीर्तनमात्रमत्र दिशेन्महापातकमोक्षशुध्धिं ॥ सनित्यशुध्धोपि-
किलात्मशुध्धिं चक्रेथसल्लक्षणाशिक्षणार्थं ॥ २० ॥ स्नातःसुवासाःसमुपास्यसंध्या हुत्वाथहव्यं
प्रतिदायदेयं ॥ अग्नीनुपातिष्ठदुताग्निहोत्र गृहेष्वथेक्ष्वाकुभिरादृतेषु ॥ २१ ॥ पुंसांललामैषल-
लामकृत्वा नवार्कभासाहरिचंदनेन ॥ विभूषणानांचविभूषणत्वं ययौत्रिलोकैकविभूषणंसः ॥ २२ ॥
निर्गम्यरम्यात्स्वसमाधिधाम्नः सभांमहारत्नमयींविवेश ॥ यावत्ससूर्यान्वयसूर्यईशः सूर्योगि-
रेर्व्योमविवेशतावत् ॥ २३ ॥ आसीनमेतंमणिहेमरूपे सिंहासनेसिंहमिवाद्रिशृंगे ॥ उपासता
रादनुजाविनीता भक्तास्तथावानरराक्षसेंद्राः ॥ २४ ॥ सभांगतेस्वामिनिसानुरागा सामंतमा-
लात्रसमंततोभूत् ॥ हरिन्मणिःश्रीरधिकप्रभोस्याः सनायकोनायकतामुपायात् ॥ २५ ॥ ॥

रेःउदयगिरेःव्योमआकाशंविवेशआरूढोभूत् ॥ २३ ॥ आरात्समीपतःअनुजाःलक्ष्मणाद्याः ॥ २४ ॥ सामंतमालामंडलादिपतीनांपंक्तिःसमंततः
परितःअभूत्स्थिताभूत् हरिन्मणिश्रीःइंद्रनीलरत्नवत्श्रीमान् । अधिकप्रभःमहाप्रभायुक्तःरामःअस्याःसामंतमालायाःनायकःअधिपतिःसन्नायकतां
नायकरत्नतां चूडामणित्वंमापेत्यर्थः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ।

धियैवबुध्यैवस्वनमतःस्वात्मेनेनमस्कारंकुर्वाणान् न्यवीविशतउपवेशयामास ।न्यायनिदर्शनायशिष्यादिभिःगुर्वाद्याःपूज्याइतिलोकन्यायप्रदर्शनार्थंतु
र्णंशीघ्रंचलन्उत्तिष्ठन् ॥ २६ ॥ स्वालोकलोलान्स्वदर्शनेलंपटान्समुदाहरत्आज्ञापयामास । उवाचेत्यर्थः ॥ २७ ॥ समस्तविद्याभिरतौ समस्तस
छास्त्रपाठादिनिमित्तसंतोषेद्राढिष्ठाःस्थिरबुद्धयः सदापिविद्यागोष्ठीनिरताइत्यर्थः । अकैतवेननिर्व्याजतया छद्माभावेनेतिवा । मामेकमेवसेवध्वमितिसं-
बंधः । मामेकंप्रधानंसर्वोत्तममित्यादिप्रकारेणसेवध्वमितिवा ॥ २८ ॥ देहेअहमित्याग्रहोमोहः देहानुगतेविषयभोगादौममेत्येषआग्रहो मोहोमाभूत्मा

पुरोधसस्तत्रवसिष्ठपूर्वा न्समागतान्स्वन्नमतोधियैव॥ न्यवीविशन्यायनिदर्शनाय तूर्णंचलन्नास
नतःसनाथः ॥ २६ ॥ स्वालोकलोलानवलोक्यलोकान् लोकाधिनाथःसकलात्सभायां॥ स्मिता
मृतेनप्रतितर्पयंस्ता न्वाणीमुदारांसमुदाहरत्सः ॥ २७ ॥ वर्णाश्रमाचारविशेषनिष्ठा वेदांतवि-
द्याभिरतौद्रढिष्ठाः ॥ मामेवसेवध्वमकैतवेन प्रजाःप्रजानामधिनाथमेकं ॥ २८ ॥ अहंममेत्याग्र
हमोहएष देहेचदेहानुगतेचमाभूत् ॥ मोहेंधनेस्मिन्भवदावन्हौ तातप्यमानानवलोकयध्वं ॥
॥ २९ ॥ सर्वेंद्रियाणांविषयेविषाभे संगंप्रसंगंचविमुंचतैनं ॥ संमोह्यमांगल्यकरोत्रमीनो निद
र्शनंस्याद्बडिशानुषंगी ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्त्वितिसम्बंधः । मोहेंधनेमोहाख्येंधनयुक्ते भवदावन्हौसंसाराख्यदावानले तातप्यमानान्भृशंपुनःपुनःपरितस्तप्यमानान् तस्मादहंकारममकारादिकं
त्यक्तव्यमित्यर्थः ॥ २९ ॥ विषयेशब्दस्पर्शादिविषये विषाभेविषसमे संगंसंबंधंप्रसंगंवार्तां आत्मएवानर्थकारणत्वादित्यर्थः । अत्रसंगदोषस्यानर्थ
हेतुत्वे निदर्शनंदृष्टांतीभूतः बडिशानुषंगीमत्स्यवेधजालानुषंगवान् संबंधवान्बडिशस्यबंधनस्यसम्यक्संबंधइत्यर्थः ।बडिशंमत्स्यबंधनमित्यमरः । मत्स्य
किंचित्मांसाद्याकांक्षयास्वयमेवतत्रपतित्वायथाक्रियते तद्वद्विषयादिनिषेवणमित्यर्थः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥

नभस्वान्सूर्यः वायुरिवा । सचसंगोज्झितो भवति विष्णुपदे आकाशे स्वयमाश्रितो भवति दैवोपपादितं विषयदेशादिकंचभजाति। लेपंनार्हति उदाहरणंदृष्टांतः निःसंगा भूत्वाहरिमेवान्ववर्ततेत्यर्थः ॥ ३१ ॥ सारूप्यं समानरूपत्वं अदुःखसौख्यं दुःखलेशेनापिराहिततया अत्युद्रिक्तानंदात्मकं ॥ व भीतिमुक्ताः संसार भयानिर्मुक्ताः कीटः पेशस्कारिणा पेशसोतर्वेशितो जंतः पेशस्कृतः पेशस्कारिणोजंतोः सारूप्यमिवेत्यन्वयः । पेशइति भित्यादौक्रियमाणं अतिदृढं क्रिमपिमृदादिमयंगृहाद्याकारं तत्कुर्वन् भृंगादिजंतुविशेषः पेशस्कृदित्युच्यते । यः कश्चन कीटः पेशस्कारिणा पेशस्यंतर्नि

संगोज्झिताविष्णुपदैकनिष्ठा दैवोपनीतान्विषयान्भुजंतः ॥ नलेपमर्हंतिमहानुभावाः साक्षादिहोदाहरणंनभस्वान् ॥ ३१ ॥ मामेवनाथंसततंस्मरंतो ममैवसारूप्यमदुःखसौख्यं ॥ युग्मंरूभश्चंभवभीतिमुक्ताः पेशस्कृतःकीटइवाचिरेण ॥ ३२ ॥ एवंसदेवोनुदिनंप्रवृत्त स्ततःकदाचित्स्थिरभक्तिनम्रान् ॥ वैदेहकैकेयमुखान्महीशान् मुमोचसंपूज्यसमस्तपूज्यः ॥ ३३ ॥ स्मितेंदुनाव्यक्तिमुपागतेन संपूरयन्वानरसंघसिंधुं ॥ उवाचसुग्रीवविभीषणादीं नाप्तानुपाप्तांस्तनयंचवायोः ॥ ३४ ॥ महांमनोदेहवचांसियूयं समर्पयंतःसाहृद्वृत्तिकानि ॥ तेनैवमूल्येनपुमर्थमूलं संप्राप्तवंतोममदास्यमग्र्यं ॥ ३५ ॥ अहंतदानृण्यमवाप्तुकामो दत्वापिसाम्राज्यमिदंनतृप्तः ॥ तस्मादनंतंवितरामिमोक्षं दास्यस्यसाक्षादनुरूपमर्थं ॥ ३६ ॥ ॥ ॥ ॥

क्षिप्तः तेनपेशस्योपरिपरितो भ्राम्यमाणंतमेवांततोध्यायन् यथाताहशो भवति तथामत्तोभिन्नाएव भवंतोमामेवमदुक्तप्रकारेण ध्यायंतो ममसारूप्यं समानरूपत्वंभिन्नाएवभाश्यथेत्यर्थः ॥ ३२ ॥ ३३ ॥ व्यक्तिं अभिव्यक्तिं आप्तान् प्रियान् उपाप्तानसमीपमागतान् ॥ ३४ ॥ सहृद्वृत्तिकानि देहवर्तनादियुक्तानि । मूल्येन अर्घेण पुमर्थमूलंपुरुषार्थस्यादिकारणभूतं ॥ ३५ ॥ तदानृण्यं तस्याः भवत्सेवायाः आनृण्यं ऋणराहितत्वं वितरामिकरोमि ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अर्धमौल्यभूतंसेवनकौस्तुभस्यसेवाख्यकौस्तुभमणेः मुक्त्याख्यंमोक्षनामकं अन्याकांक्षानुपाधेः निमित्तांकांक्षारहितभवति। मद्भक्त्युपाधेःममभक्त्याख्य कारणादेवनान्यस्मात् ॥ ३७ ॥ यःअब्जयोनिःभोगयोगादिगुणैःभोगयोगपूर्वकैःगुणैः । योगःउपायःभिन्नःसन्नसमइवमदनुग्रहातिशयात् आभासः प्रतिबिंबःअवभातःपरिदृष्टःतस्यएवंमत्समस्यसहभोगनाम मम वैकुंठलोकभोगानांभातिविभूतगुणयुक्तत्वात् सहभोगाख्यं ॥ ३८ ॥ अस्यांकिंभाविच-

हनूमतःसेवनकौस्तुभस्य मुक्त्याख्यमर्धंसदृशंनमन्ये ॥ भक्तस्वभावान्नमनोउपाधे मद्भक्त्युपा-
धेःस्वयमीक्षतेयः ॥ ३७ ॥ योभोगयोगादिगुणैःसमोमे स्वैरिवाभासइवावभातः ॥ तस्याब्जयो
नेःसहभोगनाम पदंहनूमन्प्रदिशामितुभ्यं ॥ ३८ ॥ अस्यांकथायांममचंद्रगौर्यां प्रादुर्भवंत्यांनि
गमांतसिंधोः ॥ मग्नःसुधायामिववत्समूर्च्छो दृष्णीष्वकामानखिलान्यथेष्टं ॥ ३९ ॥ उत्कोतिवैदूर्य
निबद्धमध्यं मुक्ताकलापंसकलापगौरं ॥ उन्मुच्यकंठान्निदधेस्यकंठे रामःस्वयंमूर्तमिवप्रसादं ॥
॥ ४० ॥ भक्तिर्ममस्यान्त्वयिवर्धमाना प्रीतिस्त्वयस्यान्मयिवर्धमाना ॥ इमौहिकामौममनापरःस्या
न्नाथेतिरामंहनुमान्बभाषे ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यज्ञरक्षादिरूपायां चंद्रगौर्यांचंद्रवद्धवलायां उपलक्षणमेतत्। सर्वदापरहितायामित्यर्थः । निगमांतसिंधोःउपनिषदाख्यमहासमुद्रात्तृष्णीष्वकामान् ॥ ३९ ॥ मुक्ताकलापंमुक्तामालां सःरामःकलापगौरंकलांपातीतिकलापश्चंद्रः तद्वद्गौरंउन्मुच्यत्यक्त्वानिदधेन्यस्तवान् ॥ ४० ॥ अस्यहनूमतः अपरःकामोनस्यात् इमौकामौवरौ ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भुजांतरेणवक्षसा लक्ष्मीनिवासेनलक्ष्म्याआवासभूतेन भुवनावनाभ्यांसकललोकरक्षकाभ्यां परिरेभेआलिंगनमकरोत् । तद्द्वयंतेनहनुमताप्रार्थितं मम वर्धमानाभक्तिस्त्वयिस्यात् तववर्धमानाप्रीतिर्मयिस्यादितिप्रार्थितंवरद्वयं ॥ ४२ ॥ रत्नाभरणानिरत्नघटितान्याभरणानि ॥ ४३ ॥ अपगम्यनिर्गम्य कल्पांघ्रिपेंद्रात् कल्पवृक्षप्रवरात् काकतुंडींकाकतुंडीलतां ॥ ४४ ॥ भरणंपालनं विष्णोर्विमानं इक्ष्वाकुणाचतुर्मुखादानीतं यदिदानीमपिश्रीरंग-

लक्ष्मीनिवासेनभुजांतरेण प्रभुर्भुजाभ्यांभुवनावनाभ्यां ॥ तंपावमानिंपरिरेभआशु द्वयंचतद्वत्ख
पदंचदत्वा ॥ ४२ ॥ दिव्यानिरत्नाभरणानिदत्वा वस्त्राणिभद्राणिरघूनिचेशः ॥ संतर्प्यसुग्रीव
विभीषणादी न्सर्वांश्चगंतुंस्वगृहानवोचत् ॥ ४३ ॥ त्वत्पादपार्श्वादपगम्यनाथ राज्यंनयामोनय
शोकमूलं ॥ कल्पांघ्रिपेंद्रादिवकाकतुंडी मित्यूचतुस्तौकपिराक्षसेंद्रौ ॥ ४४ ॥ प्रजाधिपाभ्यांभ
रणंप्रजानां शिश्रूषणंमेक्रियतांयुवाभ्यां ॥ उक्त्वेतिविष्णोःप्रददौविमानं विभीषणायान्वयभूषणं
सः ॥ ४५ ॥ संरंजयन्नंगदमंगबालं भुक्त्वाचिरंराज्यमुपेहिमांत्वं ॥ सुषेणतारादिगणैःप्रियैस्सु
ग्रीवमित्यभ्यधिताथभूमा ॥ ४६ ॥ स्तुवंतिभूयःप्रणमंतिकेचि त्परिक्रमंतेथपरेपुरैनं ॥ आरोदे
णावानरराक्षसौघा नाथंविहातुंबतनाथशेकुः ॥ ४७ ॥ ॥ ॥ ॥ ॥

क्षेत्रेतिष्ठति अन्वयभूषणंस्वकुलभूषणायितं ॥ ४५ ॥ हेअंगसुग्रीवत्वंबालमंगदंसंरंजयन्नितरांरंजयन्चिरंराज्यंभुक्त्वाप्रियैः सुषेणतारादिगणैःसहपश्चान्मा मुपैहीत्यन्वयः ॥ अभ्यधितआज्ञापयामास भूमाअनंतगुणपरिपूर्णोरामः ॥ ४६ ॥ स्तुवंतिपुरास्तुतिंचक्रुरित्यादि । परेकेचनएनंरामंपरिक्रमंतेपुराप्रद- क्षिणंचक्रुःविहातुंसंत्यक्तुं अथतेनशेकुःशक्तानबभूवुः ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेवानरादयःनैवव्यमुचत् सर्वथानमुक्तवान् देवःद्योतनादिगुणवान् कृपालुःकृपापूर्णकलशः । आलुरितिकलशउच्यते नैवव्यमुचदित्यत्रहेतुमाह । यदवसादिति । उरुतापध्वंसनः समस्तसंसारसंतापविनाशकः तेषांगतानांसर्वेषामपि तेषामादिसर्वेशोरामस्तदन्तरंतोदिति । गमनेभ्योमहदनुग्रहम-करोदित्यर्थः ॥ ४८ ॥ ॥ इति उत्तरकांडटीकायां प्रथमःसर्गः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कथमपिगतवंतस्तेनिजंगेहमापु र्व्यमुचदपिगतांस्तान्नैवदेवःकृपालुः ॥ यदवसदुरुतापध्वंसन-श्चंद्रचारु र्मनसिमनसितेषांहंतरामोभिरामः ॥ ४८ ॥ ॥ इति श्रीसंक्षेपरामायणे उत्तरकांडे प्रथमःसर्गः ॥ १ ॥ ॥ श्रीः ॥ विश्वेश्वरःप्राज्यमवाप्यराज्यं कृपानिधिर्लक्ष्मणमाचचक्षे ॥ शुश्रूषयावत्सतयास्मितुष्ट स्त्वंयौवराज्यंभजशोभनेति ॥ १ ॥ स्वर्गाधिपत्यादपवर्गसौख्या त्साम्राज्यभोगाच्चगरीयसींते ॥ पादाब्जसेवांहिवृणेनचान्य त्प्रसीददेवेत्यवदत्सधन्यः ॥ २ ॥ तामेवतस्मैप्रतिदायदेवः प्रीतोभुजाभ्यांपरिरभ्यचैनं ॥ सयौवराज्यंभरतायदत्वा चक्रेद्रुतंचक्रधरोभिषेकं ॥ ३ ॥ विमानमारुह्यसपुष्पकाख्यं प्रत्यर्पितंवैश्रवणेनभूम्ने ॥ देवप्रसीदेतिवदन्न-भस्थं स्मृतंत्वमेहीतिमुमोचरामः ॥ ४ ॥ नारायणोपास्तिपरायणानां नान्यत्रभक्तिःकुहचित्प्रजानां ॥ तद्भक्तवर्गोस्थिरभक्तिभाजां रामेभुवोराजनिराजमाने ॥ ५ ॥ ॥ ॥ ॥

॥ श्रीः ॥ प्राज्यंमहत्भजआतिष्ठ ॥ १ ॥ वृणेवरयामि ॥ २ ॥ तामेवसेवामेव ॥ ३ ॥ ४ ॥ कुहचित्क्वचित् ॥ ५ ॥ ॥ ॥ ॥ ॥

आक्षिप्युक्तानेत्रसहिता सकर्णाकर्णसहिता सकथार्चनायां कथयार्चनायाअंगनास्त्री कांतासी सकांतापार्चसहिता ॥ ६ ॥ मनोयोगकृतः मनसासंबंधकुर्वाणाः । स्मरंतोध्यायंतइत्यर्थः । सर्ववेदांतकृतांतसारं समस्तोपनिषत्सिद्धांतरहस्यप्रतिपाद्यभूतंविचारयंति समस्तसहाख्याख्याना दिनाविचारितवंतः मीमांसांकुर्वंतइत्यर्थः ॥ ७ ॥ कथाज्ञाःकथांजानंतः पराक्रमानुक्रमतःपराक्रमानुसारेण एतांअन्येःकथ्यमानांरामकथांश्रुत्वा त त्रानुमोद्यअनुमतिंकृत्वा अन्येननंदुरित्यन्वयः अनुपरामनाशरहित अनादिनित्येत्यर्थः ॥ रामइंद्रनीलरत्नवन्मनोहर अभिरामअंगोपाद्यकर श्री

रामस्यरूपेमतिरक्षियुक्ता कीर्त्यांसकर्णारमतेसवाणी ॥ सत्किःप्रजानांसकथार्चनायां कांतासका तेवसमृत्यधाम्नि ॥ ६ ॥ केचिन्मनोयोगकृतोमनोज्ञे रामेन्नवेंदीवरसुंदराभे ॥ धन्यास्तान्येस्म- विचारयंति तंसर्ववेदांतकृतांतसारं ॥ ७ ॥ कथांतथाज्ञाअवतारमूलां रामस्यतांरावणमारणां- तां ॥ पराक्रमानुक्रमतोनुवर्ण्य ननंदुरेतामनुमोद्यचान्ये ॥ ८ ॥ रामाभिरामानुपरामराम राम स्मरामारिविरामराम ॥ श्रीरामरामेतिपुरारमंते रामस्यनामामृतपायिनोन्ये ॥ ९ ॥ वर्णाश्रमा चारविशेषशोभा नधर्मगंधाविषयान्स्वधर्मान् ॥ कामाद्यवद्यैरहितान्विदूरा द्रामायसदैस्मसम- र्पयंति ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामलक्ष्मीमनोहर श्रीनामकत्त्रीयुक्तेतिवा ॥ ९ ॥ अधर्मगंधाविषयान् अधर्मगंधस्यापिविषयीकर्तुमशक्यान् अधर्मलेशमात्रेणापिवदाचित्कदाचित्कथं चिदपिनयुक्तानित्यर्थः । स्वधर्मान्स्वविहितधर्मान् कामाद्यवद्यैःफलाकांक्षादिदोषैः कामक्रोधादिदोषैरितिवा । विदूरात्आतिसमीपे अतिदूरेचय- यत्रास्थितास्तत्रैवेत्यर्थः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्वयोग्यतावृत्तिसर्ववित्वं स्वयोग्यतानुसारेणसर्वतत्वपरिज्ञानं स्वयोग्यतावृत्तिस्वयोग्यतायामेववर्तमानं सर्ववित्त्वंपरिपूर्णत्वं । स्वयोग्यतावृत्तिःस्वयोग्य तानुसारि सर्ववित्वंचेतिवायोजना । चक्रीहरिः ॥ ११ ॥ रसादीन्रसगंधरूपस्पर्शशब्दादीन् शास्त्रोपपन्नान्शास्त्रविहितान् शास्त्रानिषिद्धांश्चाबंधहे तून्संसारहेतून् । कामादिविषयान्नैवानुभुंजते ॥ १२ ॥ जरारोगपुरोगदोषैः जरारोगाचिंतापारवश्यसंक्लेशादिदोषैःसरामाःस्त्रीकाःरमणाःजनाः नि

सर्वत्रसर्वस्यचसर्ववित्वं स्वयोग्यतावृत्तिचसर्ववित्त्वं ॥ तदाद्भूतास्यमहाजनस्य यदासचक्रीभु
विचक्रवर्ती ॥ ११ ॥ सर्वेंद्रियानंदकरानमंदा न्स्पर्शान्रसादीन्विषयान्थान्यान् ॥ शास्त्रोपप-
न्नाननुभुंजतेस्म रामस्यराज्येनतुबंधहेतून् ॥ १२ ॥ सहस्रसंवत्सरजीविनास्ते लावण्यतारुण्य
गुणाभिरामाः ॥ मुक्ताजरारोगपुरोगदोषै रामस्यराज्येरमणाःसरामाः ॥ १३ ॥ वैधव्यवैधुर्यभ
यंनाकिंचि न्नपुत्रशोकोनचामित्रशोकः ॥ नामंगलंकिंचिदथापरंच मांगल्यदेवीरमणस्यराज्ये ॥
॥ १४ ॥ यंयंजनःकामयतेर्थमत्र रामप्रसादात्सकलःससःस्यात् ॥ किंचित्रमेतज्जगतामधीशे
रामेह्ययंराजनिराजमाने ॥ १५ ॥ अनेनाकिंवाबहुनोदितेन रामस्यराज्यंवलयंधरायाः ॥ वैकुंठ
लोकप्रतिबिंबभूतं विरिंचलोकंगतिगर्जतीदं ॥ १६ ॥ निर्दुःखसौख्यंस्थिरभक्तिभाजा मनंतशि
ष्यःप्रादिशदनंतं ॥ स्वानुग्रहस्याभिनिदर्शनार्थं रामस्यराज्येऽश्वमातनोसौ ॥ १७ ॥ ॥

योगरहिताइत्यर्थः ॥ १३ ॥ वैधव्यवैधुर्यभयं विधवात्वविपत्नीत्वभयंमांगल्यदेवीरमणस्यराज्ये लक्ष्मीपतेःश्रीरामस्यराज्ये ॥ १४ ॥ सः अर्थः ॥ ॥ १५ ॥ राज्यंराज्यभूतंधरायाःवलयंभूमंडलं ॥ १६ ॥ सर्वमर्पितनिदर्शनार्थं स्वानुग्रहस्य स्वभक्तेष्वनुग्रहस्य अश्वमेधमातनोत् अकरोत् ॥ १७ ॥

ततःसततंश्रितत्वात् कारणात्श्रयतइतिश्रीः एवंविधांसीतानामिकां ॥ १८ ॥ व्यंकःविगतांकःनिष्कलंकइत्यर्थः । काव्यभंगीकाव्यप्रक्रिया स्वरूपा कलंकहीनमपिइंदुद्वंदंकलंकंनयेत् प्रापयेत्ततोप्यनंतगुणतयाशोभमानमित्यर्थः ॥ १९ ॥ अत्रस्तमाणिक्यमणिप्रकाशैः त्रासाख्यदोषरहितमाणिक्य माणिवत्प्रकाशयुक्तैः विनिद्रैःअम्लानैःविकसितैरित्यर्थः ॥ २० ॥ शंपोल्लसच्चंपकपुष्पवर्षैः शंपावत्सौदामिनीवत्उल्लसंतिशोभमानानियानिचंपकपुष्पाणितेषांवर्षैः । मंदानिलांदोलितमाधवीभिः मंदानिलेनमंदमारुतेन आंदोलिताःकंपिताःमाधवीमाधवीनामकलताः ताभिस्तत्कुसुमैश्च मधुव्रतानांभ्रमरा

अनाद्यनंतंरमणंश्रिताया विनावियोगंसततंततश्रीः ॥ सीताभिधामत्रस्मांस्वरामां रामोभिरा-
मांरमयांबभूव ॥ १८ ॥ सीतामुखेंदोःसदृशोयमिंदु र्व्यंकोभवेच्चेदितिकाव्यभंगी ॥ सीतामुखें-
दुःस्वरुचेंदुद्वंदं कलंकहीनंचनयेत्कलंकं ॥ १९ ॥ अत्रस्तमाणिक्यमणिप्रकाशैः पुष्पैर्विनिद्रैःप
रिभासमानं ॥ प्रविश्यसोशोकवनंविशोकः स्वानंदमूर्तिर्विजहारदेव्या ॥ २० ॥ शंपोल्लसच्चंपक
पुष्पवर्षै मंदानिलांदोलितमाधवीभिः ॥ मधुव्रतानांमधुरैश्चगीतै र्देवःसिषेवेमधुमाधवाभ्यां ॥
॥ २१ ॥ उल्लासिनीभिर्नवमल्लिकाभी रामांप्रेमाराध्यमलैरपेतौ ॥ ऋतूइमौशुक्रशुचीप्रसिद्धौ
ननामतःकेवलमर्थतोपि ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

णां मधुमाधवाभ्यांवसंतर्तौविद्यमानाभ्यांचैत्रवैशाखाभ्यां स्याच्चैत्रेचैत्रिकोमधुरित्यमरः । वैशाखेमाधवोराधइत्यमरः । मधुश्चमाधवश्चवासंतिकावृतूइ तिवचनाच्च ॥ २१ ॥ उल्लासिनीभिःविकासवतीभिःमलैःदोषैरपेतौरहितौ ऋतूमासौशुक्रशुचीतिनामानौज्येष्ठाषाढौ ज्येष्ठेशुक्रःशुचिस्त्वयं आषाढइत्य मरः । इमौ नकेवलंनामतएवशुक्रशुची अपितर्हिउक्तप्रकारेण रामसेवाकरणात् अर्थतोपिशुक्रौनिर्मलःशुचिःशुद्धइतिशुक्रशुचीतिअभूतामित्यर्थः । ग्री ष्मर्तौविद्यमानावेनौऋतुसंधित्वादृतूइत्युच्येते ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

खर्जूरजंबूफलाख्यं सधीचीनंनिवेद्यं उर्वीः बहुलाः तरुणं अभिनवंवारि केकिकुलस्यमयूरसमूहस्यगीतैश्च युक्तइत्यर्थः ॥ २३ ॥ कर्णावतंसार्थं कर्णाभरणात्रशेषंकर्तुं अनिंदनीयंश्रेष्ठं शरत् शरदृतुः अनेन आश्विनकार्तिकावुक्तौभवतः ॥ २४ ॥ परिस्फुरत्स्फाटिकभित्तिशोभां स्फुरत्स्फाटिकमयभित्तिवच्छोभायुक्तां । हिमानींहिमसमूहं हिमानीहिमसंहतिरित्यमरः । हिमर्तुः हेमंतः अनेनमार्गशीर्षपुष्यावुक्तौभवतः । कांडपटीमिवापधानवस्त्रमिव ॥ २५ ॥ नैकंअनेकंबहुलमित्यर्थः । विनिद्रंउत्फुल्लंफलिनीप्रसूनं तन्नामकलताविशेषपुष्पं आपादितंसंपादितं शिशिरेणकुंभमीनमासात्मकेनऋतुनाअनेनक्षाघ्का

खर्जूरजंबूफलसन्निवेद्य मुर्वीश्चदूर्वास्तरुणंचवारि ॥ रामेर्पयन्केकिकुलस्यनृत्तै र्गीतैश्चधन्योजलदर्तुरासीत् ॥ २३ ॥ कर्णावतंसार्थमनिंदनीयं दत्वानवेंदीवरमिंदिरायै ॥ लीलारविंदंचकरारविंदे दासीवदासीछरदाशुदेव्याः ॥ २४ ॥ परिस्फुरत्स्फाटिकभित्तिशोभां चक्रेहिमानींपरितोहिमर्तुः ॥ भृत्यःपटुःकांडपटीमिवाग्र्या मेकांतभाजोरिहदेवदेव्योः ॥ २५ ॥ नैकंविनिद्रंफलिनीप्रसून मापादितंयच्छिशिरेणभक्त्या ॥ तंनर्मसाचिव्यकृदप्युपांशु मंदानिलोमंदरधारिणेदात् ॥ २६ ॥ सर्वर्तवःसर्वगुणाभिरामा स्तंयौगपद्येनानिषेविरेत्र ॥ स्वाराममप्यद्भुतभावभाजा देव्यातिदिव्यंरममाणमीशं ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ल्गुनमासावुक्तौभवतः । तत्तादृशंपुष्पं जातानेकवचनं । नर्मसाचिव्यकृत् नर्मणिक्रीडायांसाचिव्यकृत् सेवकत्वंकुर्वन् क्रीडासाधनमानीयदत्वा सेवां कुर्वन्नित्यर्थः । उपांशुएकांतं मंदरधारिणेरामाय अदात् आनीयदत्तवान् ॥ २६ ॥ तंरामयौगपद्येन एककालेसर्वे निषेविरे सर्वदा[illegible]सम्यग्भक्त्यासेवितवंतइत्यर्थः । अत्र अयोध्यायांस्वारामस्वरूपसुसंपूर्णं अपितथापि सीतानुग्रहार्थं अतिदिव्यं अस्तंद्योतनादिद्विदि ॥ २७ ॥ ॥

एत्यशाप्य ॥ २८ ॥ त्रयोदशसहस्राणिसमाइत्यन्वयः । त्रयोदशसहस्रपरिमितेषुवत्सरेषु निरंतरमपीत्यर्थः । महींभूमिं त्रिदशाधिनाथः देवाधिपतिः सुराहितध्वांतनिकृंतनार्कः दैत्याख्यांधकारविनाशने सूर्यभूतः । महत्कैरववृंदचंद्रः सज्जनाख्यकुमुदपुष्पसमूहतुष्टिकरणेचंद्रवद्वर्तमानः ॥ २९ ॥ महान्वयसर्वभान् अन्वयोवंशः अस्य ईदृशस्यसूर्यांशुपमोपेतस्येत्यर्थः । समेधनायसम्यगभिवृध्यर्थं भुवनप्रगल्भंभुवनश्रेष्ठं पुराणमायामहालक्ष्मीः ॥ ३० ॥ यमौयमलभूतौइंद्रानलांशौ तत्रकुशइंद्रःलवस्त्वनलांशइत्यर्थः । यच्छैशवंययोःकुशलवयोः । शिशुत्वंशैशवंबाल्यमित्यमरः । तापसमानसानि मुनीनां-

गंधर्वविद्याधरचारणाद्याः सहाप्सरोभिर्जगुरेत्यशामं ॥ सदासदानंदतनुंमुनींद्राः सहामरेंद्रैरभि तुष्टुवुस्तं ॥ २८ ॥ त्रयोदशैवंत्रिदशाधिनाथः समाःसहस्राणिमहींररक्ष ॥ सुराहितध्वांतनिकृं तनार्को रामोमहत्कैरववृंदचंद्रः ॥ २९ ॥ महान्ववायस्यसमेधनाय बभारगर्भंभुवनप्रगल्भं ॥ विदेहपुत्रीरघुवंशकेतोः पुराणमायेवपुराणमूर्तेः ॥ ३० ॥ कुशंलवंचाथयमौकुमारा विंद्रानलां- शौसुषुवेसुमध्या ॥ यच्छैशवंरामकथाप्रसंगै रानंदयत्तापसमानसानि ॥ ३१ ॥ दशशतनयनो वातान्सहस्राननोवा दशशतहृदयोवाकेवलंदेवगर्भः ॥ नगणयतिगुणौघान्रामदेवस्यसर्वा न्हृहवयमधीरावर्णयामःकथंतान् ॥ ३२ ॥ इति संग्रहरामायणे उत्तरकांडे द्वितीयःसर्गः ॥ २ ॥

चित्तानि ॥ ३१ ॥ दशशतनयनःइंद्रः तान्नगणयतिनपश्यति सहस्राननःशेषःनगणयति नचवक्ति वक्तुमपिनसमर्थः । दशशतहृदयःवेदगर्भःब्रह्मापि तान्नगणयतिनस्मरति सर्वात्मनास्मर्तुंमसमर्थइत्यर्थः । धातूनामनेकार्थत्वादत्रगणधातोरनेकार्थत्वंनविरुद्धं । अधीराःतदपेक्षया अज्ञाइतिवा ॥ ३२ ॥ इति उत्तरकांडटीकायां द्वितीयःसर्गः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ श्रीः ॥ १ ॥ अविचारयितुः विचारमकुर्वतः ॥ २ ॥ पूर्वंकचित्कदाचित्केनचित् ब्राह्मणो राजवेश्मनि कस्यचिद्राज्ञःसद्मनि अप्रेक्ष्यराजानमदृष्ट्वा ॥
॥ ३ ॥ सत्रेयज्ञे ॥ ४ ॥ क्षमीक्षमावान् सहमानश्चेत्यर्थः ॥ ५ ॥ ६ ॥ चतुरःकुशलःचतुरःचतुःसंख्याकान्सामादीन्उपायान् ॥ ७ ॥ एकयाप्रधान
याबुद्ध्या द्वौधर्माधर्मौ तिसृभिःप्रभुमंत्रोत्सहशक्तिभिः पंचअंगानांपंचकं साधयन् कर्मारंभोचितोपायःपुरुषद्रव्यसंपदो ॥ विनिपातप्रतीकारोदेशकाला

॥ श्रीः ॥ कदाचित्प्रणतंप्रेक्ष्य लक्ष्मणंलक्ष्मणाग्रजः ॥ उवाचवाचंसत्धर्मान् शिक्षयन्क्षत्रियो
चितान् ॥१॥ पौरजानपदानांहि कार्यंलक्ष्मणाचिंत्यतां ॥ अविचारयितूराज्ञो धर्मकामौविनश्यतः ॥
॥ २ ॥ गोविवादेनसंप्राप्तौ ब्राह्मणौराजवेश्मनि ॥ दिनत्रयांतेप्यप्रेक्ष्य नृगंशापममुंचतां ॥ ३ ॥
यजमानंनिमिंसत्रे निद्रयानाभिभाषिणं ॥ वसिष्ठःशप्तवांस्तस्मा द्राजानित्योदितोभवेत् ॥ ४ ॥
शप्तोपिब्राह्मणैराजा क्षमीचेत्सुखमाप्नुयात् ॥ ययातिःशुक्रशप्तोपि क्षमीक्षेममवाप्तवान् ॥ ५ ॥
संरक्ष्यःक्षत्रधर्मोय मस्माभिस्तुविशेषतः ॥ श्रेष्ठानांचरितंलोकैः प्रमाणंक्रियतेयतः ॥ ६ ॥ एवं
रामोदितःसोथ पौरान्जानपदान्प्रति ॥ चतुरश्चतुरःकार्ये सामादीन्विनियुक्तवान् ॥ ७ ॥ एक
याद्वौविनिश्चित्य तिसृभिःपंचसाधयन् ॥ षड्भिःसप्तपुरारक्षन् रामंप्रीणातिलक्ष्मणः ॥ ८ ॥

पलोकनं । कार्यसिद्धिरितिप्रोक्तमंगानांपंचकंबुधैः । तत्रांगपंचकगणनमध्ये पुरुषद्रव्यसंपदावित्येकमितिकृत्वागणनीयं । षड्भिः संध्यादिभिःसंधिश्चावि
ग्रहंचैवयानमासनमेवच । द्वैधीभावंसंश्रयंचषड्गुणान्कवयोविदुः । एभिःसंध्यादिभिःषड्भिर्गुणैरित्यर्थः । सप्तरक्षनसप्तप्रकृतीःपरिपालयन् । सप्त
प्रकृतयःपूर्वंउक्तमास्ति प्रीणातिपुरार्मोतिषुक्रमप्रकरोत् रामंप्रतिस्वयंप्रीतिमानभूदित्यर्थः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९ ॥ द्विपदास्थितंपादद्वयेनातिष्ठंतं ॥ १० ॥ दिदृक्षेद्रष्टुमिछामि कुक्कुरः श्वा ॥ ११ ॥ सारमेयः शुनकः ॥ १२ ॥ विवक्षितंवक्तुंनिरूपितं ॥ १३ ॥
॥ १४ ॥ सर्वार्थसिद्धः तन्नामकः ॥ १५ ॥ शुना शुनकेन क्षत्राद्द्वारपालेन दंडशिक्षां व्यचारयत् विचारयामास ॥ १६ ॥ हेरामास्मिन्नन्यायकारिणि-

नकिंचित्कस्याचित्कापि कार्यंनाकृतमैक्षत ॥ लक्ष्मणानुगतेदेवे रामेराजनिराजति ॥ ९ ॥ कदा चिल्लक्ष्मणोपश्य छ्वानंराममुपागतं ॥ पाहिरामशरण्येति क्रोशंतंद्विपदास्थितं ॥ १० ॥ रामराज्येभयंकिंते ब्रूहीत्याचष्टलक्ष्मणः ॥ राममेवदिदृक्षेह मित्युवाचसकुक्कुरः ॥ ११ ॥ रामाज्ञया लक्ष्मणेन प्रविशेतिप्रचोदितः ॥ सारमेयोविनीतात्मा प्राविशत्प्रभोःसभां ॥ १२ ॥ विवक्षितं ब्रूह्यशंक स्त्वमित्युक्तोजगद्भृता ॥ सारमेयोब्रवीदुच्चै र्नीचयोनिररनीचवत् ॥ १३ ॥ अगण्यगुणसंपन्न जगन्मंगलकीर्तन ॥ नीचजातेःप्रलापोमे क्षम्यतांकरुणाकर ॥ १४ ॥ भिक्षुःसर्वार्थसिद्धोमां दंडेनाताडयद्भृशं ॥ अनागसंदीनतरं लोकानांत्वयिशास्तरि ॥ १५ ॥ श्रुत्वाशुनानिर्गदितं क्षत्राभिक्षुंतमानयत् ॥ भिक्षोर्दंडंसभामध्ये सर्वज्ञोपिव्यचारयत् ॥ १६ ॥ दंडंनिपातयस्व स्मिन् यदियोग्यंप्रदीयतां ॥ कालंजरेकौलपत्य मित्युवाचसकुक्कुरः ॥ १७ ॥ तच्छ्रुत्वेशोभ्यषिंचत्तं कालंजरधराधिपं ॥ गजस्थंप्रापयामास त्वष्टुंदेवालयंचतं ॥ १८ ॥ ॥ ॥

यदिदंडशिक्षां निपातयसिकरोषि कारयसीतिवा । तर्हि एतत्कर्मकरणस्ययोग्यंकालंजलेतन्नामकगिरौ विद्यमानदेवालयस्य कौलपत्यंदेवलकत्वंप्रदीयतां मदांधकारानुकूलोदंडः सएवेत्यर्थः ॥ १७ ॥ तंसन्यासिनंप्रापयामास प्रेषयामास ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १९ ॥ अयंश्वाशुनकः ॥ २० ॥ २१ ॥ सभागतः सभांगतः ॥ २२ ॥ भार्गवं भृगुकुलजातं ॥ २३ ॥ अवोचत् अपृच्छत् ॥ २४ ॥ तापत्रयं आ-
ध्यात्मिकादितापत्रयं ॥ २५ ॥ आविदितंसम्यग्ज्ञातं किंनसर्वमपिसम्यग्ज्ञातमेव. ऽवणंलवणनामकं ॥ २६ ॥ तेषांतेनपापिना भक्षितानां मुन्यादीनां

दंडार्हायेहविप्राय वरोदत्तःकथंप्रभो ॥ इत्यवोचंतसचिवा रामंकौतूहलाकुलाः ॥ १९ ॥ रामे-
णचोदितःप्रोचे श्वायंजातिस्मरस्तदा ॥ कालंजरेकौलपत्यां छ्वयोनित्वंतदात्मनः ॥ २० ॥
ततःप्रणम्यरामाय कृतकृत्यःसकुक्कुरः ॥ गत्वावाराणसींवायुं तत्रोपास्यानघोभवत् ॥ २१ ॥
सभागतःसभगवान्कदाचिद्भ्रातृभिःसह ॥ प्रतीक्षमाणान्विज्ञाय मुनीन्द्वास्थैरुपाह्वयत् ॥ २२ ॥
च्यवनाख्यंपुरस्कृत्य भार्गवंमुनयोमुनिं ॥ रामायतीर्थकलशान् फलमूलादिचादिशन् ॥ २३ ॥
सौवर्णान्यासनान्येभ्यो दत्वासंपूज्यचप्रभुः ॥ स्वागतंवोमुनिश्रेष्ठाः किंकार्यंचेत्यवोचत ॥ २४ ॥
रामवाणीसुधाध्वस्त तापत्रयमकल्मषं ॥ उवाचतंमुनिशतं निष्पतद्वास्पलोचनं ॥ २५ ॥ नाथ
नाविदितंकिंते वदामोथत्वदाज्ञया ॥ मधोःसुतोमधुवने वर्ततेलवणासुरः ॥ २६ ॥ मुनीन्मुनि
कुमारांश्च मुनिदारानभक्षयत् ॥ नृशंसोयानसौदेव तेषांसंख्यानविद्यते ॥ २७ ॥ मधुनातपसा
प्राप्तं शूलंमाहेश्वरंमहत् ॥ तेनदायेनदैवैर पश्चाव्योबाधतेजगत् ॥ २८ ॥ अलब्धशरणादीना
श्चरंतोभुवनेवयं ॥ रावणारिमथज्ञात्वा विष्णुंत्वांशरणंगताः ॥ २९ ॥ ॥ ॥ ॥

॥ २७ ॥ दायेनपितृविरोन ॥ २८ ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अंशोभागः ॥ ३० ॥ भरतानुजः शत्रुघ्नः ॥ ३१ ॥ मध्यमः आर्यः लक्ष्मणइत्यर्थः ॥ ३२ ॥ तप्तंतपःकृतं ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ते-

ऋषीणांभाषितंश्रुत्वा रामःस्मितमुखांबुजः ॥ कस्यांशोयमितिप्रोच्य भ्रातृणांवक्रमैक्षत ॥ ३० ॥
लक्ष्मणःप्रांजलिरभू द्धनिष्यामिमहासुरं ॥ इत्यूचेभरतःपीठा दुत्तस्थौभरतानुजः ॥ ३१ ॥ श
त्रुघ्नःप्रांजलिःप्रोचे प्रसीदपुरुषोत्तम ॥ आर्योममध्यमोधन्य स्त्वच्छुश्रूषांवनेकरोत् ॥ ३२ ॥ भर
तेनममार्येण मयिजीवतिकिंकरे ॥ चतुर्दशसमास्तप्तं त्वत्प्रीत्यैभूमिशायिना ॥ ३३ ॥ ब्रह्मघ्नंल
वणंहत्वा त्वत्प्रसादेनकेवलं ॥ सार्थाशत्रुघ्नतास्यान्मे प्रोचेतिप्रणनामसः ॥ ३४ ॥ प्रसन्नोभग
वानूचे करिष्याम्यभिषेचनं ॥ शत्रुघ्नलवणघ्नस्त्वं याहितान्विषयानिति ॥ ३५ ॥ शत्रुघ्नोलज्जि
तःप्रोचे किंकरोयंनराज्यभाक् ॥ कनिष्ठस्याभिषेकोयं ज्येष्ठैर्नक्रियतामिति ॥ ३६ ॥ वसिष्ठाद्यै-
र्द्विजश्रेष्ठै रभ्यषिंचत्ततोनुजं ॥ रामस्तस्मिन्नहन्यासी दयोध्यायांमहोत्सवः ॥ ३७ ॥ शत्रुघ्ना-
याथशत्रुघ्नं शरंदत्वाब्रवीत्प्रभुः ॥ तेजसामाश्रयामास शत्रुघ्नंपरिरभ्यसः ॥ ३८ ॥ शरोयंप्राङ्म
यासृष्टः शयानेनमहार्णवे ॥ अघातयंतथाघोरा वनेनमधुकैटभौ ॥ ३९ ॥ समस्तवीर्यसारोय
ममोघस्तेरिसूदनः ॥ इत्युक्त्वाप्रेषयामास देवस्तंदैत्यमृत्यवे ॥ ४० ॥ चत्वार्यश्वसहस्राणि रथा
नांद्वेसहस्रके ॥ गजानांचशतंदत्वा पदातीन्सददौबहून् ॥ ४१ ॥ ॥ ॥ ॥

समामाश्रयामास आश्रयंकृतवान् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सुवर्णरत्नस्वाकल्पान् सुवर्णरत्नमयशोभमेवेषान् ॥ ४२ ॥ पूर्वमथममेव प्रस्थाप्यप्रेषयित्वा ॥ ४३ ॥ ४४ ॥ प्राचेतसोवाल्मीकिः सुदासस्यतन्नाम
कराज्ञः ॥ तस्यसुदासस्यशापस्यप्राप्तिमोक्षावित्यर्थः ॥ ४५ ॥ कुशलवसूदयंकुशलवयोःशोभनोत्पत्तिमन्यमानःआसीदितिसंस्मरन् व्यथितकुलवा-

सुवर्णरत्नस्वाकल्पा न्प्रादायबहूलान्प्रभुः ॥ तेजसापूरयामास शत्रुघ्नंपरिरभ्यसः ॥ ४२ ॥ प्र-
णम्यरामंसर्वांश्च गुरूनत्राभिनंद्यसः ॥ पूर्वंप्रस्थाप्यसैन्यंस्वं द्विजैःसार्धंस्वयंययौ ॥ ४३ ॥ वा-
ल्मीकेराश्रमंप्राप्य सौमित्रिर्मित्रवर्धनः ॥ अभ्यवंदततंदृष्ट्वा तेनचप्रत्यपूज्यत ॥ ४४ ॥ प्राचे
तसोथप्रोवाच सुदासस्येममाश्रमं ॥ शापस्यप्राप्तिमोक्षौच वसिष्ठात्स्वपुरोहितात् ॥ ४५ ॥
हरिहररिरमणीविलासमूलं कुशलवसूदयमत्रमन्यमानः ॥ सकलसुजनसौख्यदांनिशांतां व्यथि-
तसरामसहोदरोत्रवासं ॥ ४६ ॥ इति श्रीसंग्रहरामायणे उत्तरकांडे रामांके तृतीयःसर्गः ॥ ३ ॥
॥ श्रीः ॥ शत्रुघ्नोमुनिमामंत्र्य ततःप्रायादुदङ्मुखः ॥ संप्राप्ययमुनातीरं न्यवसन्मुनिभिःसमं ॥
॥ १ ॥ शुश्रावचवनेनोक्तं लवणस्यसविक्रमं ॥ अयोध्याधिपतेःपूर्वं मांधातुर्निधनादिकं ॥ २ ॥
ततोरामानुजःप्रात रतीत्ययमुनांगतः ॥ तस्थौमधुवनद्वारि चापरोपधरोबली ॥ ३ ॥ ततोर्ध-
दिवसेप्राप्ते लवणःप्रत्यदृश्यत ॥ भक्षार्थंस्वपुराद्यातः सहस्रंप्राणिनांबहून् ॥ ४ ॥ ॥

न् अत्रवाल्मीकेराश्रमे ॥ ४६ ॥ ॥ इति उत्तरकांड टीकायां तृतीयःसर्गः ॥ ३ ॥ ॥ श्री ॥ उदङ्मुखःउत्तराभिमुखः ॥ १ ॥ २ ॥ चापरोपध
रःधनुर्बाणधरः ॥ पत्रीरोपइषुर्द्वयोरित्यमरः ॥ ३ ॥ अर्धदिवसेमध्यान्हे ॥ ४ ॥ ॥ ॥ ॥ ॥

आगाः आगतवानभूः ॥ ५ ॥ देयंदातव्यं ॥ ६ ॥ ७ ॥ कितवकपटिन् शत्रुघ्नशत्रूणांघ्नन् ॥ ८ ॥ ९ ॥ १० ॥ उत्तालंउन्नतं ॥ ११ ॥ १२ ॥



त्वादृशानांसहस्राणि भक्षितानिमयानर ॥ किमर्थंस्त्वयमागास्त्व मित्येवंलवणोब्रवीत् ॥ ५ ॥
इत्थंविकत्थनैः किंते ननुरामानुजोस्म्यहं ॥ द्वंद्वयुद्धंत्वयादेय मितिसौमित्रिरब्रवीत् ॥ ६ ॥ मद्भ्रातृघ्न
स्यरामस्य हंतुत्वांभ्रातरंबत ॥ आनेष्याम्यायुधमिति शत्रुघ्नंलवणोब्रवीत् ॥ ७ ॥ ब्रह्मघ्नस्त्वंन
मोक्तव्यो दृष्टमात्रस्तुमादृशैः ॥ कितवक्वप्रयासीति शत्रुघ्नःशत्रुमब्रवीत् ॥ ८ ॥ लवणोस्त्वहमा
नोथ मानीतांपरुषांगिरं ॥ वृक्षमुत्पाट्यरक्ताक्षः शत्रुघ्नंप्रत्युपाद्रवत् ॥ ९ ॥ क्षिप्तंवृक्षमसंभ्रां
तः शरैश्चिच्छेदराघवः ॥ पुनश्चैवंपुनश्चैवं तदाश्चर्यमवर्तत ॥ १० ॥ शरान्ववर्षशतशः शत्रुघ्नः
शत्रुवक्षसि ॥ सालमुत्तालमुत्पाट्य लवणस्तमताडयत् ॥ ११ ॥ सौमित्रिस्ताडितस्तेन विसं
ज्ञोन्यपतद्भुवि ॥ हाहाकृतंमुनिगणैः प्रहृष्टंलवणेनच ॥ १२ ॥ रामानुजःपुनःसंज्ञां प्राप्तःक्रोधा
ग्निनाज्वलन् ॥ रामदत्तममोघंतं शरंचापेनसंदधे ॥ १३ ॥ बाणस्यतस्यज्वलतो ज्वालयादीपितं
जगत् ॥ ब्रह्माणंशरणंप्राप माभीरित्यभ्यधादजः ॥ १४ ॥ शरःशत्रुघ्ननिर्मुक्तो निहत्यलवणासु
रं ॥ रसातलंप्रविश्याथ पुनारामकरंययौ ॥ १५ ॥ निवेशमकरोद्वीर स्तत्रदेवप्रसादतः ॥ मधुरान
गरीसाभू त्सर्वसंपत्समन्विता ॥ १६ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ १५ ॥ निवेशंनगरं ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अभिरामंमनोहरं सशत्रुघ्नःनसुष्वापनिद्रांनाकरोत ॥ २१ ॥ शात्रवायोध्यांवैरिभिर्योद्धुमशक्यां द्रस्युशात्रवशत्रवइत्यमरः ॥ २२ ॥ मातरंगांतर्णकःवत्सः घर्मतप्तःउष्णसंतप्तः अमृतंउदकं ॥ निर्ययौनिर्गतोभूत् दुःखवानभूदित्यर्थः ॥ २३ ॥ २४ ॥ विषादःदौ

स्वांचसेनांनिवेश्यात्र रामपाददिदृक्षया ॥ द्वादशेवत्सरेगत्वा वाल्मीकेराश्रमंययौ ॥ १७ ॥ ल
वणस्यवधात्प्रीतो वाल्मीकीराघवानुजं ॥ आतिथ्यायसमामंत्र्य ससैन्यंसमतर्पयत् ॥ १८ ॥
ततःश्रुत्वातिमधुरं गीतंकौतूहलाकुलाः ॥ सैनिकास्तंमुनिंप्रष्टुं शत्रुघ्नंप्रत्यचोदयन् ॥ १९ ॥ म
हर्षिर्हिमहातेजा बव्हाश्चर्योस्यचाश्रमः ॥ नप्रष्टव्यमिहास्माभि रित्यूचेरामसोदरः ॥ २० ॥
अभिरामंसरामस्य चरितंगीतमद्भुतं ॥ आकर्ण्यकर्णपीयूषं नसुष्वापनिशामिमां ॥ २१ ॥ प्रतस्थे
मुनिमामंत्र्य प्रभातेभरतानुजः ॥ अयोध्यांशात्रवायोध्यां विवेशचससैनिकः ॥ २२ ॥ मातरं
तर्णकइव घर्मतप्तइवामृतं ॥ रामपादमुपव्रज्य निर्ययौरामसोदरः ॥ २३ ॥ साम्राज्यसौख्यतु
लंमे नाथत्वद्विरहानलः ॥ क्षिणोतिमेप्रसीदेति ब्रुवाणःप्रणनामसः ॥ २४ ॥ क्षत्रधर्मप्रजारक्षा
शिश्रूषांमेसमाचर ॥ तातनात्रविषादःस्या दित्यूचेतंजगद्गुरुः ॥ २५ ॥ पंचरात्रमसौतत्र स्वा
मिनासार्धमूषिवान् ॥ प्रभोर्नियोगाच्छत्रुघ्नो मधुरांसानुगोगमत् ॥ २६ ॥ अथकश्चिद्द्विजोवृद्धो
नगरद्वारमागतः ॥ संगृह्यपुत्रंमृतकं रुरोदोच्चैःशुचाकुलः ॥ २७ ॥ ॥ ॥

र्भिल्यंआलस्यमितिवा ॥ २५ ॥ २६ ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

व्युत्क्रमात्विपरीतक्रमात मृत्युर्मरणंकाचिदपिमनास्ति परासंमृतं अवलोकयेपश्यामि ॥ २८ ॥ पितरौमातापितरौ अनुयास्यावः अन्वागमिष्यावः ॥
॥ २९ ॥ शरणंपालकं पातंशिशुं पोतःपाकोर्भकोडिंभइत्यमरः ॥ ३० ॥ ३१ ॥ चतुष्पात् तपः शौचंदया सत्यमितिपादचतुष्टयवान् कृतेयुगे अन्यत्र

हापुत्ररामराज्येस्मि न्नमृत्युर्व्युत्क्रमात्कचित् ॥ त्वामहंमंदभाग्यत्वा त्परासुमवलोकये ॥ २८ ॥
वत्सोत्तिष्ठकलैर्वाक्यैः पितरौनौप्रहर्षय ॥ नैवंचेदचिरेणत्वा मनुयास्यावएवहि ॥ २९ ॥ सर्व
लोकैकशरणः शरणंमेभवत्प्रभुः ॥ पातुमेपतितंपोतं राघवःकरुणाकरः ॥ ३० ॥ एवंब्रुवाणेविप्रे
स्मि न्नारदोवाक्यमब्रवीत् ॥ मुनिमंडलमध्यस्थः सभायांरामसंनिधौ ॥ ३१ ॥ धर्मश्चतुष्पाद्धर्मे
श त्वत्प्रसादात्कृतेस्थितः ॥ क्रमान्न्यूनपदोन्यत्र सोधर्मपदपीडितः ॥ ३२ ॥ अद्विजाद्विजधर्मा
णो नूनंलोकविनाशकाः ॥ दयालुनात्वयानाथ तेषुदंडोनिपात्यतां ॥ ३३ ॥ नारदेनेतिगदिते
राघवेणाभिनंदिते ॥ रामानुजोरामवाक्या त्सांत्वयामासतंद्विजं ॥ ३४ ॥ स्मृतमात्रमुपायातं
पुष्पकंपुष्करेक्षणः ॥ आरुह्यविचचाराथ दिक्षुसर्वासुचक्षणात् ॥ ३५ ॥ विचिन्वानःक्वचिदन्या
यं सर्वसाक्षीसराघवः ॥ याम्यांदिशिसरःप्राप शैवलस्योत्तरांतिके ॥ ३६ ॥ अधःशिरसमूर्ध्वां
घ्रिं लंबमानंतपस्विनं ॥ तत्रदृष्ट्वासपप्रच्छ कोभवानितिविश्ववित् ॥ ३७ ॥ ॥ ॥

त्रेतादौ सः धर्मः अधर्मपदपीडितः पूर्वोक्तविपरीतपादचतुष्टयेनपीडितः ॥ ३२ ॥ अद्विजाः शूद्राः ॥ ३३ ॥ ३४ ॥ पुष्करेक्षणः पद्मलोचनः ॥ ३५ ॥
विचिन्वानः निमार्गयन् याम्यांदक्षिणस्यां शैवलस्य शैवलाख्यगिरेः उत्तरांतिकेउत्तरतटे ॥ ३६ ॥ ३७ ॥ ॥ ॥ ॥ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ स्तवः स्तुतिः सुमनोभिः देवैः अलंअत्यंततैर्देवैः सुमनोभिःपुष्पैः अलंकृतोलंकृतवान् ॥ ४१ ॥ पापहराव्हयः पापनाशक
नामवान् ॥ ४२ ॥ ४३ ॥ अनन्नयज्ञकृत् अन्नराहितयज्ञान्कृतवान् । अन्नदानमकृत्वायज्ञान्कृतवानित्यर्थः । श्वेतः श्वेतनामकोराजा अदन् भक्षयन् ब्र

जंबुकोनामशूद्रोहं त्र्यंबकस्यपदेच्छया ॥ व्रतंतीव्रंकरोमीति प्रोचेतंशूद्रतापसः ॥ ३८ ॥ निष्कृ
ष्यतरसाखड्गं कोशादाकाशसंनिभं ॥ चिच्छेदतच्छिरस्तेन देवोदेवान्प्रहर्षयन् ॥ ३९ ॥ अधर्म
मुत्साद्यविभु र्जीवयामासतंशिशुं ॥ अन्यथापिसमर्थःसन् लोकशिक्षणमाचरन् ॥ ४० ॥ स्त-
वःसकलनाथस्य सुमनोभिरलंकृतः ॥ भगवांस्तैर्विकीर्णाभि सुमनोभिरलंकृतः ॥ ४१ ॥ अग
स्त्यस्याश्रमंदिव्यं प्रापपापहराव्हयः ॥ कुंभसंभवआश्वेनं शंभुपूज्यमपूजयत् ॥ ४२ ॥ रामा-
यरम्यांप्रददौ मालाममलिनांमुनिः ॥ इमांचवाणीमाचष्ट राघवंभक्तिमत्तमः ॥ ४३ ॥ अनन्नय
ज्ञकृच्छ्वेतो राजामांसमदान्निजं ॥ मालांब्रह्मनियोगान्मे दत्वातदघमत्यगात् ॥ ४४ ॥ सेयंमाला
मयादत्ता तुभ्यमभ्यर्हितात्मने ॥ सर्वोपिकल्याणविधि रनंतोह्यार्पितस्त्वयि ॥ ४५ ॥ दंडस्यरा
ज्ञोविषयो दंडकारण्यतांययौ ॥ शुक्रशापेनतत्राग्रे श्वेतश्चक्रेमहत्तमः ॥ ४६ ॥ मुनावेवंकथयति
ययावस्तंदिवाकरः ॥ न्यवसत्तत्रतांरात्रिं रामोमुनिगणार्चितः ॥ ४७ ॥ ॥ ॥

ह्मनियोगात् चतुर्मुखाज्ञया तदघंस्वमांसभक्षणाख्यंपापं ॥ ४४ ॥ अभ्यर्हितात्मने अतिपूज्यस्वरूपाय हेकल्याण ॥ ४५ ॥ दंडस्य दंडनामकस्य ॥
॥ ४६ ॥ अस्तं अस्तमयं ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कुंभसंभवं अगस्त्यं ॥ ४८ ॥ ४९ ॥ पूताः शुद्धाः ॥ श्रुतिः श्रवणं यस्यते श्रुतिस्मृत्यनुकीर्तनैरितिसंबंधः ॥५०॥ ५१ ॥ ५२ ॥ श्रवणाविनयावनतौ

प्रातःप्रयास्यन्प्रोवाच भगवान्कुंभसंभवं ॥ पुनस्तेदर्शनंभूया त्पावनस्त्वंनृणामिति ॥ ४८ ॥
निष्पतद्बाष्पनयनो भक्तिमानभ्यधान्मुनिः ॥ पावनोस्मिप्रभोनित्यं पादपद्मस्मृतेस्तव ॥ ४९ ॥
महापातकिनःपूताः श्रुतिस्मृत्यनुकीर्तनैः ॥ यस्यतेभगवान्राम साक्षान्मंगलकीर्तनः ॥ ५० ॥
इत्यगस्त्येनगादितो मंदहासोभिनंद्यतं ॥ राजमानोविमानेन राजराजोगमत्पुरीं ॥ ५१ ॥ सर्व
संपत्समृद्धांतां प्रविवेशपुरींप्रभुः ॥ स्वंतमेहीतिसंप्रोच्य पुष्पकंचविसृष्टवान् ॥ ५२ ॥ ल-
क्ष्मणंभरतंचाथ द्वास्थैराहूतवानथ ॥ प्रणंताप्रवणावेतौ प्रणयादभिषस्वजे ॥ ५३ ॥ यज्ञैर्य
ज्ञेशमात्मानं वक्ष्येहंमुख्यकल्पकैः ॥ इत्युक्तवंतमूचाते तौरामंसाधुसाध्विति ॥ ५४ ॥ लक्ष्मी
शंलक्ष्मणःप्रोचे बद्धांजलिपुटःपटुः ॥ अश्वमेधेनाविश्वेश यष्टुमर्हसिसांप्रतं ॥ ५५ ॥ पुराविष्णु
प्रसादेन वज्रीवृत्रममारयत् ॥ ब्रह्महत्याविषण्णोथ वाजिमेधेनपावितः ॥ ५६ ॥ त्वंतुयज्ञांविधे
हीमं लोकशिक्षणलक्षण ॥ इत्युक्तवंतमाचष्ट लक्ष्मणंलक्ष्मणाग्रजः ॥ ५७ ॥ इलोराजागतस्त्री
त्वं मासंमासंपुनःपुमान् ॥ अश्वमेधात्पुमानेव दक्षश्रेष्ठोहिसंवृतः ॥ ५८ ॥ एवमुक्त्वासभगवा
नाहूयमुनिपुंगवान् ॥ वसिष्ठवामदेवादीं नामंत्र्येदंवचोब्रवीत् ॥ ५९ ॥

अभिषस्वजे आलिलिंगे ॥ ५३ ॥ ऊचाते उक्तवंतौ ॥ ५४ ॥ ५५ ॥ ५६ ॥ विधेहिकुरुष्व ॥ ५७ ॥ इलःइलनामकः ॥ ५८ ॥ ॥ ५९ ॥

॥ ६० ॥ ६१ ॥ गोमत्याः गोमतीनामकायाःतटे नैमिशेवने नैमिषारण्ये ॥ ६२ ॥ वाहसहस्राणां शतंलक्षं तिलमुद्गानामयुतं दशसहस्र परिमितान्

सुग्रीवादीन्वानरेंद्रा न्सगणंचविभीषणं ॥ देवर्षिमानुषादींश्च सर्वानाव्हयलक्ष्मण ॥ ६० ॥ पृ-
थिव्यांपार्थिवायेच नानाविद्याश्चयेद्विजाः ॥ सर्वेसदाराआयांतु हयमेधंमहाक्रतुं ॥ ६१ ॥ स्याद्य
ज्ञवाटःसुमहान् गोमत्यानैमिशेवने ॥ संभ्रियंतांचसंभारा वसिष्ठस्यनियोगतः ॥ ६२ ॥ शतं
वाहसहस्राणां नयेन्नस्तंडुलान्शुचान् ॥ अयुतंतिलमुद्गाना मग्रतोभरतोव्रजेत् ॥ ६३ ॥ सुवर्ण
कोटीर्बहुधा हिरण्यंतच्छतोत्तरं ॥ उच्चावचंयदन्यच्च नयंतुभरतानुगाः ॥ ६४ ॥ शिल्पिनोन्गता
न्बंधू न्ममपत्नींचकांचनीं ॥ अग्रतोभरतःकृत्वा यातुयज्ञप्रवृत्तये ॥ ६५ ॥ इत्युक्तेरामदेवेन
श्रुत्वाताववििलंबितं ॥ चक्रातेतत्तथैवाथ दक्षौभरतलक्ष्मणौ ॥ ६६ ॥ हयंविसृज्यसंपूज्य सु-
लक्षणमलंकृतं ॥ प्रेषयामासशत्रुघ्नं रक्षणार्थंसलक्ष्मणः ॥ ६७ ॥ चतुरंगबलोपेतो विप्रैःपरि
वृतःप्रभुः ॥ नैमिषारण्यमासाद्य यज्ञवाटमवैक्षत ॥ ६८ ॥ राजानःसर्वराष्ट्रेभ्यो वैश्यवत्करमाह
रन् ॥ भरतस्तान्सशत्रुघ्नः सर्वकामैरपूजयत् ॥ ६९ ॥ ॥ ॥ ॥ ॥

भारान् नयेदित्यन्वयः ॥ ६३ ॥ हिरण्यंरजतं ॥ ६४ ॥ ६५ ॥ अविलंबितं ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ॥ ॥ ॥ ॥

॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ भावीभविष्यन् सकलगुणवानितिरामस्यतुल्यइत्यर्थः । एवंजगुःगानंकृतवंतः



ब्रह्मण्यदेवमाजग्मु र्ब्राह्मणाःसर्वदेशतः ॥ सुग्रीवाद्यास्ततश्चक्रु रेतेषांपरिवेषणं ॥ ७० ॥ विभी
षणोभूषणाढ्यः शुचीरक्षोगणैर्वृतः ॥ ऋषीणामुग्रतपसां परिचर्यांचकारह ॥ ७१ ॥ पितामह
पितुर्यज्ञं पितामहपुरोगमाः ॥ देवोपदेवाआजग्मु र्हनुमांस्तानपूजयत् ॥ ७२ ॥ अश्वमेधेप्रवृत्ते
स्मि न्नश्वोमेध्यउपागमत् ॥ भुवंप्रदक्षिणीकुर्वन् साक्षाल्लक्ष्मणरक्षितः ॥ ७३ ॥ दीक्षितेयज्ञपुरुषे
दीक्षितान्वीक्षितेस्वयं ॥ प्रावर्ततमहायज्ञो ब्राह्मणैर्ब्रह्मवादिभिः ॥ ७४ ॥ सर्वेशोतर्पयत्सर्वान्
वासोमाल्यानुलेपनैः ॥ रम्यैरप्यन्नपानाद्यै राकल्पमणिकांचनैः ॥ ७५ ॥ सर्वेभ्यःसर्वदाःसर्वे
सर्वेश्वरनियोगतः ॥ निशाचरावानराश्च दिशंतिस्मादिनेदिने ॥ ७६ ॥ देवदेवस्ययज्ञेस्मिन् दे
हिशब्दोनजात्वपि ॥ अलंशब्दोनवरतं वर्ततेस्मिन्महाजने ॥ ७७ ॥ संवत्सरंसंप्रवृत्तं दृष्ट्वारा
ममखोत्सवं ॥ चिरायुषेत्रमुनयो जगुःकौतूहलाकुलः ॥ ७८ ॥ नाभूत्समोयस्यनचैवभावी
भवंश्चकिंनोपुनरुत्तमोस्मात् ॥ पूर्णोगुणैर्दोषलवैरसंगी रामस्यतुल्यःक्रतुरेषएव ॥ ७९ ॥ ॥
॥ इति श्रीसंग्रहरामायणे उत्तरकांडे रामांके चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ ॥



सिपूर्वेणान्वयः ॥ ७९ ॥ ॥ इति उत्तरकांड टीकायां चतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

|| श्रीः || उदवस्यसमापयित्वासदस्याःसभापतयः || १ || २ || ३ || ४ || देव्यःराजभार्याः || ५ || आंगिरसं आंगिरसकुलेजातं || ६ युधाजि-
ता केकयराजेन || ७ || ८ || अबाधिनःबाधारहितान्अबाधिनःकामपिबाधामकुर्वतइतिवा || ९ || १० || ११ || अध्यर्धमासकालेन सार्धकमासात्म

|| श्रीः || अथयज्ञेश्वरोयज्ञ मुदवस्यविधानतः || ऋत्विक्सदस्यानन्यांश्च पूर्णैर्वित्तैरतर्पयत् ||१||
विससर्जनरेंद्रांस्ता न्रृक्षवानरराक्षसान् || परिपूज्यजगंनाथः प्रणतान्विरहासहान् || २ || अ-
ग्निष्टोमातिरात्रादीन् वाजपेयाननेकशः || बहुस्वर्णव्ययानेवं चक्रेचक्रायुधःक्रतून् || ३ || बभूवुः
संपदःसर्वा विपदोनैवकाश्चन || रामेराजनिलोकानां धर्मशिक्षणलक्षणे || ४ || कौसल्याद्यास्तु
कालेस्मिन् देव्योदेवमुपाययुः तासांदेवःक्रियाःकुर्वन् विप्रेभ्योदान्महद्धनं || ५ || अथोकदा-
चित्संप्राप्तं केकयेंद्रनियोगतः || गार्ग्यमांगिरसंवृद्धं पूजयामासराघवः || ६ || कंबलाजिनर-
त्नानि बहून्यश्वायुतंतथा || युधाजिताप्रेषितानि जग्राहभगवान्द्विजात् || ७ || गार्ग्योगामत्र
वीद्रामं प्रोक्तांकेकयभूभृता || शैलूषाख्यस्यदुःशीला गंधर्वस्याभवन्सुताः ||८|| बाधंतेबाधि
नोलोकां स्तेजित्वाजगतःपतीन् || तान्सूदयित्वाथजग त्वंपालयकृपालय || ९ || कटूंस्त्रिकोटि
संख्यांस्ता न्हत्वाकुरुपुरेशुभे || सिंधोरुभयतःपार्श्वे गंधर्वविषयेशुभे || १० || इत्यांगिरःसुतेनो
क्तो देवोदेवारिमृत्यवे || भरतस्यकुमारंस भरतंचन्ययोजयत् || ११ || ययौबहुबलैःसार्धं सगा
र्ग्योनंदनान्वितः || अध्यर्धमासकालेन केकयान्कैकयीसुतः || १२ || || ||

ककालेन || १२ || || || || || || || || || || || || || || ||

॥ १३ ॥ १४ ॥ कलिर्युद्धं ॥ अतुलः असदृशः ॥ १५ ॥ नक्षाम्यन् असहमानः परपौरुषं शत्रुपराक्रमं ॥ १६ ॥ सर्वेणकनाशेन सहप्रेताः ॥ १७ ॥ क्रव्यादनेनमांसभक्षणेन क्रव्यादाः सृगालाः स्वोपसर्ग क्षयात् स्वोपद्रवनाशात् मोदमादादिरमापुरित्याद्यन्वयः ॥ १८ ॥ पुष्करं तन्नामानं सुतं पुष्क



ततःकेकयराजेन ससैन्येनसमन्वितः ॥ गंधर्वनगरंप्राप्य वीरःशंखमपूरयत् ॥ १३ ॥ सर्वेबल मदांधास्ते गंधर्वाःसिंहविक्रमाः ॥ अभ्ययुर्भरतानीकं गर्जंतोविविधायुधाः ॥ १४ ॥ गंधर्वैर्भर्तरेंद्राणां सप्तरात्रमभूत्कलिः ॥ अतुलस्तुमुलोरौद्रः सुराणामसुरैरिव ॥ १५ ॥ रावणारेरवरजो नक्षाम्यन्परपौरुषं ॥ कालास्त्रंविमुचोचाथ संवर्तनामदारुणं ॥ १६ ॥ तेननिर्दह्यमानास्ते कालपाशवशाःसमं ॥ आर्तामुहूर्तमात्रेण [illegible]र्गामभ्युरुत्थताः ॥ १७ ॥ क्रव्यादनेनक्रव्यादा वैरिनाशेनचामराः ॥ स्वोपसर्गक्षयान्मर्त्या मोदमादादिरेमुहुः ॥ १८ ॥ पुष्करंपुष्करावत्यां तक्षंतक्षशिलापुरे ॥ भरतोविषयेतस्मिन् पुत्रौवीरौन्यवेशयत् ॥ १९ ॥ निधायराज्ययोस्तौस धनधान्यसमृद्धयोः ॥ पंचमेवत्सरेयोध्यां प्राप्यराममुपानमत् ॥ २० ॥ भरतेनाथसंमंत्र्य रामोराजीवलोचनः ॥ चक्रेकारापथेरम्या मंगदीयाभिधांपुरीं ॥ २१ ॥ मल्लभूम्यांसमृद्धायां चंद्रकांताभिधांपुरीं ॥ कृत्वाथलक्ष्मणसुतौ रामोराज्येभिषिक्तवान् ॥ २२ ॥ ॥ ॥



रावत्यां तन्नामकनगर्यां तक्षंतन्नामानंसुतं तक्षशिलापुरे तन्नामकनगरे तस्मिन्विषये गंधर्वदेशे एवंनगरद्वयंकारयित्वेत्यर्थः । न्यवेशयत् निवेशयामास संस्थापयामासेत्यर्थः ॥ १९ ॥ २० ॥ कारापथेतन्नामकेदेशे ॥ २१ ॥ मल्लभूम्यां तथाप्रसिद्धायां भूम्यां ॥ २२ ॥ ॥ ॥ ॥

अंगदंतन्नामानंसुतं ॥ २३ ॥ चंद्रकेतुं तन्नामानंचसुतं ततः अंगदात् ॥ २४ ॥ प्रोष्यबहिर्वासित्वा तौलक्ष्मण भरतौ ॥ २५ ॥ २६ ॥ संख्यान् संख्या कुर्वन् तकारांतोयं शब्दः विद्वान्भवन्नः उरुमंत्रवर्णैः उरुभिरनेकैः अनंतैश्चमंत्रवर्णैः विष्णोर्नुकामित्यादिवेदवाक्यैः ॥ २७ ॥ इति उ० टी० पं० स० ॥५॥
॥ श्रीः ॥ आत्मसद्भविशेषार्थं स्वलोकाधिक्यसिध्यर्थं शंभुंब्रह्माणं ॥ १ ॥ क्ष्मांभूमिं अयापयत् प्रेषयामास कालात्मा संहारकारणभूतस्वरूपः एव

अंगदीयांपुरींरम्या मंगदंज्येष्ठमात्मजं॥ धार्मिकंलक्ष्मणोनीत्वा चक्रेपश्चिमभूमिपं॥ २३॥ चंद्रकांतपुरींनिन्ये चंद्रकेतुंततोनुजं॥ भरतोभगवद्वाक्या त्तत्रराज्यमरक्षयत्॥ २४॥ प्रोष्यतौपुत्ररक्षार्थं वत्सरंपुत्रवत्सलौ॥ रामपादांबुजेलोलौ राजहंसाविवापतुः॥ २५॥ एवंविधान्यगण्यानि कर्माणिभगवान्व्यधात्॥ लोकेशैर्ब्रह्मरुद्राद्यै र्दुष्कराण्यपितेजसा॥ २६॥ वीर्याणिविष्णोरिहवक्तिकोवा संख्यांश्चविद्वान्जगदंडपांसून्॥ संवर्णितानीत्युरुमंत्रवर्णैः कोवर्णयेद्रामपराक्रमांस्तान्॥ २७॥ ॥

॥ इति उत्तरकांडे पंचमः सर्गः॥ ५॥

॥ श्रीः॥ भूलोकंब्रह्मलोकाभं दृष्ट्वारामेणपालितं॥ आत्मसद्भाविशेषार्थं देवाःशंभुंययाचिरे॥ १॥ विचार्यकार्यंगिरिशं विरिंचःक्ष्मामयापयत्॥ सकालात्माकपर्दीच रामपार्श्वमुपाययौ॥ २॥ सराजद्वारमासाद्य कालस्तापसरूपवान्॥ महर्षेर्दूतमाचक्ष्व मामित्याचष्टलक्ष्मणं॥ ३॥ संज्ञापितोलक्ष्मणेन रामवाक्यात्प्रवेशितः॥ उपवेश्यासनेदिव्ये रामेप्रणत्यपूज्यत॥ ॥ ४॥ एकांतमेगुरोर्वाक्यं देववक्ष्यामितेपुरः॥ इत्युक्तेतेनकालेन व्यसृज्यद्राघवोखिलान्॥ ५॥

मुक्तश्चाब्रह्मणा कालःप्रेषितो भूदितिग्रंथांतरोक्तेर्गतिरुक्ताभवति । कपर्दीरुद्रः उग्रःकपर्दीश्रीकंठइत्यमरः ॥ २ ॥ कालः संहारकर्ता तापसरूपवान् मुनिवेषधरः महर्षेः कस्यचिन्महामुनेः चतुर्मुखस्येत्यर्थः ॥ ३ ॥ ४ ॥ गुरोः ब्रह्मणः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कंचनापि अंतः नैवमुंच सर्वथागंतुंमुंच सर्वथापिकोपिनप्राविशादिहेत्यर्थः ॥ ६ ॥ ७ ॥ अकारिकृतं संपद्यतांप्राप्यतां ॥ ८ ॥ सदेवःदेवैःसहितः ॥
॥ ९ ॥ ब्रह्मणा स्वेच्छयैवस्वतोभिन्नमेवब्रह्माणं निमित्तीकृत्यब्रह्मगतेनब्रह्मनामकेनरूपेणेतिवा । यथायांनिमित्तीकृत्यगदृतेनशंकरनामकेन तवैवस्वरूप

लक्ष्मणद्वारितिष्ठत्वं नैवांतर्मुंचकंचन ॥ वध्यःस्याःकस्यचिन्मोक्ष इत्यूचेराघवोनुजं ॥ ६ ॥ अ
तिष्ठल्लक्ष्मणोद्वारि बाढमित्यभिधायतं ॥ कथयामासचैकांते कपर्दीकमलेक्षणं ॥ ७ ॥ देवकार्य
मकारीदं त्वयादुष्टविनाशनं ॥ अथेदानींनिजंधाम नाथसंपद्यतांद्रुतं ॥ ८ ॥ इत्थमर्थयतेदेव
सदेवस्त्वंपितामहः ॥ विशेषमात्मालोकस्य भूलोकान्ननुवांछति ॥ ९ ॥ ब्रह्मणेदंविसृजासि भ-
यासंहरसिप्रभो ॥ त्वमेवपालयस्येव त्रीन्गुणान्वर्तयस्यहो ॥ १० ॥ त्वन्नाभिपद्मभूर्ब्रह्मा पद्म
भूतनयोस्म्यहं ॥ तस्मात्पौत्रस्यमेवाक्य मयोग्यमपिपाल्यतां ॥ ११ ॥ इत्युक्तऊचेभगवा न्ना
योग्यंभाषतेभवान् ॥ ब्रह्मापिमत्प्रियापेक्षी प्रयास्याम्याचिरादिति ॥ १२ ॥ एवंतयोर्मंत्रयतो
रुद्रएवान्यरूपवान् ॥ दुर्वासोनामदुर्वारः पुरद्वारमुपागमत् ॥ १३ ॥ ममकारससौमित्रे क्षणे-
स्मिन्रामवीक्षणं ॥ गामृषेरितिसाटोपां श्रुत्वादध्यौसलक्ष्मणः ॥ १४ ॥ आर्यस्यदुर्यशःस्याद्धि
मुनेरातिथ्यभंगतः ॥ सूदयन्नपिकुर्यात्स दयामपिदयानिधिः ॥ १५ ॥ इतिसंचिंत्यसोमुंच द्य-
तिंभागवताग्रणीः ॥ रामश्चकालंविसृज न्मुनिंप्राप्तमवैक्षत ॥ १६ ॥

णेतिवा ॥ १० ॥ ११ ॥ प्रयास्यामि आगमिष्यामि ॥ १२ ॥ दुर्वारः वारयितुमयोग्यः ॥ १३ ॥ गांवाचं साटोपांससंभ्रमां ॥ १४ ॥ १५ ॥ १६ ॥

आत्रिपुत्रः अत्रिमहर्षेःकुमार भूतोदुर्वासाः ॥ १७ ॥ भोज्यं भोजनार्हंनस्यात् क्षुधाबुभुक्षा ॥ १८ ॥ चतुर्गुणं भक्ष्यभोज्यलेह्यपेयात्मकचतुष्टं षड्रसं कषायमधुरतिक्तकटुवम्ल लवणाख्ययुक्तं ॥ १९ ॥ २० ॥ सभागतः सभायांस्थितः कोपनेमुनौ दुर्वाससिमुनौ ॥ २१ ॥ निर्जगामनगरान्निर्गतोभूत् ॥

अत्रिपुत्रोब्रवीद्रामं निराहारोस्मितापसः ॥ सहस्रवत्सरंराम क्षिप्रंमांभोजयेद्भवान् ॥ १७ ॥ प्राक्सिद्धंमेनभोज्यंस्या दन्नंसत्स्यतिचेदथ ॥ क्षुधांकथंसहेवीर क्षणेस्मिन्देहिभोजनं ॥ १८ ॥ इत्युक्तमात्रेमुनिना देवःस्वात्पाणिपल्लवात् ॥ अन्नंचतुर्गुणंसृष्ट्वा षड्रसंप्रददौक्षणात् ॥ १९ ॥ भुक्त्वामत्त्यायातिवर स्तुष्टस्तुष्टावकेशवं ॥ त्वामृतेकोत्रभुवने प्रार्थितंमेदिशेदिति ॥ २० ॥ सभागतःसभगवान् प्रयातेकोपनेमुनौ ॥ वधस्त्यागोहिसुहृदां मत्वेत्याचष्टलक्ष्मणं ॥ २१ ॥ गच्छलक्ष्मणलोकंस्वं ब्रुवाणमितिराघवं ॥ परिक्रम्यप्रणम्यद्राङ् निर्जगामसलक्ष्मणः ॥ २२ ॥ सगत्वासरयूतीरं समाधायमनोहरौ ॥ निरुच्छ्वासोनिरायासो योगेनस्वात्मतांययौ ॥ २३ ॥ महामणिःश्रेणिमतीः फणादशशतंदधत् ॥ अनंतोनंतपर्यंको बभौदेवैःससेवितः ॥ २४ ॥ योमोक्षमक्षयानंद मपेक्षेतानुयातुसः ॥ इत्थंरामेणसर्वत्र भेरीभिरभिघोषितं ॥ २५ ॥ कैवल्यनाथेकैवल्यं दिशत्येवंदयानिधौ ॥ विनैतान्दीर्घभविनः सर्वेप्यन्वगमन्विभुं ॥ २६ ॥ दर्शनात्स्पर्शनाद्ध्यानः श्रवणात्कीर्तनादपि ॥ स्मरणाच्चामलात्मान स्तमन्वीयुश्चराचराः ॥ २७ ॥ ॥ ॥

॥ २२ ॥ स्वात्मतांस्वस्वरूपतां शेषदेवत्वमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ दीर्घभविनः दीर्घसंसारयोग्यान् एतानस्मदादीन् ॥ २६ ॥ २७ ॥ ॥

चरणसामर्थ्यं गमनसामर्थ्यं अचलानां स्थावराणां देहिनांप्राणिनां ॥ २८ ॥ २९ ॥ शावत्यां तन्नामिकायांपुर्यां ॥ ३० ॥ कुमाराभौषण्मुखसमौ कुमारः क्रौंचदारणइत्यमरः ॥ ३१ ॥ ३२ ॥ पूर्वजंज्येष्ठंभूतं ॥ ३३ ॥ ३४ ॥ ३५ ॥ अवेरक्ष ॥ ३६ ॥ अन्वतिष्ठत अनुवर्तमानः पालयन्नभूत् ॥ ३७ ॥

अभूच्चरणसामर्थ्य मचलानांचदेहिनां ॥ सर्वांतर्यामिणस्तस्य रामस्यैवप्रसादतः ॥ २८ ॥ अ
भ्यषिंचत्सभगवान् कोसलाधिपतिंकुशं ॥ साम्राज्येयौवराज्येतु लवमुत्तरराष्ट्रपं ॥ २९ ॥ कुशं
कुशावतीपुर्यां शावत्यांचलवंप्रभुः ॥ चतुरंगंबलंभूरि दत्वाकोशंन्यवेदयत् ॥ ३० ॥ अस्त्रशस्त्र-
विशेषज्ञौ शास्त्रज्ञावतिधार्मिकौ कुमारौसुकुमाराभौ न्ययुङ्क्तक्षितिपालने ॥ ३१ ॥ दूतैरुदित
माकर्ण्य रामप्रस्थानमद्भुतं ॥ शत्रुघ्नोपिनिजौपुत्रौ अभ्यषिंचन्महामती ॥ ३२ ॥ सुबाहुंमधुरापु
र्यां निदधेपूर्वजंसुतं ॥ शत्रुघातिनमप्येष नगरेवैदिशाव्हये ॥ ३३ ॥ रथेनैकेनशत्रुघ्नः प्राप्या
योध्यांपुरींद्रुतं ॥ प्रयाणाभिमुखंरामं प्रणनामजगत्प्रभुं ॥ ३४ ॥ निजराज्येभिषिच्यद्रा गंगदंरिपुभं
गदं ॥ सुग्रीवःसगणःप्राया द्रामंसोपिविभीषणः ॥ ३५ ॥ विभीषणंस्ववंशस्य भूषणंस्माहराघवः ॥
आकल्पांताचमत्सेवा निजराज्यमवेरिति ॥ ३६ ॥ रामाज्ञानिय्रतःप्राज्ञो रामंसंचिंतयन्सदा ॥ सद्ध
र्मानन्वतिष्ठत्स लंकांप्राप्यविभीषणः ॥ ३७ ॥ तदैवरामंभगवंतमापुः सभागतंभागवताःसमस्ताः ॥
सद्योन्यसंगोभृशमापभंगं तेषांजगन्मंगलसंगमेन ॥ ३८ ॥ ॥ इति श्रीसं० उत्त० रा० षष्ठःसर्गः ॥ ६ ॥

अन्यसंगः। पुत्रमित्रकलत्रादिनिमित्तस्नेहः भृशंसर्वात्मना भंगमाप सर्वोपिसात्विकाजीवः भेरीघोषण श्रवणानंतरमेव पुत्रादिसमस्तस्नेहपाशादिकं दूरीकृत्यरामेमेवस्मरंतः श्रीरामसमीपंप्रत्याजग्मुरित्यर्थः ॥ ३८ ॥ ॥ इति उत्तरकांड टीकायां षष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥

॥ श्रीः ॥ प्रतिभासमानं सम्यक् शोभमानं शुभासमानं शुभैः शोभनैः कर्मभिरसमानं असदृशं अहिसंनिभाभ्यां महासर्पसमाभ्यां वस्तुस्थिता कामं अत्यंतं असंनिभाभ्यां असदृशाभ्यां दोर्भ्यांसमाश्लिषदित्यन्वयः ॥ १ ॥ रामः हनुमद्विषये त्वद्येस्वमनसिसारश्रेष्ठं प्रसादमनुग्रहं ससारमाप हनुमत्यनुग्रहमकरोदित्यर्थः । करुणारसानां करुणाख्यरसानां भारंबभार धृतवान् अयंरामः हनुमंतं आराद्दूरे ननिनायनादिसृष्टवान् अतिप्रियत्वात्स्वस्य हनुमंतंसमीपएवस्थापितवान् । सदापितस्मिन्नेव महानुग्रहादिमानभूदित्यर्थः ॥ २ ॥ तान् पूर्वमारभ्यापिविद्यमानान् मद्भक्तिसेवादिगुणाः मद्भक्तिः मत्सेवा मज्ज्ञानंविषयवैराग्यमित्यादिगुणाः निसर्गपूर्णाः स्वभावादेवपरिपूर्णाः अतिशेरते अतिशयिततयावर्तंते । अधिकाभूत्वावर्तंतइत्यर्थः । नि

॥ श्रीः ॥ तस्यांसभायांप्रतिभासमानं वायोःसुतंप्रेक्ष्यशुभासमानं ॥ देवोथदोर्भ्यामहिसंनिभाभ्यां समाश्लिषत्काममसंनिभाभ्यां ॥ १ ॥ ससारसारंहृदयेप्रसादं बभारभारंकरुणारसानां ॥ निनायनाथंहनुमंतमारा द्रुवाचवाचंचरघुप्रवीरः ॥ २ ॥ तान्ब्रह्मचर्यादिगुणानगण्यान् मद्भक्तिसेवादिगुणास्तवामी ॥ निसर्गपूर्णाअतिशेरतेस्म महासमुद्राइवनिम्नगौघान् ॥ ३ ॥ प्रेष्टंतुसर्वत्रचसर्वदाते वपुर्मदीयंयदुपाधिभिर्नो ॥ सदैवसाक्षात्कुरुतातततत्वं तत्वंपरंयोगिजनैर्विमृग्यं ॥ ४ ॥ गंधर्वपूर्वैःपरिगीयमानो गायन्यशःपावनपावनंमे ॥ यथेष्टभोगानुभवीरमेथा ममाग्रतोनुग्रहविग्रहस्य ॥ ५ ॥ ॥

म्नगौघान्नदीप्रवाहान् ॥ ३ ॥ भोहनूमन् मदीयंयद्वपुस्तत् तेसर्वत्रचदेशे सर्वदाचकालेप्रेष्टंतुप्रियमेव उपाधिभिः कामलोभादिनिमित्तैः नोनप्रेष्टं कामाद्याकांक्षयातवमयिप्रीतिः न किंतुसर्वदापिस्वाभाविकीप्रीतिरस्तीत्यर्थः । तथाचश्रुतिः । तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयइत्यादिका । हेताततत्वं तत्तवमियंमद्वपुः सदैवसाक्षात्कुरु प्रत्यक्षतयापश्य कीदृशंयोगिजनैर्विमृग्यंत्वदर्थे आलोचनीयं परंतत्वं परमतत्वात्मकं ॥ ४ ॥ गंधर्वपूर्वैः गंधर्वविद्याधरादिभिः परिगीयमानःसन् सम्यग्गानादिनाकीर्त्यमानःसन् पावनपावनं पवित्राणामपिपवित्रं मेयशोगायन् गानंकुर्वन् यथेष्टभोगानुभवी अनुभववान्सन् अनुग्रहविग्रहस्य तवानुग्रहात्मकमूर्तिमत्तयातवाग्रेस्थितस्य ममाग्रतोयथेष्टंरमेथाः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्रिधाम्नःवैकुंठादिधामत्रयवतः । त्रिषुधामसु वैकुंठादिषु अनल्पगम्येषु अल्पैराभासैरगम्येषु अनल्पैर्महद्भिरेवजनैर्गम्येष्विवा । अनल्पैर्बहुलैर्ज्ञा-नभक्त्यादिभिर्गम्येष्वितिवा । अल्पैःक्षुद्रैःकामादिभिर्गतुमशक्येष्वितिवा । चरःपरिवर्तस्व अभीप्सितंआकांक्षितं संपत्स्यतेसंपन्नंभवि ति ॥ ६ ॥ गदंतंआज्ञापयंतं विक्रियाविकारःधीरधियांधैर्ययुक्तबुद्धिमतांउत्तमानां ॥ ७ ॥ परिधूतमानात्रिनाशितमानवती नव्याजिनीव्याजरहिता फलाकां-क्षादिरहितेत्यर्थः । नव्यभिचारिणीसर्वदापिसम्यगक्षीणजयावर्तमाना । अवियोगिनीक्षणमपिवियोगरहि... । सत्यासाधूनांहितभूता सत्यानिर्दोष-



ममत्रिधाम्नस्त्रिषुधामसुत्व मनल्पगम्येषुचरेर्यथेष्टं ॥ यदायदायद्यदभीप्सितंते संपत्स्यतेतत्तद लंसमस्तं ॥ ६ ॥ गदंतमित्थंजगदेकनाथं जगादबद्धांजलिरांजनेयः ॥ नगद्गदीनाश्रुमुखोधिभ क्तो नविक्रियाधीरधियांननुस्यात् ॥७॥ संवर्धमानापरिधूतमाना नव्याजिनीनव्यभिचारिणीच॥ त्वद्भक्तिरीशत्ववियोगिनीमे सत्यातयासत्यमलंरमेहि ॥८॥ नमोनमोनाथनमोनमस्ते नमोनमो रामनमोनमस्ते ॥ स्वामिन्पुनस्तेचरणारविंदं नमामितन्वावचसाधियापि ॥ ९ ॥ प्राणं...स्यसूनुं तामितिब्रुवाण मोमित्युदात्तत्यतदामुकुंदः ॥ प्रभाकरेप्रागचलंप्रयाते ययावयोध्यानगदाद्वरिष्ठा-त् ॥ १० ॥ अनंतमंतःपुरवर्तिनस्ते पौराःपुनर्जानपदाश्चसर्वे ॥ नरश्चनार्यःशिशवोनवाश्च वृ-द्धाश्चगछंतमथान्वगछन् ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

याअत्युत्तमयेतिवा । त्वयाताद्दश्याभक्त्यारमंरममाणोभवामि ॥८॥ तन्वाशरीरेणशरीरंदंडवत्पातयित्वेत्यर्थः । वचसानमनंनाम नमोनमइत्यादिकथनं धि याबुद्ध्यानमनंनामतत्स्मरणादिकं॥ ९॥ ॐमित्युदात्तस्वरेणैवास्त्वित्युक्त्वा प्रागचलेउदयाचलेप्रभाते सम्यक्शोभितेसतिउदयंप्राप्तवतिसतिइतिवा॥ ॥ १० ॥ नवाश्चयुवानश्च ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कैवल्यंदेमोक्षदातृतयास्थितेसति । मायाख्यदेव्यामायानामिकयादेव्याबंधकत्वकृत्यादुर्गादेव्येत्यर्थः । साक्षादीश्वरेच्छयेतिवा । परिमुग्धबुद्धीन्सं-
मोहितबुद्धीन्जीवान् ययामाययाइहलोकेसंसरति संसारावस्थांप्राप्नोतिदेहीजीवः ॥ १२ ॥ सल्लोकसंघेनसज्जनसमूहेन समागतःसततंसहितःअन्वा-
गतइतिवा । कल्लोलिनीनांमहानदीनां हरिन्मणिश्रीः कल्लोलिनीनांसमागतांभोनिधिरिवेतिश्लेषार्थान्वयः ॥ १३ ॥ अन्वयोवंशः चित्राच्चित्रं आ
श्चर्यादप्याश्चर्यतमः ॥ १४ ॥ महानीलमणींद्रलक्ष्म्याः इंद्रनीलरत्नश्रेष्ठस्यकांतेः चोरोपहारकः तत्शोभाश्रियं अपहरतिनिराकरोतितततोप्यतिशयेन शो
भमानइत्यर्थः । अहोइत्याश्चर्यवान् विस्मयकारणं कुटिलः वक्रः तथापिचोरत्वेपिनीलत्वेपिकुटिलत्वेपि । केशवकेशपाशोनिर्दोषलेशः दोषलेशशू

कैवल्यनाथेकमलेक्षणोस्मिन् कैवल्यदेवंकिलनोपजग्मुः ॥ मायाख्यदेव्यापरिमुग्धबुद्धीन् विना
ययासंसरतीहदेही ॥ १२ ॥ सल्लोकसंघेनसमागतोसौ कल्लोलिनीनामिवमंडलेन ॥ हरिन्मणि
श्रीरधिकंचकाशे हरिर्गुणांभोनिधिरेवसाक्षात् ॥ १३ ॥ अप्येकसूर्यान्वयलब्धजन्मा सहस्रसूर्या
भकिरीटयुक्तः ॥ अनंतसूर्याधिकभाःस्वयंतु चित्राच्चचित्रंपुरुषोत्तमोयं ॥ १४ ॥ अहोमहानील
मणींद्रलक्ष्म्या श्चोरोतिमात्रंकुटिलोतिमात्रं ॥ तथाप्ययंकेशवकेशपाशो निर्दोषलेशोखिलसद्गु-
णाब्धिः ॥ १५ ॥ विशेषकोनोविशिशेषभूम्नः स्वयंविशिष्टांवदनेंदुकांतिं ॥ विशेषकाख्याविफ-
लानतस्य रम्यादशेषाच्चविशेषिणो ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

न्यः ॥ १५ ॥ विशेषकास्तिलकं चित्रकाणि विशेषकइत्यमरः । भूम्नः पूर्णस्यरामस्य स्वयंस्वतएवविशिष्टां अधिकांवदनेंदुकांतिं नोविशिशेष विशिष्टा
मधिकांनाकरोत् । स्वयमेवात्यंतमुन्नतस्य राममुखेंदोः तिलकेन अधिकाकापिशोभानकृतेत्यर्थः । तर्हितस्यविशेषनामवत्वं व्यर्थंकिमित्यतआह । विशे
षकाख्येति । तथापिअत्ररामललाटे स्थितत्वादेव रम्यात् मनोहरात् अशेषाच्चसमस्तादपिवस्तुतः विशेषिणोविशेषवतः उत्तमस्यअतिरम्यस्यतस्यविशेष
नामकस्यतिलकस्य विशेषकाख्या विशेषयतीतिविशेषकाख्या निष्फला व्यर्थान किंतुसफलैव यद्यप्यत्र विशेषयतीतिविशिष्टं करोतीति विशेषका
ख्यानास्ति तथापि रामललाटसंबंधेन स्वस्यैवान्यस्मादतिविशिष्टत्वा द्विशेषकाख्यासफलैवेत्यर्थः ॥ १६ ॥ ॥ ॥ ॥ ॥

मुकुंदस्यमुखंरुचा चंद्रारविंदश्रियं चंद्रस्य अरविंदस्यचाश्रियंशोभां आजहारेतिमिथ्या । इदंद्वयंवस्तुद्वयं अरविंदंचंद्रश्चेति लक्ष्मीसुधावासः अरविंदं-लक्ष्मीवासः चंद्रस्तुसुधावासइत्यर्थः । एतेनराममुखारविंदचंद्रस्य लक्ष्मीसुधावासत्वाद्यनंतगुणात्मकत्वमुक्तंभ वति । ईक्षिकाउत्प्रेक्षा आलोचनेति वा ॥ १७ ॥ अत्यायताभ्यां अतिदीर्घाभ्यां अरुणांतरुग्भ्यां रक्तापांगयुक्ताभ्यां विकस्वराभ्यां विकसनशीलाभ्यां सदयोदयाभ्यां कारुण्योदयसहिताभ्यां अपूरीपरिपूरितवान् ॥ १८ ॥ अतिगंभीररवः अतिगंभीरवचनः नवांबुदाडंबरं जलयुक्तमेघविलासं ॥ १९ ॥ सलोकःजनइत्यन्वयः ॥ निर्गछतः निर्गमनंकुर्वाणान् अजस्रं अखंडिततया ॥ २० ॥ उन्नम्रमनोज्ञनासं उन्नतमनोहरनासायुक्तं कनत्कपोलं दीप्यद्गंडमंडलं नवकुंददंतं कुंद-

चंद्रारविंदश्रियमाजहार मुखंमुकुंदस्यरुचेतिमिथ्या ॥ इदंद्वयंराममुखोपमत्वा ल्लक्ष्मीसुधावा-सइतीक्षिकामे ॥ १७ ॥ अत्यायताभ्यामरुणांतरुग्भ्यां विकस्वराभ्यांसदयोदयाभ्यां ॥ पद्मेक्षणोनुक्षणमीक्षणाभ्यां निजाःप्रजाज्ञानरसैरपूरि ॥ १८ ॥ कर्णोल्लसत्कुंडलमंडलाभ्यां विद्युल्लतामंडलमंजुलाभ्यां ॥ श्यामोतिगंभीररवोजिगाय नवांबुदाडंबरमंबुजाक्षः ॥ १९ ॥ वेदार्थसारान्विमलाननर्घ्यान्महामणींद्रानिवदुर्लभान्सः ॥ निर्गछतोराममुखादजस्रं जग्राहलोकःसकृतुहलोत्र ॥ २० ॥ ताम्रोष्टमुन्नम्रमनोज्ञनासं कनत्कपोलंनवकुंददंतं ॥ रामस्यरम्यभ्रुमुखंप्रजानां स्निग्धास्मितंविस्मयमाततान ॥ २१ ॥ मुक्ताकलापेनपरंपरीतः कंठेलसत्कौस्तुभरत्नराजः ॥ दुग्धाब्धिमध्येजितभानुपुंजं ज्योतिस्मररम्यंस्मरयत्यमुष्य ॥ २२ ॥ ॥ ॥ ॥

कुड्मलसमानदंतपंक्तियुक्तं । रम्यभ्रुमनोहर भ्रूयुक्तं । स्निग्धस्मितंरमणीयमंदहाससहितं । आततानचकार विस्तृतमकरोदितिवा ॥ २१ ॥ मुक्ताकलापेनपरं रामं परीतः परिवार्यस्थितः परंउत्तमंयथाभवतितथेतिक्रियाविशेषणंवा । दुग्धाब्धिमध्यस्थितमितिशेषः । स्मरयति संस्मृतंकरोति । स्वस्य अतिधवलमुक्तामालामिश्रितत्वात् वर्णतस्तुरक्तत्वात् मुक्तामालाव द्धवलक्षीरसमुद्रास्थितं । रक्तत्वेनजितभानुपुंजं अमुष्यरामस्यरत्न : ज्योतिः तेजोमयरूपंस्मरयाति संस्मृतंकरोतीत्यर्थः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हर्म्यंप्रासादः विलासिनीविलासवती ललासउल्ललाम विलासमकरोदित्यर्थः । तस्यरामस्यउरस्थलइतियोजना । तद्र्थंतत्रस्थितायाःलक्ष्म्याः विलासंकर्तुं तस्यवक्षस्येवस्थिता वनमालिकाअभूत्नूनं शूनमितितर्कः अन्यथाकुतस्तत्रातिष्ठदितिनूनंनिश्चितंतिवा ॥ २३ ॥ सन्मंडलसात्त्विकसमूहे सज्जना भीष्टप्रदानार्थं कल्पनगायमानौ कल्पवृक्षायितौ ॥ २४ ॥ तयोःशार्ङ्गशरयोःसोत्तरतांसप्तमरसयुक्ततां षष्ठोरसःकदाचिदपिसप्तमादिरसयुक्तोनभवत्येव॥नरःखरःमार्जारःतुरगःकूर्मश्वशृंगवान् रोमवांश्वयथानभवतितथा यद्यपिसप्तमरसयुक्तोपि भविष्यति तथाप्येतयोःप्रतिघातनंतत्प्रतिक्रियाकरदिसामर्थ्यंकचिदपिकदाचिदपिकुत्रापि कथंचिदपिनास्तीत्यर्थः ॥ २५ ॥ द्वयंइतिद्वयं लघिम्नालाघवेन तुलितंसमत्वेनकृतं सममितियावत् तनुनाम्न

हरिन्मणींद्रस्थलहर्म्यरम्ये विलासिनीतस्यललासलक्ष्मीः ॥ उरस्थलेसौरभमत्तभृंगी नूनंतद-
र्थंवनमालिकाभूत् ॥ २३ ॥ युद्धेरिपूणामनलायमानौ मालायमानौजनकात्मजांसे ॥ सन्मंडले
कल्पनगायमानौ सत्यंकरौतस्याहिनिःसमानौ ॥ २४ ॥ सर्वासुरघ्नंजगदेकसारं शरंचशार्ङ्गंचवि
भुर्बभार ॥ तयोर्नकिंचित्प्रतिघातनंस्या त्षष्ठरसेसोत्तरतांगतेपि ॥ २५ ॥ जगत्त्रयंचास्यवलित्र
यंच द्वयंलघिम्नातुलितंबभार ॥ उदारभासातनुनोदरेण मनोज्ञनाभेनसपद्मनाभः ॥ २६ ॥
वासःकनत्कांचनभंगपिंगं पर्यंचितंकांचनकांचिदाम्ना ॥ रम्येरमायारमणस्यतस्य नितंबबिंबे-
नितरांरराज ॥ २७ ॥ सीतापतेःसुंदरमूरुयुग्मं हस्तींद्रहस्तोपममित्युदीर्य ॥ भृशावमत्वादुप-
मानभूमे लोडायतेचित्तमिदंमदीयं ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥

क्ष्मेणमनोज्ञनाभेनमनोहरनाभियुक्तेन ॥२६॥ वासःवस्त्रंकनत्कांचनभंगपिंगंदीप्यत्सुवर्णभंगवत्पिंगं पिंगलवर्णं कपिशवर्णमित्यर्थः । पिंगपिशंगौकद्रुपिंगलावित्यमरः । पर्यंचितंपरितःअंचितंघटितं सहितमित्यर्थः । कांचनकांचिदाम्नासुवर्णमेखलया ॥ २७ ॥ भृशावमत्वात् अत्यंतमूनत्वात् उपमानभूमेः सादृश्यस्थलभूतस्यहस्तींद्रहस्तस्य प्राकृतत्वादिना आभासत्वादित्यर्थः । डोलायते अन्यततदुपमास्थलं अदृष्ट्वाचंचलीभवति । ऊर्वोरेवअन्यान्यसदृशत्वात् तादृशंएकंउपमास्थलंदृष्ट्वानिश्चयमपिप्राप्नोतीत्यर्थः ॥ २८ ॥ ॥ ॥ ॥ ॥

तन्निष्ठेऊरुप्रदेशमारभ्य तनिष्ठेअतिसूक्ष्मभूते ॥ २९ ॥ नखाःरावनखाः भासातेजसा लज्जितबंधुजीवाः लज्जितानिलज्जायुक्तयाकृतानिबंधुजीवा-निबंधुजीवनामकानि अतिरक्तानिकुसुमानियैस्तेतथोक्ताः । बंधूकंबंधुजीवंस्यादित्याभिधानं । बंधूकपुष्पसदृशावरपाणिपादमित्यादि एवंचउत्कृष्ट-कारेणलज्जित बंधुजीवत्वेपिलज्जितबंधुजीवाः नोलज्जिता बंधवः बंधुभूताः भक्त्यादिमंतः जीवाः सजीवाः येषांनखानांतेतथोक्ताः । नोनाभवन न भवतिनभविष्यति । संतस्तुतादृशेपितद्गुणलोलाः तत्रभक्त्यादिकमेवकुर्वंति नपुनस्ततः पराङ्मुखा भवंतीत्यर्थः । तादृशानखाईक्षकाणां द्रष्टृणां-जनानां पुनर्नवत्वं स्वेषामत्याश्चर्ययुक्तत्वात् क्षणे क्षणेपि अन्याकाराइवस्वाकाराइव इत्यादिनाप्रकारेणपुनः पुनरभिनवत्वं दधुः चक्रुः । अनादिपुंसः

क्रमात्तनिष्ठेरुचिरेसुवृत्ते जंघेजगन्मंगलकीर्तनस्य ॥ परस्परेणोपमितेकवींद्रै र्व्यक्तंत्रिलोक्या-मुपमानलब्धा ॥ २९ ॥ भासानखालज्जितबंधुजीवा एवंचनोलज्जितबंधुजीवाः ॥ पुनर्नवत्वंद धुरीक्षकाणां मनादिपुंसोनपुनर्नवत्वं ॥ ३० ॥ बालोरविर्लोलगुणःसुगंधि र्नोपद्मरागःपरितामि पद्मं ॥ विहायसर्वानितिरागलक्ष्मी रवापरामांघ्रिमदोषलेशं ॥ ३१ ॥ रत्नांगुलीयांगदनूपुरादि विभूषणानामपिभूषणानि ॥ अंगानितस्याखिलभूषणाणि स्वयंप्रभुत्वात्सुखचिन्मयानि ॥ ३२ ॥ इमाननंतस्यगुणाननंता ननंतबोधाविधिशर्वपूर्वाः ॥ अंशांशतोवक्तुमहोनशक्ताः कथंपुनर्मादृशामानसास्युः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुनरभिनवत्वंनदधुः तस्यसर्वदाप्येवंविधस्वरूपत्वात् अनंताश्चर्यसमूहनिकरप्राप्तत्वात्तस्य नित्यदाप्येकप्रकारत्वान्नपुनर्नवत्वंक्षणेक्षणेनूतनतयास्वाभिन वप्रकारत्वं नेत्यर्थः ॥३०॥ लोलगुणः चंचलगुणवान् बाल्यएवसर्वदापिनतिष्ठतीतियतः चंचलगुणइत्यर्थः । सुगंधिः शोभनगंधवान् नोनभवति परितामि म्लानतायुक्तं ग्लानिसहितंसदापि मुकलीभूतं विकासयुक्तंन भवतीत्यर्थः । सर्वान् सूर्यादीन् विहाय अदोषलेशं लोलगुणत्वादिसम-स्तदोषराहितं ॥ ३१ ॥ ३२ ॥ अनंतबोधाः अपारबुद्धयः मादृशमानसाः मद्बुद्धिमदृशबुद्धयः कथंशक्तास्युः नकथमपि ॥ ३३ ॥ ॥ ॥

सिताभेधवलतयाशोभमाने धुनानावीजयंतिश्रीः श्रीरितिनाम्नान्हीः न्हीरितिनाम्नाच परंद्वित्वतीर्द्विरूपवती वरतुरित्या अवैक्षि अवेक्षितैव सर्व-
रापिद्रष्टा भूदित्यर्थः ॥ ३४ ॥ रामस्यपत्न्याः सीतायाः तारुण्य लावण्यविलासलक्ष्मीः तारुण्यलावण्यादिगुण विलासश्रीः अनुपमापिवेदानिवेदता-
पिवेदादिप्रतिपादितापि पुनरपिरामकांत्या रामस्यकांत्या शोभया प्रतर्क्यतां ऊह्यतां अन्यस्यतत्सदृशवस्तुनोऽभावात् रामस्यैव कांतिसदृशीत्यूह्यता
मित्यर्थः ॥ रामकांतिरपितारुण्यादियुक्ताभवति । अनाद्यनंतकालीनाच अनवद्यानिष्पापानुपमाच वेदनिर्वेदिताचभवति । यतस्तस्मात् तत्सम।न-

सीतासिताभेमणिहेमदंडे द्वेचामरेचारुतरेधुनाना ॥ श्रीन्हीरितिद्वित्ववतीपरेशं पार्श्वद्वयेसर्वज
नैरवैक्षि ॥ ३४ ॥ तारुण्यलावण्यविलासलक्ष्मीं रमाद्यनंतानुपमानवद्या ॥ रामस्यपत्न्याननु-
रामकांत्या प्रतर्क्यतांवेदनिवेदितापि ॥ ३५ ॥ बिंदूनमंदान्विकिरन्सुधाया ह्याराविदाराद्ध्रुवमा-
प्तभूत्यै ॥ भूम्नःसितच्छत्रमधत्तचित्रं धीमान्हनूमान्हसितेंदुबिंबं ॥ ३६ ॥ चक्रंविधूताखिलदुष्ट
चक्रं चक्रात्मकोसौभरतोदधानः ॥ भ्राजत्सहस्रांशुसहस्रतेज स्तस्यानुजोदक्षिणतोजगाम ॥
॥ ३७ ॥ स्वयंस्वनंतंश्वसनावपूरं श्चंद्रच्छविंहासमिवातिदिव्यं ॥ शंखंदधच्छंकतनुःस्वयंच शत्रु
घ्नआयात्प्रभुसव्यभागे ॥ ३८ ॥ तस्याग्रतोब्रह्मशिवादिदेवा स्तत्सेवनार्थंप्रययुःस्वभूत्या ॥
ॐकारपूर्वाअपिसर्ववेदा स्तंकीर्तयंतोनिजकीर्तिमंतं ॥ ३९ ॥ खगामृगाद्याश्चपिपीलिकाद्या न
गास्तृणाद्याश्चचराचराये ॥ लोकाःस्वलोकाभिमुखंमुकुंदं पश्चान्महाकारुणिकंप्रजग्मुः ॥ ४० ॥

तातर्कस्तस्यायुक्तइत्यर्थः ॥ ३५ ॥ आप्तभूत्यै आप्तानांशरणागतानां भक्तानांऐश्वर्यादिप्राप्तये हसितेंदुबिंबं अपहसितचंद्रमंडल चंद्रमंडलादप्यधिक
सुधाकणादिमयोक्तत्वाद्धसितेंदुबिंबमित्युक्तं ॥ ३६ ॥ विधूताखिलदुष्टचक्रं निरस्तसमस्तदुष्टसमूहं तस्यरामस्यदक्षिणतः दक्षिणपार्श्वे ॥ ३७ ॥ स्व
नंतश्वसनावपूरैः अनंतस्यनारायणस्य शोभनमुखवायुपूरैः । स्वयंस्वयमेवेत्यर्थः ॥ ३८ ॥ तस्यरामस्य ॥ ३९ ॥ खगाःपक्षिणः नगाः वृक्षाः प्र...प्
द्युतः ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पार्श्वद्वितये यांतिस्मययुः ॥ ४१ ॥गांधर्वसारान् गायनश्रेष्ठानि ॥ ४२ ॥ प्राणः मुख्यप्राणः त्रिदिवात् सत्यलोकादेः मकाशात् जगतः जनस्सुमुक्षोः मोक्षप्राप्तुकामस्य उददीपयंतः उपदेशादिना मकाशयंतः ॥ ४३ ॥ सद्भक्तिसिद्धांजनतेजिताभिः समीचीनहरिभक्ति सिद्धांजनैः तेजिताभिः उत्तेजिताभिः निर्मलाभिः स्पष्टीकृताभिरित्यर्थः । सिद्धांजनमितिकाश्चिन्नेत्रौषधविशेषः सत्ज्ञानदृग्भिः ज्ञानाख्यनेत्रैः प्राणभृताजीवाः प्रभूतं समृद्धं बहुलमित्यर्थः ॥ ४४ ॥ अनंतः रामः अनंतैर्विभवैः सार्धं इतोयोध्यानगरात् सस्नुःस्नानंकृतवंतः ॥ ४५ ॥ प्राप्ता आगताइतिद्वितीया विमा

तेवानरास्तंरविसूनुपूर्वाः सर्वेनराअप्यातिशुत्धभावाः ॥ गायंतउच्चैश्चरितानिभूम्नो रामस्यपार्श्वद्वितये-स्मयांति ॥४१॥ गांधर्वसाराननुवर्तयंतो गंधर्वविद्याधरचारणाद्याः ॥ महामुनींद्राअपिकोसलेंद्रं वेदैस्तुवंतःपरितोन्वगच्छन् ॥४२॥ प्राणःस्वयंभूर्गरुडादयोस्य गुणान्वदंतस्त्रिदिवादुपेत्य ॥ द्रष्टुंतमीशंजगतो मुमुक्षो र्ज्ञानप्रदीपानुददीपयंतः ॥४३॥ सद्भक्तिसित्धांजनतेजिताभिः सत्ज्ञानदृग्भिःप्रभुमीक्षमाणाः ॥ चराचराःप्राणभृतःप्रमोद मभूतपूर्वंप्रययुःप्रभूतं ॥४४॥ अनंतएवंविभवैरनंतैः सयोजनंसार्धमितोजगाम ॥ रामाज्ञयातत्रमनोरमायां सस्नुःसरय्वांसकलास्मलोकाः ॥४५॥ प्राप्तादिवस्तत्रविमानकोटी र्मणिप्रवेकैर्लसमानकोटीः ॥ प्रजाअपश्यंश्चलचामराणां वृंदंवधूनामिवचामराणां ॥४६॥ अथारुरोहांबरमंबुजाक्षः स्तदाचिदानंदवपुःससीतः ॥ सद्योतिदिव्याकृतयःसमस्ता श्चराचरास्तेचविमानभाजः ॥४७॥ बत्धांजलिर्मूर्धनिराजितश्री रामायरामायमनोरमाय ॥ ब्रह्माथवृंदारकवृंदयुक्त स्तुष्टावतुष्टावधिकंनिमग्नः ४८

नकोटीः बहुकोटिविमानानि मणिप्रवेकैः रत्नश्रेष्ठैः लसमानकोटीः अतिशोभमानाग्रभागादिप्रदेशयुक्तानि इहविमानेषु अमराणांवृंदंचापश्यन्नित्यर्थः ॥ ४६ ॥ सद्यस्तत्रस्नानसमयएव अतिदिव्याकृतयः अतिदिव्यदेहाः विमानभाजः विमानमारुह्याचांकाशमारुरुहुरित्यन्वयः ॥ ४७ ॥ राजितश्रीरामायराजिता शोभमानायाश्रीरितिप्रसिद्धारामाश्रीस्तत्साहिताय राजितांश्रियंरमयतीतिवा । तांराजयतीतिवा । राजितश्रीरामः तमतुष्टावस्तुतिमकरोत् तुष्टौसंतोषे अधिकंअत्यंतं ॥ ४८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्वानंदसंतानवतीं स्वरूपानंदाभिवृद्धिमतीं विभयांनिर्भयां विशोकांनिर्दुःखां ॥ ४९ ॥ पुरस्तात्रामावतारमभ्यं अवन्यांभूमौकापिमर्त्ययोन्यां वानर नरयोनौ देहंवानरादिदेहंविहायत्यक्त्वा निजमूलरूपंविविशुः प्राविशन्प्रापुरित्यन्वयः ॥ ५० ॥ सरामदेवःपुरस्तात् पूर्वांस्वरूपादिभेदंविनैववर्जयित्वैव विशेषमात्रेणभेदप्रतिनिधिना विशेषाख्येनशक्त्यतिशयमात्रेण पृथकाभिन्नइवदृष्टःपुनःततस्तदनंतरं पयोब्धिमध्यस्थितेन अनंतशय्यस्वमूलरूपेणापृथगभिन्नः सर्वात्मनैकीभूतःसन्नभूदित्यर्थः।भेदहीनेपिवस्तुनिभेदकार्यकारीविशेषनामोच्यते।यथोक्तमाचार्यैः। भेदहीनेत्वपर्यायशब्दांतरनियामकः। विशेषोनामकथितःसोस्तिवस्तुष्वशेषतइति। महतीचर्चास्त्यत्रग्रंथबाहुल्यादिभयादुपरम्यते ॥ ५१ ॥ रामनामवपुषःभून्नःविष्णोःवपुंषिरूपाणिभांति खलुशोभंतेखलु कथंभूतानि फुल्लतामरसदृंशि फुल्लानिविकसितानियानितामरसानिपद्मानि तद्वद्विद्यमानाःदृशोदृष्टयः नयनानिएषांतानितथोक्तानि अतिविकसितपद्मसमनेत्राणीत्यर्थः। सर्वसद्गुणगणैरपिसदृंशिसमानानि सर्वत्रदेशेसर्वदापिकाले सर्वगुणगणैश्चसर्वाण्यपिरूपाणिसमानान्येवनहीनोत्तमत्वादियुक्तानीत्यर्थः। सद्विभवपुंषिसंतानिर्दोषाउत्तमायेविभवाः आनंदैश्वर्यवीर्यशौर्यादयः तानेवसर्वदापुष्णंतिपुष्टिंकुर्वंतीतितथोक्तानि। सर्वेप्यत्यंतनानाविधपरमविभवसमूहपरिपूर्णानीत्यर्थः। सर्वसद्गुणगणैरपिभून्नइतियथाक्रममेवान्वयः। तदासदृंशिसमानानि आभिन्नानीत्यादिरर्थोवाच्यः। अत्रबहुप्रमाणानिवक्तुंशक्यंते। तथापिबालजनमनःसमाधानायप्रवृत्तत्वादुपरम्यतेस्माभिरित्यास्तांविस्तरः ॥ ५२ ॥ ॥ इति श्रीसंग्रहरामायणे उत्तरकांडटीकायां सप्तमःसर्गः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामाज्ञयाविश्वगुरुर्विरिंचिः सवैष्णवीमेवगतिंदिदेश ॥ स्वानंदसंतानवतीमनंतां ताभ्यःप्रजाभ्योविभयांविशंकां ॥ ४९ ॥ येयेपुरस्तादवतारमापुरंशैरवन्यांकापिमर्त्ययोन्यां ॥ देवोपदेवानिजमूलरूपं विहायदेहंविविशुर्विशुद्धाः ॥५०॥ विशेषमात्रेणविनैवभेदं पृथक्पुरस्तादपृथक्ततोभूत् ॥ अनंतशय्येनपयोब्धिमध्ये स्वमूलरूपेणसरामदेवः ॥ ५१ ॥ सर्वसद्गुणगणैरपिभून्नः फुल्लतामरसदृंशिसदृंशि ॥ रामनामवपुषःखलुविष्णोर्भांतिसद्विभवपुंषिवपुंषि ॥ ५२ ॥

इति श्रीसंग्रहरामायणे उत्तरकांडे सप्तमःसर्गः ॥ ७ ॥ ॥ ॥ ॥ ॥

॥ श्रीः ॥ रूपांतरेणरूपविशेषेण अन्येनरूपेणेतिवा । सदांतरेण सतामुत्तमानां अंतरेणप्रियेण ॥ १ ॥ रामप्रसादायेति तादर्थ्येचतुर्थी । रामानुग्रहं पूर्णमपिपुनःपूर्णतयाप्राप्तुं सहनुमान्किंपुरुषाख्यवर्षे किंपुरुषनामकखंडे राज्यंशास्तिरक्षति एवंप्रयुक्तत्वात् स्वभोगाद्याकांक्षयातस्यराज्यकरणंनेत्यर्थः । तत्रकिंपुरुषखंडे स्वपुरतःनिरीक्षमाणः सदासम्यक्पश्यन् गानदक्षःगानंकर्तुंचतुरः ॥ २ ॥ गानप्रकारमेवाह वंदामहइत्यादिना । विश्वपरायणं विश्वस्यसमस्तजगतः परायणंमुख्याधारं विश्वस्यमुख्यवायोःमुख्याश्रयमितिवा । विष्णुंचविष्णुनाम्ना अवतीर्णंचत्वां वंदामहइत्यन्वयः । विश्वस्थितिदं सर्वजगद्रक्षाकरं विजिष्णुंसर्वशत्रुविजयशीलयुक्तं । पातालपादं पाताललोकजनकपादवंतंपुरुषंविराट्पुरुषनामकपूर्णषड्गुणं द्युमौलिंद्यौरितिसत्यलोकउच्यते । सत्यलोकजनकशिरोयुक्तमित्यर्थः । तथाचश्रुतिः । मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृताआजातमग्निमिति । दिवोमूर्धानं

**श्रीः ॥ अनुग्रहार्थंपवमानसूनो रूपांतरेणाथसदांतरेण ॥ उवासरामोरमणीयकीर्तिं मंडलेकिंपुरुषाख्यखंडे ॥ १ ॥ रामप्रसादायसशास्तिराज्यं प्राणात्मजःकिंपुरुषाख्यवर्षे ॥ रामंसदातत्रनिरीक्षमाणः कीर्तिंप्रभोर्गायतिगानदक्षः ॥ २ ॥ वंदामहेसुंदरमिंदिरेशं नारायणंविश्वपरायणंत्वां ॥ विष्णुंचविश्वस्थितिदंविजिष्णुं पातालपादंपुरुषंद्युमौलिं ॥ ३ ॥ त्वांवासुदेवंनिजमुक्तिबीजं संकर्षणंसंहरणप्रवीणं ॥ प्रद्युम्नमस्यप्रभवप्रभावं वंदेनिरुद्धंसकलैकपालं ॥ ४ ॥ ॥**

सत्यलोकजनकमूर्धानमित्यर्थः । पृथिव्यांअरतिं पृथिव्युपलक्षितपातालजनकपादवंतमित्यर्थः । पातालपादं पातालस्थितपादवंतं द्युमौलिंसत्यलोकस्थितमूर्धानमितिवा । समस्तमपिब्रह्मांडमंडलंतत्तदवयवैर्व्याप्यतद्रक्षणार्थंतत्प्रेरणाद्यर्थंचतिष्ठंतमित्यर्थः । तथाचभागवते । पातालमेतस्यहिपादमूलंपठंतिपार्ष्णिप्रपदेरसातलं मित्यादिविराट् पुरुषवर्णने । त्वांवंदइत्याद्यन्वयः ॥ ३ ॥ वासुदेवं वासनात्सुते देवनाद्वासुदेवोवासात् द्युतेश्चावनात् । क्रीडयाचबलात्संदसुत्वाद्दातृतावर्तनाच्च तंवासुदेवंप्रवदंतिवेदा इतिमाकरायणश्रुतिः । निजमुक्तिबीजं निजानामात्मीयानां स्वभक्तानांमुक्तिकारणभूतं । संहरणप्रवीणं सर्वजगत्संहारककुशलं अस्यलोकस्यप्रभवप्रभावं प्रभवंजन्मानं प्रभावंसामर्थ्यंवंतं सकलजगज्जन्मकारणशक्तिमंतं सृष्टिकर्तृभूतमित्यर्थः । सकलैकपालं सकलस्यलोकस्यएकपालं प्रधानरक्षकं सर्वजगत्पालकमित्यर्थः ॥ ४ ॥ ॥ ॥ ॥ ॥

विधेश्चतुर्मुखस्य कुमारंकुमारनाम्नावतीर्णं । महीवहंप्रधानभूमेधारकं भूम्युत्धरणकारणभूतमित्यर्थः । सात्वतं सात्वतनामकंग्रंथं संपादकं संपादयितुं कर्तुंशीलवंतं ऐतरेयं इतरायाःकुमारं महिदासनामकं महिदासेनसात्वतनामकग्रंथःकृतः । महिदासमभिधानजज्ञे इतरायास्तपोबलात् । साक्षात्सभगवान्विष्णुर्यस्तंत्रंवैष्णवंव्यधादित्याचार्यवचनं। नारायणं नारायणनामकं धर्मभवंधर्मादवतीर्णं धर्मस्यधर्मस्यसुतं कृष्णंहरिंचेत्यन्वय ॥ ५ ॥ यथाक्षा रायणकृष्णहरयोवतीर्णाः तत्रहरेर्विशेषमाह । विरिंचरक्षाकरनामधेयमिति । चतुर्मुखस्यरक्षाकरनामवंतं । भगवतांजातएवब्रह्मणिपद्मेस्थितवतिसति प्रलयकालवायुनापद्मेकंपितेसति तत्रास्थितोब्रह्माहारिरित्यब्रवीत् तदाभीतंतं हरीरक्षितवानितिकथा तस्मादेवमुक्तं । सांख्यहेतुंसांख्यशास्त्रकर्तारं सांख्यंनामयथार्थज्ञानं। कपिलंकपिलनामकंवंदे हेभूमन् परिपूर्णेतिसंबुद्धिः। आन्वीक्षिकीवादिनंतर्क विद्याप्रवर्तकं । एमिशरणं प्राप्नोमि । दत्तंदत्तात्रे

गुरुंविधेर्विश्वगुरुंकुमारं महीवहंत्वांचमहावराहं ॥ संपादकंसात्वतमैतरेयं नारायणंधर्मभवंचवं
दे ॥ ५ ॥ कृष्णंचधर्मस्यसुतंहरिंच विरिंचरक्षाकरनामधेयं ॥ त्वांसांख्यहेतुंकपिलंचभूम न्नावी
क्षिकीवादिनमेमिदत्तं ॥ ६ ॥ यज्ञंमहेंद्रंमनुसूक्तवंद्य मसंगिनंस्तौम्यृषभंचनाभ्यं ॥ पृथुंपृथुस्थं
वरचक्रिणंच मत्स्यंमनुंगामपिगुप्तवंतं ॥ ७ ॥ कूर्ममहामंदरधारिलीलं धन्वंतरिंत्वामभृतंदधा-
नं ॥ वधूंसुरार्थंहतदैत्यधैर्यां दैत्येभसिंहंचनृसिंहमेमि ॥ ८ ॥ श्रीवामनाख्यंबलिबंधनंत्वां क्ष-
त्रक्षयार्थंननुभार्गवंच ॥ वेदांतदंव्यासमवैमितंत्वां रामंचरक्षःक्षपणंपातिंमे ॥ ९ ॥ ॥

यं ॥ ६ ॥ यज्ञंरुचिप्रजापतिकुमारत्वेनाकूतिदेव्यामवतीर्णं यज्ञनामकं महेंद्रंइंद्रपदेस्थित्वा राज्यंकृतवंतं । पूर्वेंद्रोसौयज्ञनामारमेशइत्याचार्यैर्निरूपितं । मनुसूक्तवंद्यं मनुनास्वायंभुवेन सूक्तैरुपनिषन्मंत्रैः ईशावास्यमिदं विश्वमित्यादिभिर्वंद्यंस्तुत्यं । स्वायंभुवेनमनुनाहारिरित्यनूक्त इतिचश्रीभागवते । नाभ्यंनाभिनामकस्यराज्ञः कुमारत्वेनावतीर्णंऋषभंऋषभनामकं पृथुंमहांतं पृथुस्थंपृथुराज्ञोह्रदयेस्थितं । वरचक्रिणंउत्तमसुदर्शनचक्रधारिणं । मनुं वैवस्वतमनुं गांभूमिं गुप्तवंतं उदधप्रलयेरक्षितवंतं ॥ मत्स्यंमत्स्यरूपिणं ॥ ७ ॥ वधूंमहिलांदेवीनामकरूपदंतं दुष्टराजकुलविनाशार्थं । दैत्येभसिंहंदैत्या-ख्यगजसिंहं ॥ ८ ॥ भार्गवं भृगुकुलतिलकंपरशुरामं वेदांतदं सर्ववेदवेदांतसच्छास्त्रार्थप्रतिपादकं तत्प्रवर्तकमित्यर्थः ॥ ९ ॥ ॥ ॥

धरित्रीभरहारिलीलं भूभारहरणाख्यलीलावंतं। असद्बुद्धिभिदं असतां जिनादीनां बुद्धिभिदं बुद्धिमोहनकर्तारं। कलिकल्कशांत्यै कलिकालनिमित्तं यत्क ल्कं पापादिकंमलंतच्छांत्यै तत्प्रशमनार्थंकल्किस्वरूपभूतमित्यर्थः॥१०॥ मधुद्विषंमधनामकदैत्यहतवंतं। वेदभृतंवेदानानीतवंतं हयास्यं हयग्रीवस्वरूपिणं ग्रहतारकेशंसूर्यादिसमस्तग्रहतारकादीनां स्वामिनं तत्प्रवर्तकमित्यर्थः। धेनुकामधेनुस्वरूपिणं रसान् ... ममिश्रितकूपविशेषे अमृतंकर्तुंसंभृतान्नानारसान्। परेषांदेववैरिणां असुराणांविरिंचादिगुरुं विरिंचसनकसनंदनादिज्ञानोपदेष्टारं हंसंहंसनामकं पक्षिरूपिणंच। ११॥ मरुत्वती ... अदितेः कुमारभूतं उपेंद्रं उपेंद्रनामकं दारकांगं तन्नाम्नाव्यक्तीभूतं बालस्वरूपमितिवा। वृकदारकं वृकासुरनाशकं कृपालुं राज्यज्ञानादिदानेन कृपावंतं॥१२॥ विभुंविभुनाम्नाव

त्वांशुक्लकेशंबलदेवसंस्थं कृष्णंधरित्रीभरहारिलीलं ॥ नमाम्यसद्बुद्धिभिदंचबुद्धं कल्किस्वरूपंकलि कल्कशांत्यै ॥ १० ॥ मधुद्विषंवेदभृतंहयास्यं त्वांशिंशुमारंग्रहतारकेशं ॥ धेनुंरसान्पीतवतींपरेषां वं देविरिंचादिगुरुंचहंसं ॥ ११ ॥ मरुत्वतीपुत्रमुपेंद्रमेमि पृश्नेःसुतंत्वामपिपृश्निगर्भं ॥ त्वांदारकांगंवृ कदारकंच ध्रुवेकृपालुंखलुवासुदेवं ॥ १२ ॥ विभुंमुनीनामनुशिक्षितारं मृत्युंखलानामपिसत्यसेनं ॥ त्वांतापसंमोचितहस्तिमल्लं वैकुंठमीडेनिजलोकहेतुं ॥ १३ ॥ वंदेजिताख्यंमथितांबुराशिं त्वांसार्वभौ मंबलिराज्यदंच ॥ गुप्ताद्भुतंत्वामृषभंचविष्वक् सेनंहितंशक्रपदस्यशंभोः ॥ १४ ॥ त्वांधर्मसेतुंसुतमा र्यकस्य सुधामभूतिंखलुसूनृताजं ॥ योगेश्वरंबार्हतमप्युपासेगुरुंत्वहद्धानुमिहक्रियाणां ॥ १५ ॥ ॥

तीर्णं अनुशिक्षितारं वैष्णवधर्मोपदेशेनशिक्षितवंतं। मृत्युंविनाशकारणंसत्यसेनंतन्नाम्नावतीर्णं॥ तापसं तन्नामानंमनु मोचितहस्तिमल्लं ग्राहान्विमोचितग जेंद्रवंतं वैकुंठंतन्नाम्नावतीर्णं ईडेस्तौमि निजलोकहेतुं वै ... कर्तारं॥१३॥ अजिताख्यंतन्नाम्ना ... मथितांबुराशिं अमृतमथनसमयेमथितक्षीरवारि धिं। सार्वभौमंतन्नामानं। गुप्ताद्भुतंगुप्त पालितः अद्भुतः अद्भुतनामकः इंद्रोयेनसतथोक्तः। ऋषभंतन्नामकं विष्वक्सेनंतन्नामानं शक्रपदस्य इंद्रपदस्य ... शंभोःतन्नामकस्य कस्यचिद्धितमाधिकारिणः पुरुषस्य॥१४॥ धर्मसेतुंतन्नामानं आर्यकस्य तन्नामकस्यमनोः सुधामभूतिंतन्नाम्ना। सूनृताजं ... नावतीर्णं। योगेश्वरं तन्नामकं बार्हतंबृहतीदेव्याः पुत्रत्वेनावतीर्णं। गुरुमुपदेशकंबृहद्धानुंतन्नामानं। क्रियाणां सत्कर्मणां गुरुमितिसंबंधः॥१५॥ ॥

तनूःरूपाणिभावानाविर्भावान् अवतारान् रूपाणीत्यर्थः । विश्वप्रमुखानादिश्वतैजसादीन् द्विवर्गान् स्त्रीत्वेनपुंस्त्वेनचस्थितानित्यर्थः । तथाचश्रुतिः ।
स्त्रियःसतीस्तांउमेपुंसआहुरिति । स्त्रीरूपश्चैवपुंरूपोननपुंसकरूपवानितिच । नारायणादीन् अष्टोत्तरशतं । केशवादीन् चतुर्विंशतसंख्याकान् । आ
त्मादिकान् आत्मांतरात्मादिकान् अजितादिकानष्टौ ॥ १६ ॥ अपांतरप्राज्ञतमःपुरोगान् अपांतरतमःप्रभृतीन् अन्यतमान् पूर्वोक्तेभ्योन्यान्
वर्णाभिधेयान् वर्णैरकाराद्यैःप्रतिपादितान् । अजानंदादीन् । बृहतीसहस्रवर्णोदितान् बृहतीनामकानां छंदसांसहस्रस्यवर्णैरकारादिभिरुदितान् प्रतिपाद्या
न् बृहतीछंदसांसहस्रस्यवर्णाः सर्वेपिगणिताश्चेत् षट्त्रिंशत्सहस्रपरिमिताभवंति । तत्रस्वरव्यंजनभेदेन प्रत्येकमेकैकवर्ण प्रतिपाद्योभगवान् द्वात्रिंशतिसहस्र
परिमितरूपवान्भवति । सएवचभगवान् प्रतिशरीरंद्वासप्ततिसहस्रपरिमितानाडीषु द्वासप्ततिसहस्ररूपः शरीरेषुतिष्ठतीत्याद्यभिप्रायेण बृहतीसहस्रव
वंदेतनूस्तेवडवामुखादे र्भावांश्चविश्वप्रमुखान्द्विवर्गान् ॥ नारायणादीनपिकेशवादी नात्मादि-
कानप्यजितादिकांश्च ॥ १६ ॥ अपांतरःप्राज्ञतमःपुरोगान् भावान्भजेतेन्यतमांश्चमान्यान् ॥
वर्णाभिधेयान्बृहतीसहस्र वर्णोदितान्वेदमतांस्तथान्यान् ॥ १७ ॥ इच्छादिशक्तीरपिमोचकादी
स्तत्राणिमादीर्विमलादिकाश्च ॥ अजातविद्यास्वपिजातविद्या स्वाम्नातमूर्तीःसकलाउपासे ॥
॥ १८ ॥ कालेष्वनंतेषुततानानंतान् देशेष्वनंतेषुचविग्रहांस्ते ॥ चित्राकृतार्थेषुततानानंते ष्वे-
तानुपासेप्रतिवस्तुपाङ्क्तान् ॥ १९ ॥ ताम्राणिशुभ्राणिचपिंगलानि श्यामानिनीलानिचतुर्भुजा-
नि ॥ द्व्यष्टप्रवेष्टानिचतेवपूंषि महांतिचाणूनिचचिंतयामि ॥ २० ॥ ॥ ॥ ॥
र्णोदितानित्यर्थः । वेदमतान्वेदप्रतिपादितान् ॥ १७ ॥ इच्छादिशक्तीः इच्छाशक्तिक्रियाशक्तिज्ञानशक्त्यादिकाःशक्तीः । मोचकादीः मोचिका
सूक्ष्मातिसूक्ष्माअमृत ज्ञानाअमृताख्यामिनी व्योमरूपिणीअनंताइत्यादि अणिमादीःअष्टसिद्धीः विमलादिकाश्चविमलोत्कर्षिण्यादिकाः अजात
विद्यासुअनादि नित्येषुवेदविद्यासु जातविद्यासु भारतपुराणादिषु आम्नातमूर्तीः प्रतिपादितमूर्तीः ॥ १८ ॥ ततानव्याप्तान् देशेषुचततान् काले
षुततत्वंनामनित्यत्वं देशेषुनतत्वंनामव्याप्तत्वं विग्रहान्रूपाणि चित्राकृतार्थेषचेतनाचेतनात्मक समस्तवस्तुषु । प्रतिवस्तुपाङ्क्तान् नारायणादिरूपैः
पृथिव्यबादिषुप्राणापानादिषुचस्थितानित्यर्थः ॥ १९ ॥ द्व्यष्टप्रवेष्टानि षोडशहस्तात्मकानि प्रवेष्टोनामहस्तउच्यते भुजबाहू प्रवेष्टोदोरित्यमरः ८०

जातुकदाचिदपिनजातानिनोत्पन्नानि परंतु प्रादुर्भूतान्येवेत्यर्थः । वीक्षेविशेषतःपश्यामि ॥ २१ ॥ एवंविधतयाहंभगवन् अनंतान् ईक्षेतान्गुणान् प्रत्येकमपिअनंतान् ईक्षे तवक्रियाश्चएवंअनंताः प्रत्येकमनंताश्चईक्षे एतेषुरूपेषुचगुणाननंतान् ईक्षेतत्रापितान् गुणानप्यनंतान् प्रत्येकमपिअनंतान् ईक्षे एतेषुरूपेषुक्रियाश्चअनंताः ईक्षेताश्चपुनःप्रत्येकमनंता ईक्षइत्यन्वयः ॥ २२ ॥ भूमानंपरिपूर्णत्वं अहमेनंतवभूमानंवीक्षमाणः किंचित्किंचिदपिवस्तु लोकेतवअंशांशदेश्यं । अंशांशेनापिसदृशं किंचिन्मात्रत्वेनापिसमंनेक्षेत्वमेवतवसदृशोनान्यस्त्वत्सदृशःक्वाप्यस्तीतिभावः । अंशांशदेश्यं अंशाएते एते अंशांशाइत्यादि विभागवत्वंनेक्षे । तवरूपेषु अवतारेषुगुणादिषुचसर्वत्र हीनोत्तमादिविशेषंनपश्यामि । किंतुसर्वत्रापि त्वांत्वदंशादिकमपिसर्वभूमा

नजातुजातानिननश्वराणि नजातुदुःखानिनदोषवंति ॥ अनंतसौख्यादिगुणात्मकानि वीक्षेतवैतानिवपूंषिचाहं ॥ २१ ॥ गुणानन ...नूभगवन्ननंतान् प्रत्येकमप्येवमपिक्रियांश्च ॥ एतेषुरूपेषुसभूषणेषु प्रत्येकमीक्षेभवतःप्रसादात् ॥ २२ ॥ भूमानमेवंतववीक्षमाणो नांशांशदेश्यंतवकिंचिदीक्षे ॥ मग्नांस्त्वयीक्षेमहदादिदेवा न्महार्णवाभ्यर्णनगापगाभान् ॥ २३ ॥ एवंविधायाखिलशिक्षणाय रामायचेतोनयनक्षणाय ॥ स्वामिन्पदाज्ञानतरक्षणाय तुभ्यंनमःशोभनलक्षणाय ॥ ॥ २४ ॥ इत्थंसगायंछतकोटिसंख्यं रामायणंभारतपंचरात्रे ॥ सब्रह्मसूत्राण्यपिसर्ववेदा न्व्याख्यांश्चसद्योरमतेधु..पि ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नं परिपूर्णमेवपश्यामीत्यर्थः । महदादिदेवान् महत्तत्वाद्यभिमानिभूतान् ब्रह्मादिदेवान् महार्णवाभ्यर्णनगापगाभान् महार्णवस्य अभ्यर्णमध्यपतंभासंगताः नगापगाः नद्यः तत्सदृशान् नदीनांसमुद्रप्रवेशेभिन्नत्वेपिच तुच्छत्वाद्यथानद्यादि व्यवहारोनास्तितथात्वयिमग्नब्रह्मादयोपिमग्नाः आभासाः भिन्नतयात्वय्येवावस्थिताअपि अप्रधानत्वान्नप्रदृश्यंते त्वमेवसर्वोत्कृष्टतयाप्रधानइत्यर्थः ॥ २३ ॥ चेतोनयनक्षणाय चेतसांपनमानयनानांच क्षणायपुनःपुनरप्युत्सवभूताय ॥ २४ ॥ महनुमानरामायणं मूलरामायणं सब्रह्मसूत्राणि सांतनिर्दोषाणि उत्तमानिच ब्रह्मसूत्राणि व्याख्यान् व्याख्यानंकुर्वन् सद्व्यः उत्तमेभ्योयोग्येभ्योधिकारिभ्यः रमतेरममाणोददते ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रेष्ठात्मकात् अत्युत्तमरूपयुक्तात् अतिश्रेष्ठभूतादितिवा । सर्वजीवप्रधानभूतादितिवा । श्रेष्ठसुतान् मुख्यप्राणसुतभूतात् मुख्यप्राणस्यश्रेष्ठसुतात् प्रधानात् कुमारात् हनूमतइतिवा । विशेषान्निशम्येत्यन्वयः । वदंतः स्वयंमभिभाषयंतः ॥ २६ ॥ तत्पालिते हनुमतापालिते सवल्लभाः सस्त्रीकाः किंपुरुषाः किंपुरुषकिंनरविद्याधरचारणादयः । किंपुरुषाः किंपुरुषखंडेविद्यमानाः जनाइतिवा । सोपायनाः उपायनसहितपाणयः तंहनुमतं सराघवस्य रामसहितस्य अस्यहनूमतः गुणान्वदंतः कीर्तयंतइति । रामगुणान्तद्भक्तवर्योयमित्यादिप्रकारेण अस्यगुणांश्चकीर्तयंतइत्यर्थः ॥ २७ ॥ गांधर्वपांडित्यं गंधर्वविद्याकुशलत्वं । अखंडंसमस्तंपरिपूर्णंच । अत्रहनूमत्समीपेगेयान् गानार्हान् रामजयध्वजान् रामस्यजयः शत्रुजयादिपराक्रमः । ध्वजः केतुभूतः श्रे

श्रेष्ठात्मकाच्छ्रेष्ठसुतान्निशम्य रुद्रादिदेवामुनिपुंगवाश्च ॥ तत्वेविशेषान्विविधान्वदंतः स्तुवंतिनारायणशिष्यमेनं ॥ २६ ॥ तत्पालितेकिंपुरुषाख्यवर्षे सवल्लभाः किंपुरुषावसंतः ॥ सोपायनानाथमुपासतेतं सराघवस्यास्यगुणान्वदंतः ॥ २७ ॥ गांधर्वपांडित्यमखंडमत्र गंधर्ववर्याःप्रातिदर्शयंतः ॥ गायंतिगेयान्पवमानसूनोः पराक्रमान्रामजयध्वजांस्तान् ॥ २८ ॥ चक्षाणस्तच्चक्षुषारामरूपं मन्वानस्तन्मारुतिर्मानसेन ॥ कर्णाभ्यामाकर्णयन्वक्तिवाचा भूम्नःकीर्तिंसर्वतोयोगभोगी ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ष्ठतयावर्तमानोयेषांहनूमत्पराक्रमाणांतेतथोक्ताः तान् रामदूताग्रणीरयमित्यादिप्रकारेणगानेक्रियमाणेसति रामपराक्रमएवहनूमत्पराक्रमरूपध्वजोभवतीति हेतोस्तत्धनुमत्पराक्रमाः रामजयध्वजाभवंतीत्यर्थः । रामजयाख्यचिन्होपेतानितिवा । तान् प्रसिद्धान् अत्युत्तमांश्च ॥ २८ ॥ योगभोगी योगस्यभोगः आभोगः परिपूर्णता तद्वान् योगभोगीत्युच्यते अणिमाद्यैश्वर्यपरिपूर्णइत्यर्थः । मारुतिः हनूमान् तत्तादृशाभितिप्रसिद्धं रामरूपंचक्षाणः पश्यन् मानसेनरामरूपंमन्वानः संचिंतयन् संस्मरन् कर्णाभ्यांभूम्नः कीर्तिमाकर्ण्यचक्षुपानयनेन मनसाध्यायन् शृण्वन् वाचावचनेन भूम्नः रामस्यकीर्तिंवक्तिवदति । गायतीत्यन्वयः । अनेनहनूमतः सर्वेंद्रियव्यापारोपिरामविषयोनान्यविषयः तस्मात्सर्वदापिसफलइतिभानोद्योतितोभवति ॥ २९ ॥ ॥ ॥

रामः इत्यायुक्तप्रकारेण श्रेष्ठभक्तायश्रेष्ठश्चासौभक्तश्चेतितथोक्तः तस्मै पवनसुताय पवनस्यप्राणदेवस्यसुतायहनुमते । कमलायैमहालक्ष्म्यैदत्त- शेषान् दत्वादत्वाशेषभूतान् लक्ष्मीदत्तेभ्यानंतरमेवविद्यमानान् लक्ष्म्याःहनूमतःस्वस्यचमध्ये अन्यस्यकस्यचिदपिकुत्रचिदपिकदाचिदपिकथंचिदपि व्यवधानरहिततयावर्तमानानितियावत्। हसितसितगुणबंधून् हसितंमंदहासएवामितगुःधवलरश्मिश्चंद्रःसएवबंधुर्येषांतेतथोक्ताः तान् । हसितारयरि बंधुभूतानितिवा । अनुरागातिरेकसंजातमंदहासात्मकचंद्रकिरणाभिवर्धितानित्यर्थः । प्रेमपीयूषसिंधून् प्रेमाख्यामृतस्यसमुद्रान् परमानंदहाख्यामृतसमुद्रानित्यर्थः। भुवनजननरक्षाभंगलीलाप्रसंगान् भुवनानांलोकानांजननंजन्मरक्षापालनं भंगःसंहारःतद्विषया यालीलास्तासांप्रसंगयुक्तान्; प्रकृष्टसंबंधसहितान् । अपांगान् अपांगनिरीक्षणानिवितरतिकरातीत्यन्वयः । अयमभिप्रायः । साक्षान्मुख्यप्राणभूतस्यश्रीमतोहनुमतः स्वभक्तचूडामणित्वात्स्वात्मनः परमानुग्रहवशाद्दलन्मंदस्मितारुणेंदुकोटिकांतिभिरतिशोभितान्साक्षान्मुख्यानुग्रहाख्यामृतरसवारिधिपूरपरिपूरितान्सकलचराचरात्मकप्रपं-

**इतिपवनसुतायश्रेष्ठभक्तायरामो हसितासितगुबंधून्प्रेमपीयूषसिंधून् ॥ भुवनजननरक्षाभंगलीलाप्रसंगा न्वितरतिकमलायैदत्तशेषानपांगान् ॥ ३० ॥ ॥ इति श्रीमत्संग्रहरामायणे उत्तरकांडे रामांके श्रीमत्त्रिविक्रमपंडिताचार्यसुतनारायणपंडिताचार्यकृतावष्टमःसर्गःसमाप्तः ॥ ८ ॥**

चस्य सृष्टिस्थितिसंहारानियमनज्ञानाज्ञानबंधमोक्षप्रदानाख्यलीलासमूह संघटितान्महालक्ष्म्याः समस्तभक्तेभ्योप्यनिशयिततयोत्तमत्वात्स्वभार्यत्वादिनाचकारणेन प्रथमतस्तत्रसंसक्तान् तदनंतरंश्रीमतोस्य हनूमतएवाशेषभक्ताग्रणीत्वात्तदनंतर व्यवधानेनैववर्तमानान्प्रतिदिनमपिप्रवहमानानपांगान् व्यतरत् अकरोत् करोतिकरिष्यतिच । सततमयंस्वामीश्रीरामदेवः संसारेणुकौचनवशंकरिष्यतीत्युक्तोर्थोत्यंतयुक्ततमइतिसर्वसमीचीनमभूदिति- स्थितं ॥ ३० ॥ । लिकुचकविवरार्योमूलरामायणार्थान्उद्धरदथविद्याभूषणार्योस्यटीकां ॥ व्याख्यतयथमनोज्ञांभावरत्नप्रदीप्तिं ममगर्मादिहादिव्यं चोत्तरकांडमेतत् ॥ १ ॥ ॥ इति श्रीमत्कविकुलतिलक पंडिताचार्य विरचित संग्रहरामायणोत्तरकांडस्य श्रीमद्विद्याभूषणयतिशिरोमणिभिर्विरचित भावरत्नटीकायां अष्टमःसर्गःसमाप्तः ॥ ८ ॥ ॥ संपूर्णोयंग्रंथः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥



**इदं पुस्तकं सावंतोपाव्ह रामचंद्रात्मज आबाजिना विद्वद्भिः परिसंशोध्य स्वकीय (रामतत्व प्रकाशाभिध) मुद्रायंत्रे अंकयित्वा प्रकटमकारि:--शकाब्दाः १८१२ बेळगांव.**